विधिनेत्यर्थः । अनेन प्रवर्तकाभावादनारंभः परिहृतः । श्रुतौ स्मृतौ चाध्ययनशब्दस्य तुल्यार्थतया प्राबल्यदौर्बल्यकल्पनमनर्थकम् । श्रुतिश्चास्ति– "वेदमधीत्य ... ... अभिसमावृत्य" इति । रागप्राप्तस्यापि स्वोपयोग्यर्थार्जनादेरिव श्रवणस्यापि विधिरवसरप्रदः । क्त्वाप्रत्ययः समानकर्तृकत्व-पूर्वकालत्वपरः, न त्वानन्तर्यपरः । स्नातकस्यापि श्रवणं घटते, श्रावयितुरिवावसरसंभवात् । न च उदकाहरणादिभिरनुष्ठानोपरोधः, अध्ययनविधिप्रयुक्तानां तन्निवृत्तौ निवृत्तेः । वित्तत्यागादि गुरोः फलम् । यावच्छ्रवणसमाप्ति हितैषिवचनादनुष्ठानोपपत्तिः । न च तर्हि मीमांसानैरपेक्ष्यम्, मूलजिज्ञासया स्वयं प्रतिपिपादयिषया च सापेक्षत्वात् । न च हितैषिवाक्यादनुष्ठानेऽशूद्रनयविरोधः, "न शूद्राय मतिं दद्यात्" इत्यादिभिर्ब्राह्मणैस्तस्यानुपदेशात् । क्रतुषु जप्यमन्त्रादीनां त्रैवर्णिकाधिकारोपनयनाङ्गकाध्ययनसापेक्षत्वाच्च । अतो रागतः प्रवृत्त्युपपत्तिः । **वेदवाक्यविचाररूप** शब्देन व्याख्येयैक्याच्छास्त्रैक्यं च सिद्धमित्यभिप्रेतम् ॥

**तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा ... ... तन्निर्णयफलवेदान्तविचाररूपशारीरकमीमांसायामधिकरोति ॥** (पृ. ४)

एवमस्तु, कथं पौर्वापर्यनियमः इत्यत्राह—**तत्र** इति । **निरूपिते**–कर्मस्वरूपमेव निरूपितम् । आवृत्तिविधानादिनाऽल्पास्थिरफलत्वं फलितमिति भावः । यद्वा कर्म निरूपितम्, न त्वाराध्यपरदेवता । तज्ज्ञाने सति हि [1] फलानन्त्यमिति भावः । "अन्नवानन्नादो भवति" इत्यानुषङ्गिकफलव्युदासाय **अमृतत्वरूप** शब्दः । **स्वाध्याय-मीमांसा-प्रयोजनवदर्था**दिशब्दाः [2] उभयभागसाधारणाः । एवमर्थत्रयमुपपादितम् ॥

---

1. फलस्यानन्त्यम्–क ग

2. उभयभागसाधारणाः । उपनिषदादयस्त्वसाधारणाः । एवमेकशास्त्र्यं पौर्वापर्यनियमः, ब्रह्मविचारारम्भणीयत्वं चेत्यर्थत्रयमुपपादितम्–ग.

**तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति ... ... "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादीनि ॥** (पृ. ४)

आपातधीजनकवाक्यानि सन्तीत्याह — **तथा च** इति । यथा सूत्रं व्याख्यातं, **तथा** इत्यर्थः । क्षयिफलत्वपरवाक्योपादानं क्वचिन्निर्णीतार्थसंवाददर्शनादर्थान्तराणामपि श्रद्धेयत्वाय । लोक्यत इति **लोकः** फलम् । फलद्वाराऽन्तवत्त्वमुक्तम् । "**अन्तवत्**" इति वाक्यं केवलकर्मपरम्, 'अविदित्वा' इति हि प्रकृतम् । ध्रुवफलासाधनत्वमाह — **न हि** इति । "ध्रुवं तत्" इति वाक्यखण्डः । तदुपपादयति — "**प्लवा हि**" इति । इति कर्मफलक्षयित्वपराणि । [1]अथोभयपरम्–**परीक्ष्य** इति । **ब्राह्मणः** ब्रह्म वेद, तदधीत इत्यण् । 'यः' इत्यध्याहार्यः, 'सः' इत्युक्तेः । **अकृतः**- [2]परः पुरुषः । इतिरध्याहार्यः । **एव** इति नियमविधिः । **श्रोत्रियम्**- श्रुतवेदान्तम् । **ब्रह्मनिष्ठम्**- ब्रह्मसाक्षात्कारिणम् । शमदमौ श्रवणोपयिकतादात्विकावधानमात्रहेतू, न त्वत्यन्त [3]बाह्यान्तरकरणविषयप्रावण्यत्यागः । स हि निरूपयिष्यते । **अक्षरं सत्यं**- स्वरूपतो गुणतश्चाविकारमिति चिदचिद्व्यावृत्तिः । **प्रोवाच**- प्रब्रूयात् । "छन्दसि लुङ्लङ्लिटः" इति विधौ लिट् । अथानन्तस्थिरफलवाक्यानि । "**ब्रह्मवित्**" इति [4]वाक्येनानन्त्यसिद्धिः । "यतो वाचः" इति हि प्रकरणम् । "**न पुनः**" इत्यादिकं मृत्युतत्कार्यनिवृत्तिपरम् । "न रोगं नोत दुःखताम्" [5]इति हि "**न पश्यः**" इत्यनन्तरं श्रूयते । **पश्य** शब्दविषय उक्तः– "**तदेकं**" इति । **स्वराट्**- अकर्मवश्यः । स हि स्वतन्त्रः । **तमेवम्**

---

1. अथोभयपराणि **ख**. 2. परमपुरुषः–**ग**.
3. बाह्यान्तःकरण–**ग**. 4. वाक्येनानन्त्यं सिद्धम्–**ख**.
5. इति ह्यनन्तरं श्रूयते–**ग**.

इत्युपायान्तरनिवृत्तिः । पृथक्त्वज्ञानस्योपायत्वं **पृथक्** इति । **जुष्टः**– प्रीतिविषयीकृतः ॥

**ननु च साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वं स्वर्गादीनां च क्षयित्वं ... ... ... तथैव धर्मविचारोऽपि कर्तव्य इति पश्यतु भवान् ॥**

(पृ. ४–५)

उदाहृतवाक्यमात्रतृप्तश्चोदयति– **ननु च** इति । क्षयिफलत्वज्ञानाय हि कर्मविचारः । तत् साङ्गाध्ययनसिद्धमित्यनन्तफलेच्छोस्तदेव जिज्ञास्यमिति चोद्यम् । **एवं तर्हि** — उदाहृत [1]वाक्यमात्रतृप्तोऽसि चेत् । **कृत्स्नस्य**– ब्रह्मणोऽपीति भावः । **सत्यम्** इति । आपातप्रतीत्यभ्युपगमः, [2] विचारनैरपेक्ष्येऽनभ्युपगमः । "अन्नवान्" इत्याद्यवगताल्पास्थिर[3] फलदाकाशप्राणादिशब्दैः, "तान्येवानुविनश्यति" इत्यनित्यत्वादिभिश्च संशयाद्यनतिवृत्तिः । **भवान्** —अनुदाहृतास्पष्टार्थवाक्यान्तरजिज्ञासुः । "अक्षय्यं ह वै" "अपाम सोममममृता अभूम" इत्यादिकं पूर्वभागेऽपि पश्येत्यर्थः । उदाहृतवाक्यैः [4]तृप्तिश्चेत् उत्तरत्रापि स्यात् । अनुदाहृतैरतृप्तिश्चेत् पूर्वत्रापि स्यात् । सान्तानन्तादिविरुद्धार्थधीरुभयत्र तुल्येति विचार्यत्वमविशिष्टमित्युक्तं भवति ॥

लघुपूर्वपक्षः ।

**ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम् । ... ... ... अतो यत्प्रधानं शास्त्रम्, तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥**

(पृ. ५)

---

1. वाक्यतृप्तोऽसि–**अ.**
2. 'विचारनैरपेक्ष्येऽनभ्युपगमः' इति **ग** पाठे न.
3. फलादाकाश–**अ. ग.**
4. तृप्तिश्चेत् पूर्वत्रापि स्यात् । सान्तानन्तादि ... इत्युक्तं भवति । अथ स्वरूपेण–**ग.**

इत्थं कर्मण. फलद्वारा ह्यानाय निरूप्यत्वमुक्तम् । अथ स्वरूपेणोपादानाय निरूप्यत्वमुपपादयितुं नियमेनानपेक्षितत्वमुखेन चोदयति— **ननु च** इति । प्रथम एवकारोऽपेक्षितद्वित्वव्युदासाय, द्वितीयस्त्वनपेक्षितस्य पूर्ववृत्तत्वव्युदासाय । ततः किमित्यत्राह — **न धर्म** इति । कुत इत्यत्राह— **अधीत** इति । वेदान्तमात्राध्यायिनस्तत्रैवाऽऽगतप्रतीतेरित्यर्थः । यद्वा कृत्स्नाध्यायिनोऽपि सुकृतवशात उत्तरत्रापेक्षोत्पत्तेरिति । तदा अपेक्षितांशस्याप्यधीतत्वम **अधीत** इति पदार्थः । शङ्कते — **कर्म** इति । प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्येषु सामावयवेषु द्वितीय उद्गीथः । उपासनस्य कर्माङ्गताप्रतीतिव्युदासाय **आश्रय** शब्दः । हेतुगर्भं पदमिदमशक्यत्वे । सोपालम्भं प्रति वक्ति — **अनभिज्ञ** इति । प्रधानप्रतिपाद्यं ज्ञानं न वेत्सीत्यर्थः । तत्किमित्यत्राह— **अस्मिन्** इति । ज्ञातृज्ञेयज्ञानरूपो **भेदः**, अवान्तरभिदया **विविधः** । सः **अविद्याकृतः** । अनवस्थापरिहारः **अनादि** शब्देन । [1] आविद्यभेददर्शनहेतुकजन्मजरादिनिरसनीयत्वाय **दुःखसागर** शब्दः । **मिथ्याज्ञानं** — भ्रान्तिज्ञानम , मिथ्याभूतज्ञानं वा । ज्ञाननिवर्त्यत्वाय मिथ्यात्वोक्तिः । **आत्मैकत्वविज्ञानम्** — चन्द्रैकत्वविज्ञानं हि तद्भेदभ्रमनिवर्तकम् , न कर्म इत्यर्थ । **क** – न क्वापि । ज्ञानोत्पत्तितत्साधनानुग्रहतत्फलेषु न क्वापीत्यर्थः, **प्रत्युत**— भेदवासनाहेतुत्वादिति भावः । उद्गीथादिधियामौपनिषदत्वात , ब्रह्मविद्यापेक्षितास्ताः ; अतः शारीरके तच्चिन्तनं साक्षात्सङ्गतमित्यत्राह— **उद्गीथ** इति । कुत इह चिन्तेत्यत्राह— **ज्ञान** इति । **तु**शब्दौ शङ्काद्वयव्यावर्तकौ । **अतः** इति । प्रासङ्गिकापेक्षितं न पूर्ववृत्तम्, किन्तु प्रधानापेक्षितमेवेत्यर्थः ॥

**बाढम ; तदपेक्षितं च कर्मविज्ञानमेव ; कर्मसमुच्चितात् ज्ञानादपवर्गश्रुतेः । वक्ष्यति च, ‘ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ”**

---

1. अविद्याभेददर्शन-क.; जन्मकर्मजरा ख.

**इति । .. ... ... इति विभागो न शक्यते ज्ञातुम् । अतस्तदेव पूर्ववृत्तम् ॥** (पृ. ५)

अत्र भास्करीयाः प्राहुः **बाढम्** इति । सिद्धान्तिन इति च संप्रदायः, अङ्गत्वोपगमसाम्यात् । पूर्वं तूचितं **कर्म** इत्यादेस्तद्ग्रन्थस्थत्वात् । **बाढम्** इति [1] नियतापेक्षितस्य वृत्तत्वे संमतिः, न कर्मेत्यत्र विमतिः । किं नियतापेक्षितमित्यत्राह — **तत्** इति । त्वदनभिमतमेवेति भावः । कुत इत्यत्राह — **कर्म इति** । **श्रुतिः** च "यज्ञेन" इत्यादिः । [2] समुच्चयः — संबन्धमात्रम् । **चः** प्रतिपादकसमुच्चये । ततः किमित्यत्राह — **अपेक्षिते च** इति । पदार्थप्रतिपत्तौ न [3] वाक्यार्थप्रतीतिरिति भावः । [4] निगमयति— **अतः** इति ॥

समसमुच्चयवादिमतावलम्बनेन पार्श्वस्थः चोदयति — **बाढम्** इत्यादिना इति च निर्वाहः सांप्रदायिकः । तदा समप्रधानतया [5]ऽन्वयः **समुच्चयः** विवक्षितः । **श्रुतिः** च "विद्यां चाविद्यां च" इत्यादिः । **चः** प्रतिपाद्यसमुच्चये । अङ्गभावं च वक्ष्यतीत्यर्थः । ज्ञानोत्पत्तेः प्रागङ्गभावस्य तदभ्युपगमात् । उपरि पूर्ववत् । यद्यपि यादवप्रकाशमते कर्मधियः पूर्ववृत्तत्वमनभिमतं, तथापि तदभिमतं कर्मण उभयथाऽपेक्षितत्वमुपजीव्य पार्श्वस्थेन [6] चोदयित्वा पूर्ववृत्तत्वमापाद्यते इति निगमनग्रन्थाविरोधः ॥

**नैतद्युक्तम्; सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवावि-**

---

1. नियमापेक्षितस्य-**ग**.
2. कर्मसमुच्चयः-कर्मसंबन्धः-**ग**
3. वाक्यार्थधीः-**ग**
4. 'केनेति नित्यनैमित्तिकयोः समुच्चयः, न तु काम्यनिषिद्धयोरिति विभागो न ज्ञायेतेत्यर्थः' इति **ग** पाठे अधिकः ।
5. अन्वयलक्षणः समुच्चयः-**ग** 6. चोदयता-**अ**

**द्यानिवृत्तेः । अविद्यानिवृत्तिरेव हि मोक्षः । ... ... ... कथमिव साधनं भवेत् ?** (पृ. ५)

मृषावादी [1] प्रतिवदति — **नैतत्** इति । कथमयुक्तत्वमित्यपेक्षायां, कर्मणोऽपेक्षितत्वे संभावितं कृत्स्नं प्रकारं दूषयिष्यन्, किं समुच्चयशब्देन समप्रधानतयाऽन्वयो विवक्षितः, उत समुच्चयशब्दस्य संबन्धमात्रपरत्वं विवक्षित्वा तेनाङ्गतया संबन्धोऽभिधित्सित इति विकल्पमभिप्रेत्य, प्रथमे शिरसि साध्यद्वित्वं साधनद्वित्वं च ग्रन्थद्वयेन व्युदस्यति– **सकल** इत्यादिना । **सकलभेदाः**– सजातीयविजातीय [2] स्वगतभेदाः । तेषां **प्रत्यनीकं**– सर्पादीनां रज्जुवत् । **मात्रचा** व्यावृत्तिरूपभेदव्युदासः । [3] कर्मसाध्याभिमतप्रतिबन्धनिवृत्तेर्ज्ञानसाध्यत्वस्य "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिभिः प्रतिपादनान्न साधनद्वित्वमित्यर्थः । [4] **निवृत्तिरेव**– प्रतिबन्धे निवृत्ते नित्यप्राप्तस्य प्राप्तिर्न साध्येति भावः । ततः किमित्यपेक्षायां कर्मणो मोक्षविरोधित्वं "प्रत्युत विरुद्धमेव" इति प्रागुक्तं विवृणोति— **वर्ण** इति । आदिशब्दो निषिद्धादिपरः । **भेददर्शननिवृत्तिरूप** इति — कारणाज्ञाननिवृत्तिः कार्याज्ञाननिवृत्तिगर्भेति तद्रूपत्वम् । **कथमिव** – न कथञ्चित् ॥

**श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं ज्ञानस्यैव मोक्षसाधनत्वं च ... ... ... ... "तमेव विदित्वाऽतिमृत्युमेति" इत्याद्याः ॥** (पृ. ५–६)

श्रौतोऽर्थो न तर्कबाध्य इत्यत्राह — **श्रुतयश्च** इति । पूर्वं वस्तुविरोध उक्तः । **अनित्यफलत्वेन** इति–फलद्वारा विरोधः । **अन्तवत्** इति

---

1. प्रतिवक्ति-**अ.**
2. स्वगताः-**अ.**
3. कर्मसाध्यतयाऽभिमत-**ग.**
4. अविद्यानिवृत्तिरेव-**ग.**

बहूनां बहुकालानुष्ठितानामभ्यन्तवत्त्वम् । **तद्यथा** इति—फलद्वारा विरोधो दर्शितः । ज्ञानस्योपायत्वं, प्राप्तृप्राप्यभेदविरहः, प्रतिबन्धनिवृत्तेरेव साध्यत्वम्, उपायान्तरनिषेधश्च "**ब्रह्मवित्**" इत्यादिवाक्यैः सिध्यति । एवं तर्कानुगृहीतस्फुटार्थानेकश्रुत्यनुगुणार्था "विद्यां चाविद्यां च" इति श्रुतिरिति भावः ॥

**यदपि चेदमुक्तं, यज्ञादिकर्मापेक्षा विद्येति ... ... ... "...समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्" इति ॥ (पृ. ६)**

अथ यज्ञादिश्रुतेर्विद्यायाः कर्मसापेक्षत्वपरतां व्युदस्यति— **यत्** इति । **यज्ञादिकर्मापेक्षा विद्या** इति वचनव्यक्त्या समप्रधानतया वाऽङ्गतया वा यत्कर्मापेक्षितमुक्तं, तद्विद्वासनाहेतुत्वात् सन्नन्तपदश्रवणाच्च मनःशुद्धिद्वारेणेच्छार्थमित्यर्थः । समसमुच्चयप्रतिपादकताव्युदासपरत्वे **फल**शब्दो मोक्षपरः । अङ्गत्वपरताव्युदासपरत्वे वेदनपरः । "विविदिषन्ति" इत्येतत् 'असिना जिघांसति' इतिवत् स्यादिति शङ्कायां, प्रथममितिकर्तव्यतात्वेन ज्ञानोत्पत्त्युपायतां व्युदस्यति— **विविदिषायाम्** इति । **शमादीनामेव**— निवृत्तिरूपशमादेः प्रवृत्तिरूपयज्ञादिभिर्विरोधान्न समुच्चय इति भावः । "विविदिषन्ति" इति शब्दस्वारस्यभञ्जकन्यायनिरीक्षणविलम्बेनातुल्यत्वात् न विकल्प इत्यभिप्रेत्य **श्रुतिरेव** इत्युक्तम् । क्त्वाश्रुत्या हि शीघ्रप्रतिपत्तिः । इच्छार्थमपेक्षितत्वेऽपि कथं कर्म त्यज्यते, शमादिः स्वीक्रियते ? इत्यत्राह— **अन्तरङ्ग** इति । कर्मापेक्षा ज्ञानस्येच्छाद्वारेण व्यवहिता ; उत्पन्नायामपीच्छायां ज्ञानोत्पत्तौ शमाद्यपेक्षितमिति तदन्तरङ्गमिति भावः ॥

**तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य ......अर्थस्वभावादेवेदमेव पूर्ववृत्तमिति ज्ञायते ॥ (पृ. ६–७)**

अथ विविदिषार्थं कर्मज्ञानं पूर्ववृत्तं स्यादिति शङ्कां च व्युदस्यन्

ज्ञानोत्पत्तौ करणत्वं व्युदस्यति— **तदेवम्** इत्यादिना । इदं संभवतीति निरस्यते, न त्वभ्युपेतमिति । **एवम्**— उक्तोपपत्तिभिः समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वेऽनुपपन्ने इत्यर्थः । इच्छार्थे तज्ज्ञानस्यास्मिन् जन्मनि संपाद्यताव्युदासाय **जन्मान्तर**शब्द । अनेकजन्मसंसिद्ध्यपेक्षत्वेनेह जन्मन्यप्यनुष्ठेयत्वशङ्काव्युदासाय **शत**शब्दः । कार्यकल्यं हि कारणमिति भावः । स्वर्गादिप्रदस्य कथमिच्छार्थत्वमित्यत्राह — **अनभिसंहित** इति । **मृदितकषायस्य** — मृदितपापस्य । "**सदेव**" इति कारणवाक्यम् । "**सत्यम्**" इत्यादि शोधकम्। व्यावृत्तिविशदाय "**निष्कलम्**" इत्यादि । ऐक्यवाक्यम् "**अयमात्मा**" इति। तात्पर्यलिङ्गपुष्कलम् "**तत्त्वमसि**" इति। सामान्यतो विशेषतश्च ऐक्यसिद्धिः । वाक्यं [1] करणं, न कर्मेत्यर्थः । [2]निदिध्यासनविधिवैयर्थ्यमाशङ्क्याऽऽह-**वाक्यार्थ** इति । अवैयर्थ्यज्ञापनाय तानि शिक्षयति — **श्रवणम्** इति । **विद्याप्रतिपादकानि**— विद्यानिष्पादकानि इत्यर्थः । **इति**— समुच्चयाङ्गाङ्गिभावयोरनुपपन्नत्वात् । **एवंरूपस्य** — बन्धनिवृत्तौ कर्मानपेक्षवाक्यार्थज्ञानोपक्रमभूतस्य । तच्च किमित्यत्राह— **तच्च** इति । साधनचतुष्टयस्य वृत्तत्वे हेतुं वस्तुसामर्थ्यमाह— **अनेन** इति । नित्यानित्यविवेकान्नित्येच्छा अनित्यजिहासा च; तदुपयोगी शमादिरिति कथमनेन विना जिज्ञासेति भावः । शमादिकं वृत्तमस्तु ; कर्म चापेक्षितमस्त्विति शङ्कायामाह — **अर्थस्वभावादेव** इति । अयोगव्यवच्छेदहेतुरर्थस्वभाव एवान्ययोगव्यवच्छेदस्यापि हेतुरित्यर्थः । शमादिकं हि निवृत्तिरूपत्वात् कर्मप्रतिक्षेपकम् । कर्मणो भेदावलम्बित्वं, ज्ञानस्य कर्मानपेक्षत्वं चेति ज्ञानकर्मणोरर्थस्वभावौ गर्भितौ ॥

**एतदुक्तं भवति — ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं .........उक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यम्** ॥ (पृ. ७)

---

1. करणमिति न कर्म-अ, ग.    2. निदिध्यासनवैयर्थ्य-ग.

कथं विशेषप्रत्यनीकेऽध्यासः? कथं तन्निवृत्तौ कर्मानपेक्षा? मनसः कथं मालिन्यनैर्मल्ये? कश्चार्थस्वभावः? इत्याशङ्कायामुक्तं सङ्कलय्य दर्शयति— **एतदुक्तम्** इति । स्वरूपतिरोधेरध्यासः । **भेददर्शनमेव,** न सत्यं किमपि । तथा सति हि कर्मापेक्षा । ततः किं बन्धस्य ज्ञानमात्र-निवर्त्यत्वे इत्यत्राह— **बन्धश्च** इति । **समूलः**– अविद्याभेददर्शनसहितः । **ज्ञानेनैव,** न तु कर्मणा । न हि सर्पभ्रमनिवृत्तौ रज्जुधीः कर्मापेक्षा । एवं समुच्चयव्युदासः । अथ करणत्वं व्युदस्यति—**निवर्तकं च** इति । **तस्य**— कर्मानपेक्षस्य; **एतस्य** — अद्वैतविषयस्य । तत्र हेतुः **वाक्य-जन्यत्वम्; कार्यम्** बन्धनिवृत्तिः । तर्हि कुत्रेत्यत आह—**विविदि-षायामेव** इति । श्रुतिप्रतिपन्नायामेवेति भावः । स च कथमित्यत्राह— **स च** इति । नैवं श्रुतमित्यत्राह—[1] **इतीमम्** इति । **इमं** प्रणाड्या **उपयोगम् अभिप्रेत्य** उक्तमित्यर्थः । प्रकृतमुपसंहरति–**अतः** इति । **अतः**– ज्ञानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः । अत्र व्याख्यातार आहुः—

“विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् ।
ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च ॥

शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः ।
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका ॥” इति ॥

इति लघुपूर्वपक्षः ।

---

1. इतीमम् इति । इति —वस्तुविरोधादिभिः करणेतिकर्तव्यतात्वा-योगात् । इमम् —प्रणाड्यौपयोगम्—ग.

लघुसिद्धान्तः ।

अत्रोच्यते — यदुक्तम् 'अविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवति' इति, तदभ्युपगम्यते । अविद्यानिवृत्तये वेदान्तवाक्यैर्विविदिषितं ज्ञानं किंरूपमिति विवेचनीयम् ... ... तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च ॥ (पृ. ७)

अस्मिन् पूर्वपक्षे सिद्धान्त उच्यत इत्याह — अत्र इति । साध्य-साधनद्वित्वनिरासमभ्युपगमेन प्रतिवक्ति — यत् इति । तर्हि कुत्र विमति-रित्यत्राह — अविद्या इति । किंरूपम् — [1] कर्माङ्गकत्वार्हं मदुक्तं ज्ञानम्, उत तदनर्हं त्वदुक्तमिति साधनप्रकारविशेषे विमतिः । परमतं स्वमतं चाह — किं वाक्यात् इति । न तु परमतविकल्पः । त्वन्मत-मयुक्तमित्याह — न तावत् इति । [2] न तु दूष्यशिरसोरन्यतरदूषणम् । कुत इत्यपेक्षायां विधिवैयर्थ्यं हेतुमाह — तस्य इति । न हि [3] व्युत्पन्नस्य शब्दश्रवणादर्थबोधो विध्यपेक्षः । प्रत्यक्षविरोधं च हेतुमाह — तावत् इति । इदं [4] दूषणद्वयम् आपस्तम्बेन चोक्तं — "बुद्धे क्षेमप्रापणं, तच्छास्त्रैर्विप्रति-षिद्धम्; बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" इति । उपासन-ध्रुवानुस्मृतिदर्शनभक्ति[5] यावज्जीवानुवृत्तिनिष्क्रमणमार्गविशेषपरबहुशास्त्रविरोधः शास्त्रैरिति [6] विवक्षितः । विशेषतः प्रतिषेधः विप्रतिषेधः; प्रबलैः प्रतिषेधः, [7] न तु समैरुपरोध इत्यर्थः ॥

---

1. कर्माङ्गत्वार्हं–ग

2. न तु दूष्यशिरसोरन्यतरदूषणम् । आपस्तम्बेन चोक्तम्–ख ( मध्ये ग्रन्थपातः–ख )

3. व्युत्पन्नशब्दश्रवणात्–ग 4. दूषणमापस्तम्बेन–ग

5. यावज्जीवानुष्ठानादिविशेषमार्गविशेष–ग

6. विषयः–क 7. न समैः–ग

**न च वाच्यम्–भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनयति ... ... ... अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम् ॥** (पृ.७-८)

अनयोः [1]परिहारद्वयं परोक्तमनूद्य निरस्यति—**न च** इति । [2]इदानीमुत्पद्यमानज्ञानव्यावृत्त्यर्थमाह–**अविद्यानिवर्तकम्** इति । पश्चादपि तत् वाक्यतश्चेद्यैव ततस्तत् स्यादित्यत आह –**भेद** इति । व्यासादीनामपि [3]ज्ञानानुदयवादः श्रोतृधियो दुरारोह इति बाधितानुवृत्तिमाह–**जातेऽपि** इति । सर्वमूलाविद्यैक्यात् **सर्वस्य** इत्युक्तम् । **न दोषाय**—मूलाज्ञानानिवर्तकत्वं [4]न दोषाय । तर्हि[5]बन्धकं स्यादित्यत्राह— **अनिवृत्तमपि** इति । **छिन्नमूलत्वेन**—छिन्नाविद्याख्यमूलत्वेन । श्रवणादेर्वाक्यार्थज्ञानोपयोगाच्छास्त्र[6]विरोधपरिहारश्च अर्थात् सिद्ध इत्यभिप्रेतम् । अनुत्पत्तिपक्षं दूषयति–**सत्याम्** इति । न्यायानुगृहीतव्युत्पन्नपदशक्तिरूपं वाक्यम् **सामग्री** । प्रतिबन्धकस्थित्या तद्वैकल्यमाशंक्याह—**सत्यामपि** इति । बाधकोत्पत्तौ [7]बाध्या वासना न प्रतिबन्धिकेत्यर्थः । [8]बाधितानुवृत्तिं दूषयति–**सत्यपि** इति । **भवता**—कृत्स्नमिथ्यात्ववादिना । 'भवता' इत्यभिप्रेतं विवृणोति— **भेद** इति । ऐक्यज्ञानोदयेऽपि किं वासना स्थिता, उत तन्निवृत्तावपि भेदधीरिति

---

1. परिहारं-अ　2. इदानीमुच्यमान-क　3. ज्ञानानुदयः–क, ग

4. न दोषाय । ज्ञानोदयेऽपि भ्रमानिवृत्तौ दृष्टान्तं दर्शयति–चन्द्रैकत्व इति । तर्हि बन्धकं–ग

5. बद्धं–अ　6. विरोधपरिहारार्थत्वात्–अ　7. बाध्यवासना–अ

8. "यथा क्वचिद्देशे 'सर्पः' इति वाक्याच्चिरभ्रमितः पुरुषः 'न तत्र सर्पः' इत्याप्तोपदेशात् जानाति । यथा च 'वनं न दग्धम्' इति श्रुत्वा चिरं भ्रान्तस्य पश्चात् तत्र गत्वा अंगारादिलिंगदर्शनेन 'दग्धम्' इति ज्ञानं जायते, तद्वदित्यभिप्रायेण आप्तोपदेशलिंगादिभिर्बाधकज्ञानोत्पत्तिदर्शनात् इत्युक्तम् । अथ" इति–ग पाठे अधिकः ।

शिरोद्वये प्रथमं दूषयति — **ज्ञानोत्पत्तावपि** इति । [1] स्वयं नाशे तत्कल्पसि-भ्रमस्तस्यापि तथेति भावः । द्वितीयं दूषयति--**वासना** इति । **छिन्नमूलम्** - छिन्नवासनाख्यमूलम् । **बालिशभाषितम्** इति । [2] मुक्तिर्विना ज्ञानेन स्यात्, तच्च श्रवणादिभिर्विना स्यात्, विनाऽपि अविद्यया जगद्भ्रमः स्यात्, सा च विनाऽधिष्ठानेन स्यात् इति भावः । तर्हि कथं [3] द्विचन्द्रज्ञानानुवृत्ति-रित्यत्राह — **द्विचन्द्र** इति । तिमिरं [4] पारमार्थिकं, न मिथ्या इति तस्य ज्ञानाबाधितत्वात् । तर्हि उपदेशवैयर्थ्यमित्यत्राह — **प्रबल** इति । ऐन्द्र-जालिककृतभयादिव्युदासाय **प्रबल** इत्यादिपदम् । [5] याथार्थ्यापरोक्ष्यार्थ-प्रवृत्तिद्वारा वा [6] सार्थत्वम् । एवं परपक्षे बाधकस्थितौ बाध्यस्थितिरहेतुक-कार्योदयश्च, स्वपक्षे तदुभयाभाव इति वैषम्यं दर्शितम् । सिंहावलोकित-केनानुत्पत्तिं [7] दूषयति—**अपि च** इति । अदृष्टद्वारा चेन्निवर्त्यं सत्यं स्यादिति दृष्टद्वारा निवर्त्यत्वे दूषणमिदम् । अतः पारिशेष्यान्मुक्त्युपायज्ञानं वाक्यार्थ-धियोऽन्यदित्याह—**अतः** इति ॥

**तथा च श्रुतयः— "विज्ञाय प्रज्ञां कुर्वीत," "अनुविद्य विजानाति" ... ... ... "यस्तद्वेद यत् स वेद स मयैतदुक्तः" इत्यत्र, "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति ॥**

---

1. स्वयं नाशेऽपि—ख

2. " अकारणककार्योत्पत्तिप्रसङ्गः इत्यर्थः । तथा सति "—इति ग पाठे अधिकः ।

3. द्विचन्द्रज्ञानानिवृत्तिः—ख 4. पारमार्थ्यं-ख

5. रज्जुसर्पादिभ्रान्तिमत्पुरुषापेक्षया भयादिनिवृत्तिः फलत्वेनोक्ता । द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वधीनिवृत्तिरित्यादि फलम् । — इति ग पाठे अधिकः ।

6. साधनार्थत्वम्—अ 7. अनुत्पत्तिविषयं दूषयति-ख

**तथा च** इति। न परं पारिशेष्यादवगम्यते, श्रूयते चेत्यर्थः। उपसर्गविशेषसन्निधिप्रत्यय[1] योगायोगेऽप्यैकार्थ्यज्ञापनार्थं सामान्यशब्दानां छागपशुन्यायाद्विशेषपर्यवसानज्ञापनार्थं चानेकवाक्योपादानम्। **निचाय्य**— "चायृ दर्शने [2]"। **इति** शब्दः स्वरूपे; **एवं** शब्द उपसर्गयोगादिप्रकारे। "**प्रज्ञां कुर्वीत**" इत्यादिषु ज्ञानमात्रं विधेयं प्रतीयते, न ज्ञानविशेष इत्यत्राह — **अत्र** इति। **अत्र** — उदाहृतवाक्यसमुदाये। **आदि**शब्दात् 'आत्मानं ध्यायथ" इत्यादेः [3] ग्रहणम्। छागपशुन्यायात् ध्यानरूपविशेषे पर्यवसानमित्यर्थः। तर्हि ल्यबन्तपदाभ्यां "**अन्वेष्टव्यः**" इत्यनेन च किमुच्यत इत्यत्राह — **वाक्यार्थ** इति। सामान्यशब्दः [4] श्रवणादौ विशेषे पर्यवस्येदित्यत्राह — "**श्रोतव्यः**" इति। श्रवणादिपर्यवसाने विध्यानर्थक्यादप्राप्तस्य ध्यानस्य विधेयत्वमाह — **तस्मात्** इति। उक्तार्थस्य सौत्रतामाह — **वक्ष्यति** इति। सूत्रार्थमाह—**तदिदम्** इति। तृतीयलक्षणावसाने प्रकृतं श्रुतिषु सामान्यशब्दोक्तं वा **तदिदम्** इत्युक्तम्। हेतुमाह — **विदि** — इति। स्थलत्रयमुदाहरति — "**मनः**" इति। "**न स**" इत्यादौ व्यवधानाभावान्न **अत्र** शब्दः। अत्रादौ चोपासिः श्रुतः, "अथ योऽन्यां देवतामुपास्ते" इति। क्वचिदादौ, क्वचिदाद्यन्तयोः, क्वचिदन्ते च विशेषशब्दः। क्वचिदन्ते, क्वचिन्मध्ये, क्वचिदादौ च सामान्यशब्दः इत्युदाहरणत्रयविभागः। इदं वाक्यं "रात्रिसत्र"वाक्यवत् द्रष्टव्यम्। तत्र हि विधिवाक्यनिर्दिष्टा रात्रीः अर्थवादे "य एता रात्रीः" इत्यनूद्य [5] फलत्वेन प्रतिष्ठा [6] समर्प्यते। तद्वदत्रापि विधिवाक्यनिर्दिष्टमुपासनमर्थवादे "य एवं वेद" इति विदिनाऽनूद्य, तत्फलत्वेन "भाति

---

1. योगायोगयोरप्यैकार्थ्य-ग
2. "इति धातुः। इत्येवमाद्या इति" इति-ग पाठे अधिकः।
3. विजिज्ञासितव्य इत्यादेश्च ग्रहणम-अ
4. श्रवणे विशेषे-ग 5. तत्फलत्वे-अ 6. समाप्यते-ग

च" इत्यादिना भानतन्ने समर्थ्येते । "यस्तत्" इति । यः — वेदिता रैक्वः; यत् — वेद्यं ब्रह्म; सः — एतच्चोभयं तवोक्तमित्यर्थः । "मे अनुशाधि" इत्यन्वयः । कस्मिंश्चित् प्रकरणे सामान्यशब्दनिर्दिष्टस्य तत्तुल्यप्रकरणान्तरे विशेषशब्देनोक्तिः प्रागुक्ता । एकैकस्मिन् प्रकरणे व्यतिकरेणोक्तिरत्रोक्ता । एतत् द्वयमपि सूत्रे पूर्वत्र च हेतुतया विवक्षितम् । [1] एकत्रोक्तिर्लाघवाय । **तदिदम्** इत्यादि सूत्रव्याख्यानम् । न चेत् 'अपवर्गोपायतया [2] विधित्सितं ध्यानम्' इत्युच्येत, न तु वेदनमिति ; अन्यथा शृङ्खलितोक्तिप्रकरणवैरूप्यात् ॥

**ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम् – "ध्रुवा स्मृतिः । ... ... ... ... ... ... "उपासनं स्यात् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ॥** (पृ. ९–१०)

[3] पूर्वप्रकृतध्यानं विशिनष्टि — **ध्यानं च** इति । स्मृतीनां ध्रुवत्वं विजातीयस्मृत्यव्यवधानम् । **अपवर्गोपायत्वश्रवणात्** — 'निदिध्यासितव्यः' इत्यादिविहितध्यानमेव "ध्रुवा स्मृतिः" इत्यत्र फलैक्यादवगतमित्यर्थः । कतिपयविशेषं [4] प्रदर्शयतः सूत्रकृतोऽभिप्रेतं विशेषान्तरमाह — **सा च** इति । **समानाकारत्वम्** — विशदावभासरूपत्वम् । कुत इत्यत्राह "**भिद्यते**" इति । **हृदयग्रन्थिः** — अज्ञानम्; यद्वा **हृदयः** — हृद्गतः आत्मा, तस्य **ग्रन्थिः** — प्रकृतिसंबन्धः । उपायफलानुभवदशासाधारण्यात् प्रागविवृतस्य "द्रष्टव्यः" इति पदस्यार्थमाह — **एवम्** इति । **एवं च सति** — निर्णायकवाक्यान्तरे सति इत्यर्थः । कथं स्मृतेर्दर्शनरूपतेत्यत्राह–

---

1. एकत्रैकैकोक्तिः-ग 2. विधित्सितध्यानं-अ; विधीयमानं ग

3. पूर्वप्रकृतस्यार्थं विशिनष्टि-अ 4. प्रदर्शयता सूत्रकृता-अ

**भवति** इति । "वृक्षे वृक्षे च [1] पश्यामि" इतिवदिति भावः । अयमर्थः सूत्रतात्पर्यज्ञैरप्युक्त इत्याह —**वाक्य** इति । **प्रपञ्चितम्**—पूर्वपक्षसिद्धान्तरूपेणेत्यर्थः । **तद्विषये श्रवणात्** — [2] व्यतिकरप्रयोगादिनेत्यर्थः । वाक्यं व्याचष्टे— **सर्वासु** इति । न परं छान्दोग्य इति भावः । **मोक्षसाधनतया विहितम्** इति अर्थान्तरधी[3]श्रवणादिव्युदासः । उक्तार्थस्य पूर्वपक्षत्वशङ्काव्युदासायाह— "**सकृत्**" इति । **सिद्धम्**— सिद्धान्तः । द्वित्रावृत्तिमात्रव्युदासाय **असकृत्**-शब्दः । सूत्राभिप्रेतस्य [4] वाक्ये कण्ठोक्तिं दर्शयति— **उपासनम्** इति । **तस्यैव** — मोक्षसाधनस्यैव । उपासनशब्दवाच्यत्वादसकृदावृत्तत्वम् ॥

**सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता । दर्शनरूपता च प्रत्यक्षतापत्तिः । ... ... ... ... ... "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च ॥ अतः साक्षात्काररूपा स्मृतिः ... ... तेनैव लभ्यते पर आत्मेत्युक्तं भवति ॥** (पृ. १०)

वाक्यकृतोऽप्यभिप्रेतं विशेषान्तरं प्रागस्मदुक्तमित्याह — **सेयम्** इति । वाक्यकारेणैव तुल्यन्यायतयाऽ[5]र्थादुक्तमिति वार्थः । **सेयम्** — असकृदावृत्ता ध्रुवा च । 'दीर्घदर्शी' इतिवत् दर्शनशब्दस्य धीसामान्यपरत्वं मा भूदित्याह — **दर्शन** इति । प्रत्यक्षसमानाकारतापत्तिरित्यर्थः । 'श्रोतव्य' इत्यादिधीविशेषान्तरवाचिपदैः समभिव्याहारात् 'द्रष्टव्य' इत्यस्यापरोक्ष्यरूपधीविशेषपरत्वमेव न्याय्यमिति भावः । विशेषान्तरपरा श्रुतिरस्तीत्याह — **एवम्** इति । **एवम्**—सामान्यविशेषनयादिति भावः । **प्रवचनम्** मननम्; कारणे कार्योपचारः । अत्र कथं [6] स्मृतेर्विशेषितत्वं, ध्यानादेरनुपायत्वमेव प्रतीयत

---

1. पश्यामि भावः—अ  2. व्यतिक्रमेण प्रयोगादित्यर्थः-ग
3. श्रवणव्युदासः—ख  4. वाक्यकारकण्ठोक्तिम्-ग
5. अर्थादुक्तमिति वा—अ, ग  6. स्मृतेर्विशेष्यत्वं-ग

इत्याशङ्कायां प्रथमप्रतीतमर्थमाह — **अनेन** इति । "न पृथिव्यामग्निः चेतव्यः" इतिवदिति **केवल**शब्दस्य भावः । ततः किमित्यपेक्षायां लोकनीतिं दर्शयति — **प्रिय** इति । ततोऽपि किमित्यत्राह — **यस्य** इति । **यस्य** — उपासकस्य; **अयम्** — परमात्मा । परमात्मविषयप्रीतिमत एव तत्प्रीतिविषयत्वमित्यत्र मानतया प्रियतमत्वकार्यवरणविवरणाय स्मृतिमर्थपूर्वकं दर्शयति —**यथा** इति । **अयम्** —भगवति प्रीतिमान् । **सततयुक्तानाम्**- आशंसायां क्तः । तद्विवरणायाह — **प्रियो हि** इति । लोकस्मृत्यनुगृहीतश्रुत्या ध्रुवानुस्मृतेर्विशेषितत्वं दर्शयति — **अतः** इति । **स्मर्यमाणात्यर्थप्रियत्वेन**—"अर्थेनैव विशेषो हि निराकारतया धियाम्" इति भावः । **अत्यर्थप्रिया** — अत्यर्थानुकूला ॥

**एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वात् भक्तिशब्दस्य । ... ... ... ... "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इति ॥** (पृ. १०–११)

तर्हि कथं भक्तेरुपायत्वोक्तिरित्यत्राह–**एवम्** इति । "सेवा भक्तिरुपास्तिः" [1]इति हि नैघण्टुकाः । बहुश्रुत्यैकार्थ्यान्मोक्षोपायवेदनस्य भक्तिरूपत्वमुपपाद्य, अथ [2]श्रुतिस्मृत्यैकार्थ्यादेव तदुपपादयति —**अत एव** इति । **अतः** – भक्तिरूपोपासनस्य मुक्त्युपायवेदनत्वात् । "यस्मात् परं [3]नापरम्," "महान् प्रभुर्वै पुरुषः" इति पूर्वापरावगतभगवत्परो मध्यस्थशिवशब्दः पुरुषसूक्तैकार्थ्यादिति ज्ञापनाय श्वेताश्वतरवाक्यमुपात्तम् । उपायान्तरनिषेधकण्ठोक्त्या "ततो मां तत्त्वतः" इति वाक्यार्थनिश्चायकतया ज्ञानदर्शनप्राप्तीनां भक्तिसाध्यत्वकण्ठोक्त्या च "**नाहं वेदैः**" इत्युदाहृतम् ।

---

1. इति नैघण्टुकाः–अ 2. श्रुतिस्मृत्यैकार्थ्यादितदुपपादयति –अ ग

3. नापरमस्ति किञ्चित्–ग

[1] विषयैक्यप्रत्यभिज्ञया तदुपायैक्यमिति ज्ञापनाय "**पुरुषः स परः**" इत्याद्युपात्तम् ॥

**एवंरूपायाः ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणि इति "यज्ञादिश्रुतेरश्ववत्" ... ... ... ... एवंनियमयुक्तस्याऽऽश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति ॥** (पृ. ११–१२)

एवमस्तु, ततः किं [2]कर्मसापेक्षत्वस्येत्यत्राह—**एवंरूपाया** इति । **एवंरूपायाः**–उक्तानेक[3] विशेषणविशिष्टायाः । तत्तदवस्थाभेदः कर्मसाध्य इति भावः । **ध्रुवानुस्मृतेः**—न तु विविदिषाया इत्यर्थः । [4] परमसाध्येच्छोरेवावान्तरसाध्ये प्रवृत्तेः, वेदनेच्छोरेव तदर्थेच्छार्थमनुष्ठानमित्याश्रय इति भावः । अभ्युपेत्याह—**यद्यपि** इति । **तदुत्पत्तये**– विविदिषोत्पत्तये । विद्यायाः कर्मणश्च यावज्जीवानुवृत्तावाश्रम[5] शेषस्य विद्याङ्गत्वे च सूत्राणि दर्शयति— **वक्ष्यति च** इति ॥

अथाप्रमाणतां शमादिविरोधं च परिजिहीर्षन्नाह — **वाक्य** इति । **ध्रुवानुस्मृतेः** इत्यनेन वाक्यस्थतच्छब्दो व्याख्यातः । केवलस्य यज्ञादेः शमादेश्च व्युदासाय **एव**कारः । इतरेतरयोगे द्वन्द्वः; तेन विकल्पव्युदासः । स हि प्रतीत्यनुष्ठित्यपूर्वफलानां [6] पाक्षिकत्वाधिरष्टदोषः । **संभवः**–युक्तिः । **निर्वचनम्** — आगमः । के पुनस्ते? कथं च शमाद्यविरोधः? इत्यत्राह —**विवेक** इति । **इतिः** भाष्योक्तिः, [7]**अत्र** इत्यादिश्च । विषयाननुभुक्त्वा **स्थातुमशक्तिर्येन** स विकारः **अभिष्वङ्गः** । अनभिष्वङ्गेन क्रोधाद्य-

1. विषयैक्यप्रत्यभिज्ञायां तद्वदुपायैक्यम्–ग.
2. कर्माक्षेपत्वस्य–क.
3. विशेषविशिष्टायाः–अ.
4. चरमसाध्य–क.
5. शेषस्यास्य–अ.
6. पाक्षिकाणां बाधैः–अ.
7. तत्र इत्यादि च–क

भावश्च फलितः । कामाद्रि क्रोधः । [1]**आरंबणम्** — आलंबनम्, शुभाश्रयः। नात्र साध्याविशिष्टता, कालान्तरसंशीलनस्य योगोपकारकत्वात् । **भाष्यकारः** – द्रमिडाचार्यः । अतः सर्वं निर्वचनं तेन दर्शितमिति विज्ञायते। **स्मार्तम्** इति । श्रौतस्य "अथ मुनिः" इत्यस्यास्फुटार्थत्वात् स्फुटार्थं स्मार्तं दर्शितम् । **शक्तितः** — न ह्यशक्यं विधीयते । **ब्रह्मविदाम्** — न तु ब्रह्मविविदिषूणाम् । **क्रिया**शब्दविवरणमाह — **तमेतम्** इति । **अभिध्या** — [2]परकीये स्वत्वबुद्धिः, परकृतापकारानवरतस्मरणं वा, निष्फलचिन्ता वा । **आदिशब्दः** "अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम्" इत्याद्यार्जवादिपरवाक्यपरः । **शोकवस्तु** — शोकनिमित्तं वस्तु । **आदिशब्देन** भयनिमित्तं वस्तूक्तम् । अतीतागाम्यनिष्टज्ञाननिमित्तचित्तविकारौ शोकभये । **च** शब्दो भिन्नक्रमः । **तज्जं च** — बन्धुजनदैन्यदर्शनजं च दैन्यमित्यर्थः । **अभास्वरत्वम्** — स्वप्रवृत्त्यक्षमत्वम् — **दैन्य**शब्दविवरणं; भास्वरत्वविरोधीति **दैन्य**विशेषणम् वा । यद्वा भिन्नवाक्यतया योजनीयम् — देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च जनितमभास्वरत्वं मनसोऽवसादः । किमुक्तं भवतीत्यत आह — **तज्जं दैन्यम्** इति । देशकालवैगुण्यादिजनितं मनसो दैन्यम् [3]**अवसादः** इत्युक्तं[4] भवति । अवसादलक्षणमात्रं वाक्योक्तम् । **तद्विपर्ययः** इति तु भाष्यम् । **बलं** — मनोबलम् । **तद्विपर्ययजा** इति । देशकालसाद्गुण्यातीतानागतप्रीतिनिमित्तवस्तुज्ञानादिजा । **उद्धर्ष**लक्षणेन तद्विपर्ययः फलित इति नोक्तः । कथं "स्वाध्यायशौचसन्तोष" इत्यादिषु योगाङ्गतयोक्तस्य सन्तोषस्य हेयत्वमित्यत्राह — **अति** इति । पदेषु व्याख्यातेषु वाक्यार्थमाह — **एवम्** इति । प्रवृत्तिनिवृत्तिरूपताविभागात् पृथङ्निर्देशः । त्वदभिमतेनैवेति **एव**काराभिप्रायः । अविहितनिषिद्धकाम्यनिवृत्तिरूपशमादेः विहितप्रवृत्तिरूपयज्ञादेश्च विरोध इत्यभिप्रायः ॥

1. आरंभणम्-क 2. परकीयस्य-ख
3. मनसोऽवसादः-ग 4. निरुक्तः-ख

**तथा च श्रुत्यन्तरम्— "विद्यां चाविद्यां च यस्तद्वेदोभयं सह । ............ ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥" इति ॥** (पृ. १२-१३)

मानं च दर्शितम् । अथ स्वमते श्रुत्यन्तरं च प्रमाणयन् शङ्कर-यादवप्रकाशमतयोजने च व्युदस्यन् "विद्यां च" इति श्रुतिमुपादाय व्याचष्टे— **तथा च श्रुत्यन्तरम्** इत्यादिना । **श्रुत्यन्तरम्** इति — सन्-रहिततया यज्ञादिश्रुतिविलक्षणा । समसमुच्चयवादिभिश्च [1] तत्परतया च स्वीकृता श्रुतिरित्यर्थः । परैः स्वाभिमतप्रमाणतयोक्तमपि मदुक्तार्थपरमित्यर्थः । अत्र किं कर्मवाचीत्यत्राह— **अत्र** इति । **अत्र**— न तु 'श्रूयतां चाप्यविद्यायाः" [2] इत्यादौ । पदद्वयेन [3] विहितकर्मज्ञानव्युदासः । वाक्यार्थं योजयति—**अविद्यया इति । ज्ञानोत्पत्तिविरोधि**; न तु फलविविदिषा-विरोधीति [4] भावः । **प्राचीनं कर्म**— न तु विद्यावदुत्तरपूर्वाघविरोधित्वमिति भावः । **तीर्त्वा (?)— अपोह्य** । 'प्राप्य स्थितः' इति अस्वारस्य-मध्याहारश्च गत्यन्तरसद्भावान्न [5] युज्यत इति भावः । **कर्मज्ञान**शब्दाभ्यां "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" इति स्मृतिः स्मारिता फलोपायविरोधिसाधारणस्य मृत्युशब्दस्य प्रकृतिप्रत्ययार्थवेदनतदिच्छाहेतु-साधारणस्य यज्ञादिवाक्यस्य [6] चार्थनिष्कर्षार्थम् । अस्यां स्मृतौ, "ततो ज्ञानं प्रवर्तते" इति हि कर्मसाध्यतया ज्ञानमेवोच्यते; न तु [7] मोक्षो वा विविदिषा वा । अविद्याशब्दस्य कर्मवाचित्वे [8] सहेतुकं

---

1. तत्परतया स्वीकृता-क. 2. इत्यादिपदद्वयेनाविहित-अ.
3. विहितकर्मज्ञानव्युदासः-ग. 4. भावः । अपोह्य-अ.
5. न सा युज्यते-क. 6. चार्थनिष्कर्षार्थं स्मारिता-ग.
7. मोक्षो विविदिषा वा-अ.
8. सहेतुकं दर्शयति । कर्ममात्रस्य निरसनीय-अ. (मध्ये ग्रन्थ-पातः-अ पाठे).

दर्शयति—**मृत्युतरण** इति । **प्रतीता**—प्रतीतिस्वारस्यादित्यर्थः । **विद्येतरत्**–'तदन्यार्थे नञ्' इत्यर्थः । न स्वविहितकर्म ज्ञानं चेति भावः । उक्तं स्पष्टयितुमाह— **यथोक्तम्** इति । **ज्ञानम्**— आगमोत्थम् ; **विद्या**—विवेकादिजा । **तर्तुम्** इति । तरतेः प्राप्त्यर्थत्वव्युदासः ॥

**ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधिःवेनानिष्टफलतया ... ... ... कर्ममीमांसावसेयमिति, सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥** (पृ. १३)

[1]कर्ममात्रस्य निरसनीयत्वोक्तिरयुक्ता, [2]पापमेव हि धर्मनिरसनीयं श्रूयत इत्याशङ्कयाह — **ज्ञान** इति । कथं पुण्यपापरूपस्य कर्मणः "पापमपनुदति" इति पापशब्देन निर्देश इत्यत्राह — **ब्रह्म** इति । [3]"न सुकृतं, न दुष्कृतं, सर्वे पाप्मानः" इति प्रयोगोऽप्यभिप्रेतः । रजस्तमसी हि तद्विरोधिनो इत्यत्राह – **अस्य च** इति । [4]अस्य तयोश्च [5]तादृक्त्वे प्रामाणिके हि द्वारद्वारिभावक्लृप्तिरित्यत्राह – **पापस्य च** इति । **अधो नयनम्** – उपास्तिवैमुख्यकरणं संसारपतनहेतुतया तत्रोक्ता । रजस्तमसोस्तथात्वं दर्शयति –**रज** इति । **एव** इत्याप्ततमत्वसूचनम् ॥

ततः किमित्यत्राह — **अतश्च** इति । **चः** त्वर्थः शङ्कानिवृत्तिपरः । अन्वयव्यतिरेकसमुच्चयपरो वा । [6]केन निरास इत्यत्राह **तत्** इति । **अनुष्ठितेन** – न तु ज्ञातमात्रेण । अविद्याशब्दार्थस्य निरासकस्य धर्मत्वं,

1. 'प्राचीनं कर्म' इति कर्ममात्रस्य-**ग.**
2. पापमिव कर्म निरसनीयम्- **क**
3. एतेन न सुकृतम्-**ग.**
4. अस्य तयोश्च तादृक्सूचनम्-**अ** ( मध्ये ग्रन्थपातः-**अ** पाठे )
5. तादृशत्वे-**ग**
6. केन निरास इत्यत्राह-तदेवमिति-**ख** (मध्ये ग्रन्थपातः-**अ**)

मृत्युशब्दार्थस्य निरसनीयस्य च पाप्मत्व स्पष्टयन्तीं श्रुतिं दर्शयति — **तथा च** इति । ततः किमित्यत्राह — **तदेवम्** इति । **तत्** — श्रुतिस्मृत्युपपत्तिसूत्रवाक्यकारवचनैः । **एवम्** — स्वोत्पत्तिविरोधिनिरासाय । ततः किं ब्रह्मविचारस्य कर्मविचारापेक्षत्व इत्यत्राह — **अतः** इति । **अतः** — ब्रह्मविद्यायाः कर्मसापेक्षत्वात् । **अपेक्षित** — इति । हानायोपादानाय चेत्यर्थः । **सैव** — त्वत्प्रतिक्षिप्तैवेति भावः ॥

**अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते ... ... ... तस्माद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि । तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसम्मता ॥** (पृ. १३)

एवं कर्मविचारस्य पूर्ववृत्तत्वमुपपादितम्; अथ परोक्तसाधन[1]चतुष्टयस्य पूर्ववृत्तत्वं निरस्यति — **अपि च** इति । **मीमांसा** इत्युभयभागोक्तिः । **फलम्** — भुक्तिमुक्ती; **करणम्** — यज्ञादिकमुपासनं च; **इतिकर्तव्यता**— [2]प्रयाजादिका साधनसप्तकं च; बुभुक्षुर्मुमुक्षुश्चाधिकारी । पदार्थनिश्चयाद्वाक्यार्थनिश्चयवत् तत्तदधिकरणाधीनप्रातिस्विकार्थनिश्चयात् पुरुषार्थतत्साधनसमुदायनिश्चय इति भिदा साङ्गाध्ययनाधीननित्यानित्यापातप्रतीतिः स्वर्गापवर्गसाधारणीति न [3]साऽन्यविरागमुमुक्षुत्वहेतुः । [4]काणादादिशास्त्रान्तरं तु नित्यानित्यविपरीतधीहेतुर्वियत्परमाण्वादिनित्यताद्युक्तेः; अनवसरग्रस्तं च [5]पुरुषस्य प्रथममध्ययनविधिगृहीतत्वात् । पुराणादि च श्रुतवेदार्थोपबृंहणम्; न स्वातन्त्र्येण नित्यादिनिश्चायकम् । तथा सति तेनैव ब्रह्मस्वरूपनिश्चयेन

1. चतुष्टयपूर्ववृत्तत्वं निरस्यते–ग
2. प्रयाजादिका यज्ञशमादिका च–अ
3. सामान्यविराग–ग
4. कणादादि–ग
5. 'पुरुषस्य प्रथममधिष्यते' (अत्र ग्रन्थपातः)–अ

शारीरकवैयर्थ्यप्रसङ्गात् । शमादि तु निरूपयिष्यते — "शमदमाद्युपेतः स्यात्" इति । अतः पश्चाद्भाविनो न पूर्ववृत्तत्वमित्यर्थः ॥

एवं व्याख्येयवेदस्वभावात् कर्मब्रह्ममीमांसयोः पौर्वापर्यमुक्तम् । अथ व्याख्यानरूपमीमांसास्वभावाच्च कर्मचिन्तायाः पूर्ववृत्तत्वमाह — **एषाम्** इति । **एषां** — शमादीनाम्; **विनियोगः** — अङ्गत्वज्ञापनम् । **तार्तीयः** — तृतीयाध्यायसिद्धः । [1] इदं प्रदर्शनार्थम् । तत्र तत्र पूर्वकाण्डोक्तकृत्स्नन्याय-सापेक्षत्वादिति भावः ॥

अथाभ्युच्चयहेतुमाह — **उद्गीथादि** इति । **समृद्धिः** — [2] अप्रतिबद्ध-फलत्वम् । अन्यतरस्योभयोर्वा अपेक्षाविरहेऽपि सादृश्यादिना धीस्थत्वं प्रासङ्गिकत्वमिति तद्व्युदासाय प्रथममुद्गीथादिधियो ब्रह्मचिन्तापेक्षामाह — **ब्रह्मदृष्टि** इति । ब्रह्मविद्याया एतदपेक्षामाह — **तान्यपि** इति । तच्छन्दो विद्योत्पादककर्मपरः । **सुतराम्** — उभयापेक्षयेत्यर्थः । कर्माङ्गाश्रयत्वात् पूर्वत्र ब्रह्मदृष्टिरूपत्वादुत्तरत्र च चिन्त्यत्वे प्राप्ते [3] कर्मसमृद्ध्यर्थे च साधारणेऽपि, पूर्वत्र ब्रह्मणोऽचिन्तितत्वात् तद्दृष्टिरूपोद्गीथादिधियां चिन्तनं तत्राशक्यमित्य-भिप्रेत्य **इहैव** — इत्युक्तम् । अस्त्वेवं सङ्गतिः, तथाऽपि किमित्यत्राह — **तेषाम्** इति । एवमुद्गीथविद्याविचारस्य साक्षात्सङ्गतत्वात्, तदपेक्षितं कर्मचिन्तनं [4] पूर्ववृत्तमित्यभ्युच्चयहेतुः । एकदेशाध्ययनं त्ववैधम् । कृत्स्नाध्यायिनोऽपि सुकृतवशादुत्तरस्यैवापेक्षा चेत्, तत्रापि फलाध्याय एव सा किं न स्यात्? तस्य समन्वयलक्षणाद्यपेक्षाऽस्ति चेत्, इहापि पूर्वभागचिन्तापेक्षा तुल्या । आपाततोऽ[5]नन्तप्रतीतिस्तु पूर्वत्रापि तुल्येत्युक्तम् । अतोऽधीतक्रमेण कर्म-

---

1. इदं प्रदर्शयितुम्-अ 2. अप्रतिबन्धफलत्वम्-ग
3. कर्मसमृद्ध्यर्थत्वे च-ग
4. पूर्ववृत्तमिति समुच्चयहेतुः । एकदेशाध्ययने च वैधम्-अ
5. अनन्तस्थिरप्रतीतिस्तु-ग.

विचारप्राथम्यात् तन्न्यायसापेक्षत्वात् ब्रह्मविचारस्योद्गीथादिचिन्तापेक्षितत्वाच्च कर्मविचारस्यैव पूर्ववृत्तत्वम् ॥

इति लघुसिद्धान्तः ।

---

महापूर्वपक्षः ।

**यदप्याहुः — अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः, तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतम् ........ वस्तुस्वरूपोपदेशपरैः शास्त्रैः निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या इत्यभिधानात् ॥** (पृ. १३-१६)

एवं पूर्वपक्षोक्तहेतुषु [1] वस्तुसामर्थ्यव्यतिरिक्ता हेतवः उपायपरवाक्यालोचनया परिहृताः । वस्तुसामर्थ्यं तूपेयपरवाक्यपर्यालोचनया विस्तरेणोपन्यस्य परिहरणीयमिति कृत्वा तत् पूर्वं न परिहृतम् । अतस्तद्विस्तरेणोपन्यस्यते — **यदप्याहुः** इत्यादिना ... **सर्वे वेदान्ता आरभ्यन्ते** इत्यन्तेन । **यदप्याहुः** इति अपिशब्दबहुवचनाभ्यामस्यार्थस्य प्राधान्यं बहुग्रन्थकाराभिमतिश्च सूचिते । [2] चिन्मात्रसत्यत्वमन्यमिथ्यात्वं च प्रतिजानीते— **अशेष** इत्यादिग्रन्थद्वयेन । **अशेषविशेषः**— [3] ज्ञात्रादिः व्यावृत्तिरूपश्च । **प्रत्यनीकत्वम्**— वस्तुतस्तदन्वयानर्हत्वम्, ज्ञातत्वेन तन्निवर्तकत्वं च । **चित्**-शब्देन तुच्छत्वं व्युदस्यते । **मात्र**चा ज्ञातृत्वज्ञेयत्वे । **एव** इति । सगुणं तु काल्पनिकमिति भावः । चिन्मात्रसत्यत्वं प्रतिज्ञातम्; अथ एवकाराभिप्रेतं [4] समूलबन्धधीनिवर्त्यत्वसिद्धये [5] तदन्यमिथ्यात्वमाह— **तत्** इति । [6] **तदतिरेकि**— "नेह नाना" इत्यादि [7] निषेधास्तदन्यविषया

---

1. वस्तुसामर्थ्यव्यतिरिक्तहेतवः-**ग**
2. चिन्मात्रसत्यत्वं तदन्य-**ग.**
3. ज्ञातृत्वादिः-**ग.**
4. समूलबन्धस्य-**ग.**
5. चिदन्यमिथ्यात्वम्-**अ.**
6. तद्व्यतिरेकेण-**ग.**
7. निषेधस्तदन्यविषयः-**अ.**

इति भावः । **नाना** शब्दविषयं दर्शयति— **ज्ञातृ** इति । **तत्कृत** इति स्वरूपप्रयुक्तनाव्यावृत्तिः । **भेदः** तु अवान्तरवैविध्यम् । **आदि** शब्दो जन्मजरामरणादिपरः । **सर्वम्** इति । [1] अतदधिष्ठानः परमार्थश्च न कश्चिदर्थ इत्यर्थः । **एव** इत्यधिष्ठानानेकत्वव्युदासः स्वप्रकाशत्वरूपविरोध-शङ्कास्फोरणं च ॥

प्रतिज्ञातयोर्मानमाह— " **सदेव** " इत्यादि । षड्विधतात्पर्यलिङ्गकं कारणवाक्यं विजातीयसजातीयस्वगतभेदाभावपरम् **सदेव** इति । **एव**कारार्थ-स्पाष्ट्याय कारणवाक्यान्तरमुदाहरति— " **अथ परा** " इति । **अद्रेश्यम् अग्राह्यम्**— प्रत्यक्षानुमित्य [2]गोचरः, चक्षुस्तदन्याक्षागोचरो[2] वा । **गोत्रम्**— नाम । **सर्वगतम्** — [3] अधिष्ठानतयाऽऽश्रितम् । अथ शोधकवाक्यम्— " **सत्यम्** " इति । कारणवाक्यशोधकवाक्यान्तरैकार्थ्ये [4] सामानाधिकरण्यै-र्निर्विशेषपरत्वमभिप्रेतम् । सत्यादिवाक्यस्य व्यावृत्तिपरत्वस्पाष्ट्यायाह— " **निष्कलम्** " इति । **कलाः**— अवयवाः । **शान्तम्** इत्यादि—[5] ऊर्मि-षट्करहितमित्यर्थः । " **यस्य** इति— ज्ञेयत्वनिषेधः । " **न दृष्टेः** " इति ज्ञातृत्वनिषेधः । असुखव्यावृत्तिः " **आनन्दः** " इति । अथ चिदन्य-मिथ्यात्वमाह— " **इदं सर्वम् .. आत्मा** " इति । 'रज्जुरेव सर्पः' इतिवत् बाधार्थे [6] सामानाधिकरण्यमभिप्रेतम् । 'तस्मिन्नेव' इति प्रति-ज्ञातं ब्रह्मणः सर्वाध्यासाधिष्ठानत्वं च सूचितम् । बाधं [7] स्फुटयति— " **नेह** " इति । भेददृगज्ञ इत्याह " **मृत्योः** " इति । अत्र **मृत्युः**— **अविद्या** । तर्हि कदाचिन्निवृत्तिः स्यादित्यत्राह— " **यत्र हि** " इति ।

---

1. अतदधिष्ठानं—ग. 2. गोचरं—ग.
3. सर्वजगतामधिष्ठानतया श्रुतम्—ग.
4. सामानाधिकरण्ये निर्विशेष—ग.
5. षडूर्मिकर्मतत्फलरहितमित्यर्थः-अ. षडूर्मिकर्मसंबन्ध-ग
6. सामानाधिकरण्यमित्यभिप्रेतम्—अ. 7. स्पष्टयति—ग.

**यत्र**— यदा; **तत्**— तदा । ‘इतरेण’, ‘कः’ इति च पदद्वयमध्याहर्तव्यम् । दृष्टान्तेनोपपादयति— “**वाचा**” इति । उक्तमृत्युकार्यभेदधीफलं दर्शयति— “**यदा**” इति । अथ चिन्मात्रसत्यत्वतदन्यमिथ्यात्वपरं [1] सूत्रद्वयम्— “**न स्थानतः**” इत्यादि ॥

अथ पुराणोक्तिमर्थद्वयेऽपि दर्शयति — **प्रत्यस्तमित** इति । **प्रत्यस्तमितभेदम्** — सजातीयविजातीयस्वगतभेदरहितम् । **सत्तामात्रम्**- व्यावृत्तिरूपभेदरहितम् । तुच्छतां व्युदस्यति — **आत्मसंवेद्यम्** इति । स्वप्रकाशमित्यर्थः । तत्र हेतुः — **ज्ञानम्** इति । **अत्यन्तनिर्मलम्** — नित्यास्पृष्टदुःखित्वज्ञातृत्वादिभेदम् । **अर्थः** — देवादिः । “**नान्योऽस्ति**” इति जगदपारमार्थ्यमुक्तम् । [2]तद्विवरणाय “**यदेतत्**” इति [3]श्लोकद्वयम् । उक्तभ्रमनिवृत्तिः तत्त्वज्ञानेन इत्याह — **ये तु** इति । जीवैक्यप्रकरणमाह— **तस्य** इति । **एकमयम्** — एकम् । ‘**आत्म**’ ‘**पर**’ शब्द[4]निमित्तात्मभेदशङ्कां व्युदस्यति — **यदि** इति । निदर्शयति — **वेणु** इति । उपदिशति — “**सोहम्**” इति । यथोपदेशमनुष्ठानम् — **तत्याज** इति । [5] जीवब्रह्मभेदनिवृत्तिः — **विभेद** इति । अर्थद्वयेऽपि श्रीगीतोक्तिः — “**अहमात्मा**” इति । ‘भूत’शब्दस्य शरीरमात्रस्पाष्ट्याय आह — “**क्षेत्र**” इति । अन्यमिथ्यात्वम् — “**न तदस्ति**” इति । अनन्यपरत्वमुक्तम् — **वस्तुस्वरूप** इति ॥

**मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् ……… दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या ॥** (पृ–१६)

---

1. सूत्रद्वयं दर्शयति–**ग.** 2. तद्विवरणम्–**ग**
3. श्लोकद्वयोक्तभ्रमनिवृत्तिः–**ग**
4. निमित्तभेदशंकां–**ग** 5. जीवब्रह्मनिवृत्तिः–**ग**

न अत्यन्तासत्त्वं मिथ्यात्वम्, ख्यातेर्निरसनीयाभावेन शास्त्रवैयर्थ्य-प्रसङ्गाच्च; न चान्यत्र सतोऽन्यत्र ख्यातत्वम्, क्वाऽपि सत्यत्वप्रसङ्गा-दित्यत्राह — **मिथ्यात्वम्** इति । **प्रतीयमानत्व** इत्यसद्व्यावृत्तिः । **यथावस्थित** इति सद्व्यावृत्तिः । **प्रतीयमानत्वपूर्वक** इति तन्नियमपूर्वकत्वं विवक्षितम् । 'अब्भक्ष' इतिवत् । **ज्ञाननिवर्त्यत्वम्** इति — ज्ञानमात्र-निवर्त्यत्वम् । **वस्तुशब्दः** कर्मधारयशङ्काव्युदासाय । एवं सति मुद्गरादि-निवर्त्यशक्त्युपबृंहित ज्ञाननिवर्त्यभ्रान्तिज्ञाननिवर्त्यसम्यग्जतनिवर्तकधीप्रागभाव-व्युदासः । [1] न च भूरन्ध्रधीनिवृत्तरज्जुसर्पेऽतिव्याप्तिः, तस्यापि यथा-वस्थितरज्जुधिया निवर्तनार्हत्वात् । निदर्शयति — **यथा** इति । ननु [2] रज्ज्वादेर्जडत्वेन स्वरूपानवभासादध्यासः; स्वप्रकाशवस्तुनि तु स कथमित्य-त्राह — **दोष** इति । दोष एवाध्यासप्रयोजकः, [3] स्वतो वा परतो वा भानं तत्त्वध्यासोपयोगि [4]अधिष्ठाने भातेऽपि हि सः इति भावः । मिथ्यालक्षणं तस्य दोषकल्पितत्वं च दृष्टान्ते दर्शितं दार्ष्टान्तिकेऽतिदिशन् शङ्काद्वयं च शमयति — **एवम्** इति। कथमेकत्र बह्वध्यास इति शङ्कां व्युदस्यति — **पर** इति । [5] अधि-ष्ठानवैलक्षण्यात् रज्जौ सर्पभूरन्ध्रादिवदिति भावः । सर्वज्ञे कथं भ्रान्तिरिति च शङ्कां व्युदस्यति — **पर** इति । सर्वज्ञत्वादयः सगुणब्रह्मणः, न तु परस्येत्यर्थः । **दोष** इत्यादिपदैः प्रागुक्तार्थद्वयातिदेशः । **इदं**—प्रतीयमानम् । नानाविधत्वविवरणम् **देव** इत्यादिपदम् ॥

1. न च भ्रमरज्जुधीनिवृत्तरज्जुसर्पेऽतिव्याप्तिः, यथावस्थितवस्तु-निवर्तनार्हत्वात्-अ.

2. रज्ज्वादौ-अ. रज्ज्वादौ रज्जुत्वेन स्वरूपा-ग.

3. स्वतः परतो वा-अ. स्वतः परतो वा भानं त्वध्यासोपयोगि । अधिष्ठाने भाते ह्यध्यास इति भावः । मिथ्यात्वलक्षणम्-ग.

4. अधिष्ठाने भासे तर्ह्यध्यासः-अ.

5. अधिष्ठानवैलक्षण्यात् । रज्जौ सर्पभ्रमादिवत्-अ. रज्जौ सर्प-भूरन्ध्रादिभ्रान्तिवत्-अ.

दोषः कः? स सत्यश्चेन्न धीनिवर्त्यः; न चेद्दोषान्तरापेक्षया अनवस्था। स चेत् ब्रह्मण्यतिरोहिते [1] कल्प्यते, भ्रमानुदयानुच्छेदयोरन्यतरः स्यात्। तिरोहिते चेत्; यदि तिरोधिः स्वतः, अनिवृत्तिः [2] स्वरूपनिवृत्तिर्वा स्यात्। परतश्चेदनवस्था। नानाध्यासा नानादोषमूलाश्च दृष्टा इति बहुशङ्कापरिहारायाह— **दोषश्च** इति। **अविद्या** इति, **सदसदनिर्वचनीय** इति, **अनादि** इति, **स्वरूपतिरोधानविविधविचित्रविक्षेपकरी** इति शब्दैरिमाः शङ्काः प्रत्युक्ताः ॥

**"अनृतेन हि प्रत्यूढाः," "तेषां सत्यानां सतामनृतमपिधानम्" ... ... ... ... ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते ॥** (पृ—१६)

एवंविधाविद्यायां मानमाह — **अनृतेन** इत्यादिना। **प्रत्यूढाः** — प्रतिबद्धाः। प्रत्यूढशब्दविवरणायाह— **तेषाम्** इति। बहुवचनम् "अदितिः पाशान्" इतिवत्। "**नासदासीत्**" [3]इत्यनिर्वचनीयत्वम्। **तमो** हि सूक्ष्मावस्थप्रकृतिः, न तु मिथ्यारूपाविद्येत्यत्राह— "**मायां तु**" इति। बहुभ्रमहेतुत्वमाह— "**इन्द्र**" इति। धिया विना दुर्निरसत्वमाह — "**मम**" इति। अनादित्वमाह— "**अनादि**" इति। **आदिशब्दः** प्रागुक्तस्वरूपपरश्रुतिस्मृतिगणपरः। **इन्द्र-महेश्वरादिशब्दैः** सविशेषत्वशङ्कां [4] निरस्यन् वाक्यानामर्थमाह — **निर्विशेष** इति। स्वरूपपरवाक्यैकार्थ्यात् दोषपरवाक्येष्वपि निर्विशेषं वस्तु दोषाश्रयतया विवक्षितमित्यर्थः। **स्वगत** इति अधिष्ठानभूतेन स्वेन [5] संबन्धमवगम्यते। यत इति पूरणम् ॥

---

1. कल्पयति-अ, क. 2. निवृत्तौ स्वरूपनिवृत्तिः स्यात्-ग.

3. इत्यनिर्वाच्यत्वम्-अ, ग. 4. व्युदस्यन्-ग.

5. संबद्धमवगम्यते इति पूरणम्-अ. संबद्धम् अवगम्यते, यतः इति पूरणम्-ग.

**यथोक्तम्** :—

**" ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।**

... ... ... ... ... ... .... .... ।

**एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥" इति ॥**

(पृ. १६–१७)

स्वरूपपरैरिव वाक्यैर्निर्विशेषं वस्तु दोषाश्रयतया [1] दोषपरस्मृत्या अपि ज्ञायते इत्याह— **यथा** इति । **वस्तु** शब्दो वक्ष्यमाणदेवादिपरः । विविधं ज्ञायतेऽनेनेति **विज्ञानम्** अविद्या । भेददर्शनस्याज्ञानकार्यत्वं व्यतिरेकेण विवृणोति— **यदा** इति । **शुद्धम् निजरूपि**— [2] अविद्याकृतभेददर्शन-रहितम् । समन्तात् कल्प्यन्ते भेदा अनेनेत्यविद्या–**सङ्कल्पः** । "अविद्या-तरुसंभूतिः' इति वक्ष्यते । **वस्तुषु**–देवादिधर्मिषु । **वस्तुभेदाः**–देवाद्याकार-भेदाः । "वस्त्वस्ति" इत्यादिश्लोकद्वयं सिद्धान्ते वक्ष्यते । विजातीयभेद-निषेधमुपसंहरति-**तस्मात्** इति । सजातीयभेदं निषेधति–**विज्ञानम्** इति । स्वगतमपि निषेधति — **ज्ञानम्** इति । **विशुद्धं विमलम्** [3] अविद्याभेददृष्टि-रहितम् । **सदैकम्** — वृद्ध्यादिरहितम् । नेदं परमतमित्याह— **सत्** इति । **एतत्**–ज्ञानम्; **भुवनाश्रितम्**–भुवनेनाधिष्ठानतयाऽऽश्रितम् । **संव्यवहार-भूतम्** — समन्तात् व्यवहारास्पदं वर्तत इति यत्, **तत्र** [4] हेतुरविद्येत्युक्त इत्यर्थः ॥

**अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति ... ... अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्या-रूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता ॥** (पृ. १७)

---

1. दोषपरश्रुत्या अपि ज्ञायते–क. विज्ञात–अ
2. अविद्यातत्कृत–अ, क.
3. अविद्याभेदरहितम्–अ.
4. हेतुरविद्येत्युक्तेत्यर्थः–अ.

ततः किं ज्ञानस्य कर्मनैरपेक्ष्य इत्यत्राह — **अस्याश्च** इति । अज्ञाननिवृत्तिं दर्शयितुं "**न पुनः**" इति वाक्यमुपात्तम् । ज्ञानस्यैक्यविषयत्वाय **तदेकम्** इति । तथा सत्यभयप्राप्त्यै "**यदा**" इति । **आत्म्यम्** — शरीरम् । [1]**निरुक्तिः** — नाम । [2]**अभयम्** — भयाभावाय; अव्ययीभावसमासः । बन्धकत्वेन पराभिमतस्यापि [3]ज्ञानेन निवर्त्यत्वायाऽऽह — **मिथ्या** इति । अत्र भेदप्रतीतिव्युदासायाह — **ब्रह्म** इति । [4]उपायान्तरनिषेधमाह — **तमेव** इति । नात्राज्ञाननिवृत्तिः प्रतीतेत्यत्राह — **अत्र** इति । कथमित्यत्राह — **यथा** इति । **प्रमादम्** इति— अनवधानम्, तद्धेतुरविद्येत्यर्थः ॥

[5] निर्विशेषब्रह्मात्मैक्यविषयत्वं नावगतमित्यत्राह— "**सत्यम्**" इति । निर्विशेषत्वं शोधकसिद्धम् । तेन आत्मन ऐक्यं श्रावयति — "**अथ योऽन्याम्**" इति । भेदधीर्निषिद्धा; अथोपदेशं दर्शयति — "**तत्त्वम्**" इति । तथा देवतां प्रत्याह — "**त्वं वा**" इति । स्वस्मिन्ननुसन्धत्ते — "**तद्योऽहम्**" इति । अस्य सौलतामाह — [6]**वक्ष्यति** इति । तदभिप्रायज्ञोक्तिमाह — **तथा च** इति । **तन्निष्पत्तेः** — तस्मिन् कल्पितत्वात् । मानानुग्राहकं [7]दर्शयति — **अनेन च** इति । **मिथ्यारूपस्य** इति हेतुगर्भम् । **सकारणस्य** — साविद्यस्य । सर्पभ्रमो हि रज्जुज्ञानेन निवर्त्यः, न कर्मणेति भावः ॥

**ननु च —सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते ? ... ... ... यत्संभाव्यमानान्यथासिद्धि,**

---

1. अनिरुक्ते—अनिर्वचनीये । 2. अभयमभयाभावाय-**अ.**
3. ज्ञाननिवर्त्यत्वाय-**ग.** 4. उपायान्तरं निषेधति-**ग.**
5. एषु वाक्येषु निर्विशेष-**ग.** 6. आत्मेति-**अ.**
7. तर्कं दर्शयति-**ग.**

**तद्बाध्यम् ; अनन्यथासिद्धमनवकाशमितरद्बाधकम् — इति सर्वत्र बाध्यबाधकभावनिर्णयः — इति ॥** (पृ. १८)

चोदयति — **ननु च** इति। द्विचन्द्रभ्रमादिन्युदासाय [1] **सकल** इति। व्याप्तिलिङ्गधर्मिधीव्युत्पत्त्याद्यर्थं प्रत्यक्षसापेक्षत्वात् वह्न्यनुष्णत्वहेतुद्रव्यत्ववत् यूपादित्यैक्यवाक्यवत् तद्विरुद्धं श्रुतिर्न बोधयेदिति भावः। एतत् परिहरन् किं प्रत्यक्षस्य बाध्यत्वं न संभवतीति मनुषे, उत परोक्षस्य बाधकत्वं न [2] संभवतीति विकल्पं हृदि निधाय प्रथमं शिरः प्रतिवक्ति— **कथं वा** इति। प्रत्यक्षाभासत्वं न प्रतीतिदशायां भातम् ; पश्चाद्बाधस्तुल्य इति भावः। परोक्षस्य मूलिनो न बाधकत्वमिति शङ्कते— **तत्र** इति। तुल्यत्वव्यावृत्तये **तु** शब्दः। [3] मूलित्वपरोक्षत्वाभिप्रायेण **प्रत्यक्षमूलस्य शास्त्रस्य** इत्युक्तम्। तुल्यत्वे विपर्ययोऽपि स्यादिति प्रयोजकान्तरमभ्युपगमयितुमाह — **तुल्ययोः** इति। तत्र परोक्तं शङ्कते—**पूर्वोत्तरयोः** इति। तदत्रापि तुल्यमित्याह—**शास्त्र** इति। मूलमूलिभावाद्यभावविशेषितौ दुष्टहेतुजत्वतदभावौ तयोः प्रयोजकावित्यत्र आह—**एतदुक्तम्** इति। **तुल्यत्व** इति। तुल्यत्वे सति [4] दुष्टकारणजन्यत्व-तदभावावित्यर्थः। **आदि**शब्दात् परोक्षापरोक्षत्वं पूर्वोत्तरत्वं च विवक्षितम्। कुत इत्यत्राह— **ज्वाला** इति। 'अन्यथा' [5] इत्यध्याहार्यम्। अयोगप्रसङ्गादित्यर्थः। किंविषयं प्रत्यक्षं बाध्यत इत्यत्राह— **तत्र हि** इति। तर्हि किं प्रयोजकमित्यत्राह— **एवं च** इति। त्वदुक्तेऽनुपपन्ने सतीत्यर्थः। **द्वयोः प्रमाणयोः** इति। द्वयोः प्रत्यक्षयोः, प्रत्यक्षानुमानयोः, अनुमानयोः

---

1. सकलशब्दः व्याप्तिलिङ्गधर्मधी अ. सकलशब्दः त्वनुमानागमयोर्व्याप्तिग्रहणलिङ्गधर्मधीव्युत्पत्त्यर्थम्–ग.

2. संभवती तुल्यत्वव्यावृत्तये–ग. अत्र ग्रन्थपातः ग पाठे।

3. मूलत्व–अ. 4. दृष्टकारण–अ.

5. इत्यध्याहर्तव्यम्। अयोगात्–अयोगप्रसङ्गात्–ग.

प्रत्यक्षागमयोः, अनुमानागमयोः, आगमयोर्वेत्यर्थः । **अनन्यथासिद्धत्वम्**—विरुद्ध विषयमानाबाधेनानुदयत्वम्; तच्च विषयान्तरालाभाप्रमाणकोटिनिवेशाभावरूपात् **अनवकाशत्वात्** । **सर्वत्र**— प्रत्यक्षादिषु सजातीययोर्विजातीययोः [1] विरोधे इत्यर्थः । **इति एतदुक्तम्** इत्यन्वयः ॥

**तस्मादनादिनिधनाविच्छिन्न संप्रदायासंभाव्यमानदोषगन्धानवकाशशास्त्रजन्य निर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्र .... .... ... ... तेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वात् बलीयस्त्वमिति न किञ्चिदपहीनम्** ॥ (पृ. १८–१९)

ततः किं शास्त्रप्राबल्यस्य इत्यत्राह — **तस्मात्** इति । "अनादिनिधना ह्येषा" इति स्मृतिः अपौरुषेयत्वसाधकलिङ्गं च स्मारितम् **अनादि** इत्यादिना । [2] यतो दोषासंभावना, ततोऽप्रमाणकोट्यनिवेशः । अर्थविरोधं दर्शयति — **निर्विशेष** इत्यादिना । **शुद्धिः** — अविद्याविरहः । ततः **मुक्तम्** — अविद्याकार्यबन्धरहितम् । **बुद्धम्** — भासमानम्; तच्च स्वतः । तच्च चिद्रूपतया श्रुतत्वादिति पदार्थः । **विविधविकल्परूपो बन्धः** । कश्च दोष इत्यत्राह—**संभाव्यते च** इति । **भेदप्रपञ्चः**—भेदसमुदायः ज्ञात्रादिः; स च देवादिरूपेण **विविधः** । स च ब्राह्मणादिरूपेण विकल्पवानिति **विविधविकल्पभेदरूपः** । **आदि**शब्देन भेददर्शनमुक्तम् । तयोरन्योन्या [3] श्रयव्युदासाय **अनादि**शब्दः । बीजाङ्कुरवत् प्रवाहानादिः । काचादिव्युदासाय **अविद्याख्य** शब्दः । काचित्केन काचादिना सर्वत्र दोषानुमाने, वाक्यत्वात् वेदेऽपि प्रसजेत् । योग्यानुपलब्धिस्तु तुल्येति भावः । **आदि**शब्दः कारणाविद्याविषयो वा ॥

---

1. वा द्वयोरित्यर्थः–**अ, ग.**
2. यतो दोषसम्भावना ततोऽप्रमाणकोटिनिवेशः–**ग.**
3. आश्रयत्वव्युदासाय–**अ.**

चोदयति— **ननु** इति। [1] अनन्तरोक्तबाध्यत्वप्रयोजकाभावमाह— **अनादि** इति। **अपिः** विरोधे। बाध्यबाधकताभ्युपगमनिमित्तं विरोधं दर्शयति— **ज्योतिष्टोमेन** इति। बाध्यत्वमङ्गीकुर्वन् दृष्टहेतुकत्वमनुपगच्छन् परिहरति — **सत्यम्** इति। [2] सावकाशत्वानवकाशत्वावान्तरविधारूपेण पौर्वापर्येण निर्वाहः। उद्गातृप्रतिहर्त्रपच्छेदयोर्नैमित्तिकत्वेनादक्षिणसंस्थापनसर्वस्वदक्षिणत्वे विहिते। एकप्रयोगे तयोर्विरोधः; तत्र यौगपद्ये विकल्पः; पौर्वापर्ये तु पूर्वप्राबल्यम् असञ्जातविरोधितयोदयात्, परस्य [3] सप्रतिपक्षतयैवोदयाच्च इति पूर्वपक्षितम्। विरोध्यसन्निधानात् तदबाधेन पूर्वस्योदयसंभवः; उत्तरस्य तु सन्निहितविरोध्यबाधेनोदयासंभवात्, बाधित्वैवोदय इति प्राबल्यम्; निमित्तोदयान्नैमित्तिकशास्त्रं चोदितमेवेति [4] सिद्धान्तितम्। तदुक्तम् "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति। पाठक्रमात् त्रिवर्गे [5] संसारिणां प्रथमप्रावण्यरूपार्थक्रमाच्च पौर्वापर्यसिद्धिरिति तेन न्यायेन पूर्वबाध इत्यर्थः॥

तादृशपौर्वापर्याभावात् सगुणोपास्तिशास्त्रेषु नायं निर्वाह इत्यत्राह— **वेदान्त** इति। कुत इत्यत्राह— **निर्गुणत्वात्** इति। अपच्छेदन्यायफलरूपबाधदर्शनादित्यर्थः। सगुणोपासनस्य जक्षणादिसांसारिकफलश्रवणात् [6] पूर्वत्वमभिप्रैति। [7]स्वरूपपरसगुणवाक्येषु कथमिति चोदयति— **ननु च** इति। परिहरति— **निर्गुण** इति। कानि निर्गुणवाक्यानि, कथं च तेषां सामर्थ्यमित्यत्राह— **एतदुक्तम्** इति। **कूटस्थम्** — [8] निर्विकारम्। **इतराणि** —

---

1. अनन्तरोक्तबाधकत्व-ग. 2. सावकाशत्वावान्तर-ख.

3. सप्रतिपक्षतयैव-क, ग. 4. सिद्धान्तीकृतम्-क.

5. संसारिणः-ख. 6. पूर्वकमभिप्रेतम्-ख.

7. विरोध्यसन्निधानात् तदबाधेन पूर्वस्योदयसंभवः। उत्तरस्य तु संनिहितविरोध्यबाधेनोदयासत्त्वमिति भावः-इति ग पाठे अधिकः।

8. निर्विशेषम्-क.

"यः सर्वज्ञः" इत्यादीनि। **गुणापेक्षत्वेन**—निषेधस्य प्रसञ्जकसापेक्षत्वादित्यर्थः। **न किञ्चिदपहीनम्**—उपासनार्थत्वात् सगुणवाक्यानाम् न वैयर्थ्यमिति भावः। यद्वा—"यः सर्वज्ञः" इत्यादेरप्युपासनार्थत्वं विवक्षन्नाह—**वेदान्त** इति। पौर्वापर्याभावान्न गुणबाधः। तत **एव** नोपासनार्थत्वक्लृप्तिः इति चोदयति—**ननु च** इति। विधिनिषेधरूपपौर्वापर्यमभिप्रेत्य परिहरति—**निर्गुण** इति। सर्वमन्यत् पूर्ववत् ॥

**ननु च—"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते। नेत्युच्यते, ... ... ... ... ...एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायं च पदत्रयम् ॥** (पृ. १९-२०)

निर्गुणपरतयोपात्तं सत्यादिवाक्यं सगुणपरं बुद्ध्वा चोदयति—**ननु च** इति। **सत्यज्ञानादयः**—सत्यत्वज्ञानत्वादयः। "द्व्येकयोः" इतिवत् द्वित्वैकत्वयो[1]रिति ह्यर्थः। अन्यथा 'द्व्येकेषु' इति बहुवचनप्रसङ्गात्। परिहरति—**नेति** इति। प्रतीतिः[2] आपातधीश्चेन्न नः क्षतिः, प्रमितिश्चेन्नेत्युपपादयिष्यत इत्यर्थः। कुत इत्यत्राह—**सामानाधिकरण्येन** इति। शङ्कते—**अनेक** इति। व्यधिकरणवाक्येष्विव न पदार्थानेकत्वं वाक्यार्थैकत्वविरोधीति भावः। समानाधिकरणव्यधिकरणवाक्ययोरभिधानविशेषानभिज्ञ इत्युपालभ्य परिहरति—**अनभिधान** इति। **देवानां प्रियः**—छागः, [3]अज्ञः इति भावः। कथमित्यत्राह—**एकार्थत्वम्** इति। न तु पृथगर्थपदसमुदायबोध्यप्रधानार्थैकत्वम्, तत्तु व्यधिकरणवाक्येष्विति भावः। ततः किमित्यत्राह—**विशिष्ट** इति। समानाधिकरणवाक्यस्थप्रातिपदिकानि किं

1. रित्यर्थः—ग.
2. आपातश्चेत् नः न क्षतिः-ग.
3. अजः-अ.

विशेषणमात्रपराणि, उत विशिष्टपराणि, उत स्वरूपमात्रपराणि इति विकल्पमभिप्रेत्य, प्रथमे विशेषणरूपार्थानेकत्वान्नार्थैक्यम्; द्वितीयेऽपि तत् तुल्यम्। किञ्च विशेषणविशेष्य[1] रूपार्थभेदाच्च नार्थैक्यम्। विशेषणभेदेन विशेष्यभेदप्रसङ्गाच्च। विशेषणं हि भेदकम्। 'देवदत्तः श्यामो युवा' इत्यादौ प्रत्यक्षबलादैक्यम्। ब्रह्म तु न [2] तद्गोचरम्। न च एकवचनान्तधर्मिवाचिपदैक्यात् [3] विशेष्यैक्यम्, 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यत्रादृष्टेः[4]। तद्बहुत्वं प्रत्यक्षबलात् इति चेत् न, अप्रत्यक्षगोरपि पुरुषस्यानेन वाक्येन गोबहुत्वप्रतीतेः। तस्मादप्रत्यक्षे ब्रह्मणि विशेषणभेदप्रयुक्तविशेष्यभेदो दुर्वार इत्यादिदूषणानि **विशेषणभेदेन** इत्यादिग्रन्थेनोक्तानि। अर्थशब्दो विशेष्यस्यापि वाचकः। क्रमेणाभिधानं चेत् विशेष्य इव विशेषणेऽपि पदान्तरविहित [5] विशेषणान्वयात् विशेषणयोर्मिथः समवायः। युगपच्चेत् समानविभक्त्या विशेष्यांश इव विशेषणेऽप्यैक्यप्रतिपादनात् विशेषणैक्यम् उद्देश्योपादेयविभागाभावश्च इत्यादिदूषणान्यन्यत्रोक्तानि इहाभिप्रेतानि। ततः किमित्यत्राह — **ततश्च** इति। शिरोद्वयदूषणात् तृतीयशिरोऽर्थात् स्वीकृतम्। तद्विघुणं चोदयति— **एवम्** इति। एवं तर्हि— वस्तुमात्रपरत्वे। [6] एकतरपदवैयर्थ्यं सामानाधिकरण्यलक्षणहानिश्चाभिप्रेते, परिहरिष्यमाणत्वात्। इदं बहुप्रन्थैः परिहर्तुं मध्ये त्वरया न चोदनीयमित्यभिप्रायेणाह—**एकार्थ** इति। **एकार्थाभिधायित्वेऽपि** इति चोद्य [7] हेत्वनुवादः। परिहरति **एकत्व** इति। तात्पर्यनिश्चयः समानविभक्त्या। लक्षणहानिपरिहारः चशब्दाभिमतः। **अर्थवत्त्वम्** —— प्रयोजनवत्त्वम्। बहुव्यावर्त्यव्युदसनात्

---

1. रूपार्थभेदार्थे इत्यर्थैक्यम्—अ.
2. तद्गोचरः—अ.
3. विशेष्यत्वम्—अ.
4. दृष्टः—क.
5. विशेषणान्वयाद्विशेषयोः—अ. विशेषणान्वयो—क.
6. एकेतर—अ.
7. हेत्वनुवादम्—अ.

Accn. No. 1979



अर्थवत्त्वम् । प्रवृत्तिनिमित्तभूतैस्तैः अपर्यायता, सामानाधिकरण्यलक्षणानुरोधश्च एकार्थत्वाविरोधेन सिध्यन्तीत्युक्तं भवति ॥

'तत्' 'त्वं' पदयोरिवान्वयमुखेनोपलक्षणद्वारा स्वरूपपरत्वं किं न स्यात्? व्यावृत्तिबहुत्वानैकार्थत्वं, व्यावर्त्यानन्त्यान्न तद्व्युदासः कतिपयपदैः शक्यते; येभ्यो व्यावृत्तिः, कानि च तानि? [1]व्यावृत्तिभिः सधर्मकत्वम् । व्यावृत्तयो न धर्माश्चेत् पर्यायता स्यादित्याशंक्याह — एतदुक्तम् इति । कारणतयोक्तस्य [2]शङ्कितदोषव्युदासस्यापेक्षितत्वात् तद्व्यावृत्तिमुखेन स्वरूपपरत्वमभिप्रेत्य लक्षणतः इत्याद्युक्तम् । सर्वमनेन पदत्रयेण फलतः इति । प्रयोजकेन [3]रूपेणानन्तव्यावर्त्यव्युदासः इति भावः । व्युदासस्तु फलितः । पदानि तु स्वरूपपराणीत्येकार्थत्वं चाभिप्रेतम् । केन कस्मात् व्यावृत्तिरित्यत्राह — तत्र इति । कारणतयैव तुच्छत्वव्यावृत्तेर्विकारिव्यावृत्तिरुक्ता । जडरूप इत्यस्य व्याख्यानम् अन्याधीनप्रकाश इति । ताभिः सधर्मकत्वमित्यत्राह— न च इति । वादिविशेषापेक्षया भावाभावरूपतोक्तिः । तर्हि किमित्यत्राह— अपि तु इति । निदर्शयति— यथा इति । न धर्मान्तरम् इति । अनुपलम्भात्, तदभ्युपगमेऽनवस्थानाच्चेति भावः । तर्हि पर्यायता स्यादिति शङ्कायां, शौक्ल्यं [4]कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तमित्यादिप्रतिबन्द्यभिप्रायेणाह— एकस्यैव इति । अर्थवत्तरम् — दृष्टान्तापेक्षया पराभिमतसगुणपरत्वापेक्षया च । शौक्ल्यं हि प्रत्यक्षम् । अतो वाक्यं मन्दप्रयोजनम् । शोधकस्य शङ्कितदोषव्युदासो हि कृत्यम्, न तु गुणान्वयज्ञापनमिति ॥

---

1. व्यावृत्तिमत्त्वात् सधर्मकत्वम्–ग.

2. शङ्कितदोषव्युदासस्यापेक्षितत्वादतद्व्यावृत्तिमुखेन स्वरूपपरत्वमित्यभिप्रेत्य लक्षणत्व इत्युक्तम्–ग.

3. स्वरूपेण–ग.

4. कार्ष्ण्यव्यावृत्तमित्यादि–ग.

THE ACADEMY OF SANSKRIT RESEARCH
MELKOTE - 571 431
(KARNATAKA STATE)

**तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेषमित्युक्तं भवति । ... ... ... ... अतश्चैतल्लक्षणवाक्यमखण्डैकरसमेव प्रतिपादयति ॥** ( पृ. २० )

अथ वाक्यार्थमाह — **तस्मात्** इति । सामानाधिकरण्य[1]स्वभावात् । अथ कारणवाक्यैकार्थ्ये हेतुमुपपादयति — **एवम्** इति । ऐकार्थ्यं कुतोऽपेक्षितमित्यत्राह — **यत** इति । [2]लक्षणकारणत्वप्रापकवाक्ये उपात्ते । **उपलक्षणम्** — ज्ञाप्यबहिष्ठम्, इन्दोरिव [3]शाखाः । कारणवाक्यावगतस्य शोधकत्वात् तदैकार्थ्यमित्यर्थः । तर्हि "यः सर्वज्ञः" इत्यादिसगुणकारणवाक्यैकार्थ्यं स्यादित्यत्राह — **तत्र** इति । अनुक्तस्यान्यतो ग्राह्यत्वात् सगुणेष्वपि निर्गुणत्व[4]मुक्तं भवति । तत्र अपच्छेदनयान्निर्विशेषत्वं सर्वत्र सिध्येदिति भावः । तत किमित्यत्राह — **जगत्** इति । [5]असत्वविरोधः, तत्रापि 'नरपतिरद्वितीय' इतिवत् किं न स्यादित्यत्राह — **अद्वितीयत्व** इति । **सदेव, एकमेव** इति । सजातीय विजातीय[6]भेदनिवर्तकसावधारणपदद्वयसमभिव्याहारेण परिशेषात् **अद्वितीयम्** इति स्वगतभेदनिवर्तकमित्यर्थः । अथ शोधकान्तरैकार्थ्ये हेतुमाह — **अन्यथा** इति । **अन्यथा**— सत्यादिवाक्यस्य सगुणपरत्वे । उक्तहेतुत्रयेण निर्विशेषपरत्वं निगमयति — [7]**अतश्चैतल्लक्षण** इति ॥

**ननु च — सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधि-**

---

1. स्वाभाव्यात्-क. स्वाभावात्-ग.
2. लक्षणप्रापकवाक्ये उपात्ते-क. वाक्योपात्ते-ख
3. शाखा-अ. 4. मुक्तम् । तत्र-अ.
5. अर्थविरोधः-क. 6. भेदधीनिवर्तक-ग.
7. अत इति । एतल्लक्षणवाक्यम्- स्वरूपलक्षणवाक्यम् । अखण्डैकरसम्-निर्विशेषैकस्वभावम् । —ग.

**कथावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात् । ... ... ... ... सर्वपदानां लक्षणाऽपि न दोषः । अतः इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ॥** (पृ. २०–२१)

चोदयति— **ननु च** इति । **स्वार्थः**— [1] विशेषणद्वारा विशेष्यम्; तदभावे न [2] तदभिधेयत्वमित्यर्थः । लक्षणामभ्युपगम्य परिहरति— [3] **नैष दोषः** इति । कुत इत्यत्राह— **अभिधान** इति । वाक्यतात्पर्यविरोधिमुख्यवृत्तेरपि तदनुरोधिलक्षणावृत्तेर्बलीयस्त्वादित्यर्थः । कस्मिंस्तात्पर्यं यदनुरोधाय लक्षणेत्यत्राह— **सामानाधिकरण्यस्य** इति । तात्पर्यनिश्चायकाभावात् सर्वपदलक्षणा न युक्तेति चोदयति— **ननु च** इति । प्रतिवक्ति— **ततः किम्** इति । अविरुद्धपदमुख्यार्थत्वदर्शनम् [4] विरुद्धपदलक्षणाया न विरुद्धमिति भावः । तद्विवृण्वन् विपक्षे बाधगर्भां प्रतिबन्दीमभिप्रेत्याह— **वाक्य** इति । 'गङ्गायां मत्स्याः' इत्यत्र लक्षणात्यागात् 'गङ्गायां घोषः' इत्यत्रापि स किं न स्यादिति भावः । ततः किमित्यत्राह— **समभि** इति । विरोधाविरोधावेव प्रयोजकौ, न तु पदैकत्वद्वित्वादिकमित्यर्थः । 'विषं भुङ्क्ष्व' इत्यादौ सा सार्वत्रिकी च दृष्टा । योग्यतादिना तत्र तात्पर्यनिश्चयश्चेत्, इहापि समानविभक्त्या स इति भावः । तथा परीक्षकैरप्यभ्युपगतमित्याह— **तथा च** इति । **अभ्युपगम्यते**— अभ्युपगमः फलितः इत्यर्थः । कैः केश्चित्यत्राह— **कार्य** इति । कुत इत्यत्राह— **अपूर्व** इति । ततः किं सर्वपदलक्षणाया इत्यत्राह— **कार्यान्वित** इति ॥

ननु गङ्गापदलक्षणायामपि, न [5] घोषप्रतिवासो लाक्षणिकः इति

---

1. विशेषणद्वारकम् विशेष्यम् । तदभावे न तदभिधेयम्–ग.
2. तदभिधेयमित्यर्थः–अ. 3. नैष इति–अ.
4. विरुद्धपदलक्षणया–अ.
5. घोषं प्रतिवासो–अ. घोषप्रतिभासो–ग.

चेन्न, तत्र लक्ष्याप्राधान्यात् । प्रधानभूतवाक्यार्थलाक्षणिकत्वे हि तदन्विताभिधायिनां लक्षणा स्यात् । न च "कमलानि निमीलन्ति" इतिवत् लक्ष्यप्राधान्येऽपि पदान्तरमुख्यार्थता; सर्वपदानां निमीलनपरत्वव्यवस्थित्यभावात् । 'गवा यजेत' इत्यादौ कृत्स्नपदसमुदायस्यापूर्वकार्ये [1] मुख्यत्वावगमाच्च । कार्यान्वितमात्रे पदान्तराणां मुख्यत्वं चेत्, कार्यमात्रे [2] लिङादिरपि मुख्योऽस्तु, विशिष्टकार्यैकदेशपरत्वाविशेषात् । विशिष्टस्यापिकार्यैकदेशे पदशक्तिश्चेत् लिङादेः क्रियाकार्य इव पदान्तराणामपि क्रियाकार्यान्विते लक्षणा स्यात्, विशिष्टस्यापिकार्यैकदेशपरत्वग्रहणाविशेषात् । लिङादिशक्तेः कार्यमात्रविषयत्वे, तद्विशेषे शब्दशक्त्यभावात् मानान्तरागोचरत्वाच्च कार्यविशेषस्याप्रामाणिकत्वं चेत्येतत्कार्ये [3] विशेषान्वयेऽपि तुल्यम् । समभिव्याहारात् तत्सिद्धिश्चेत् स्वर्गकामपदसमभिव्याहारात् कार्यविशेषसिद्धिरिति एकस्यामुख्यत्वेऽन्येषां च तथात्वमवर्जनीयमिति भावः । लक्षणाया दोषत्वपरिहारमुपसंहरति— **अतः** इति । परमप्रकृतं [4] निगमयति— **अतः** इति । **अर्थजातम्** — चिन्मात्रस्य सत्यत्वम्, अन्यस्य मिथ्यात्वं, दोषमूलत्वं, [5]दोषस्वरूपम्, तस्य ज्ञाननिवर्त्यत्वमित्यादि ॥

**प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम् । सति च विरोधे बलीयस्त्वं .... .... ... ... ... ... न भेदः प्रत्यक्षेण गृह्यते । अतो भ्रान्तिमूल एव भेदव्यवहारः ॥** (पृ. २१)

अथ निर्विशेषचिन्मात्रसत्यत्वे विरोधमभ्युपगम्य प्रत्यक्षात् शास्त्रस्य

1. मुख्यत्वोपगमाच्च–ख.
2. लिङादयोऽपि मुख्याः स्युः–ग.
3. चेत् एतत्कार्यविशेषान्वितेऽपि–ग.
4. उपसंहरति–ग.
5. दोषस्य च स्वरूपम्–ग.

बलीयस्त्वमुक्तं प्राक्, स च नास्तीत्याह— **प्रत्यक्ष** इति । **सति च**–सति हीत्यर्थः । कथमविरोध इत्यत्राह — **निर्विशेष** इति । **निर्विशेष** पदं सजातीयविजातीयभेदनिषेधपरम् । **सन्मात्र**पदं स्वगतभेदाभावपरम्, "प्रत्यस्तमितभेदं — सत्तामात्रम्" इति पदद्वयवत् । प्रतीतिविरोधेन चोदयति– **ननु च** इति । **घटोऽस्ति** इति, न केवलमस्तीति भावः । तस्य भ्रान्तित्वव्युदासाय व्यवहारविरोधमाह— **विलक्षण** इति । एकव्यवहार-हेतुत्वमभ्युपगतं प्रत्यक्षस्य ; प्रत्यक्ष[1] मूलत्वं तु भेदव्यवहारस्य नेत्यभिप्रायेण **सत्यम्** इत्युक्तिः । द्वयोरपि प्रत्यक्षमूलत्वं दृश्यत इत्यत्राह— **तथा** इति । **अत्र**— स्वरूपभेदविषयव्यवहारसमुदाये । **तथा** यथैकव्यवहारस्यैव प्रत्यक्ष-मूलता **तथा** इत्यर्थः । **विविच्यते**–'इदं रजतम्' इति व्यवहारे यथेदमं-शस्यैव प्रत्यक्षमूलत्वं, तथेत्यर्थः । बाधाबाधाभ्यां तत्र तथात्वम्, इह तु न बाधो दृश्यते[2] इत्यभिप्रायवांश्चोदयति — **कथम्** इति । एतत् परिहरन् 'नेदं रजतम्' इतिवत् प्रत्यक्षबाधाभावेऽपि ज्वालैक्यादाविव अत्रापि यौक्तिकबाधोऽस्तीति दर्शयति—**घटोऽस्ति** इत्यादिना । [3]तत्र बाधिकासु युक्तिषु तावन्मानानुपपत्तिरुच्यते । सा च एवम्— 'घटोऽस्ति' इत्यत्र अस्तित्वं तद्भेदश्च किमेकः पदार्थः, उत द्वौ; द्वित्वे च किं प्रत्यक्षमुभयग्राहि [4]अथान्यतरग्राहि ; उभयग्रहश्च किं युगपत् क्रमेण वा इति विकल्पान् हृदि कृत्वा, न तावत् स्वरूपभेदयोरैक्यं, तयोः प्रतियोगिनिरपेक्षत्वसापेक्षत्वा-भ्यामि[5]त्यभिप्रयन्नाह- **घटोऽस्तीत्यत्र** इति । द्वित्वे च प्रत्यक्षस्योभयग्राहित्वं नेत्याह — **न च द्वयोः** इति । तत्र युगपद्ग्रहासंभवे हेतुमाह— **तयोः** इति । भिन्नकालत्वं च धियोः प्रतियोग्यपेक्षानपेक्षाभ्यामिति भावः ।

---

1. मूलं तु-अ.
2. इत्यभिप्रायं चोदयति-अ. इत्यभिप्रायेण-ग.
3. तत्र चाधिकासु-ग.
4. उतान्यतरत्-ग.
5. त्यभिप्रायेणाह-अ.

[1] क्रमग्रहासंभवे हेतुमाह— **प्रत्यक्ष** इति । अन्यतरग्राहित्वे किमन्यतरत् अस्तित्वलक्षणं स्वरूपं भेदो वेति विकल्पं दर्शयति— **तत्र** इति । **तत्र**— उभयग्राहित्वेऽनुपपन्ने । **तत्र**—तयोः स्वरूपभेदयोः इति निर्धारणसप्तमी वा । भेदग्रहायोग [2] मुखेन प्रत्यक्षस्य स्वरूपमात्रविषयत्वं परिशिनष्टि — **भेद** इति । ऐक्ययौगपद्यासंभवहेतोरेवेति **एवकाराभिप्रायः** । एवमेवेदम् अनुभाषितं संवित्सिद्धौ [3] भगवद्यामुनाचार्यैः —

> "यौगपद्यक्रमायोगाद्द्वयवच्छेदविधानयोः ।
> ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः ॥" इति ।

तर्हि कथं भेदव्यवहार इत्यत्राह—**अतः** इति । एवं मानदौःस्थ्यमुक्तम् ॥

**किञ्च भेदो नाम कश्चित् पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते । ... ... ... ... अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥** (पृ. २१–२२)

अथ मेयदौःस्थ्यं दर्शयति— **किञ्च** इति । **न्यायविद्भिः** — न त्वापातप्रतीतृभिः । तत्र भेदः किं स्वरूपं धर्मो वेति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति— **भेद** इति । कुत इत्यत्राह— **वस्तु** इति । भेदव्यवहारस्य प्रतियोगिनिरपेक्षताप्रसक्तेः इत्यर्थः । भेदस्य स्वरूपत्वेन तद्ग्रहस्य प्रतियोग्यनपेक्षत्वेऽपि शाब्दव्यवहारे व्युत्पत्त्यादिवत् 'भिन्न' इति व्यवहारविशेषे प्रतियोगिधीरपि सामग्र्यन्तर्गता इत्याशङ्क्याह **न च** इति । कुत इत्यत्राह— **स्वरूप** इति । **हिः** हेतौ । [4] स्वरूपग्रहण इव भेदव्यवहारे च प्रतियोग्यपेक्षत्वासंभवादित्यर्थः । सोऽपि कुत इत्यत्राह — **स्वरूपभेदयोः** इति । तद्विवृणोति— **यथा** इति । दूषणान्तरमाह— **हस्त** इति ।

---

1. क्रमात् ग्रहा–क. 2. मूलेन–अ.
3. भगवद्यामुनार्यैः–अ. 4. स्वरूपव्यवहारे–ग.

दूषणान्तराणां [1]परिहारसाम्यादनुक्तिः । द्वितीयं दूषयति— **नापि** इति । कुत इत्यत्राह— **धर्मत्वे सति** इति । विपक्षे [2] बाधकमाह— **अन्यथा** इति । **अन्यथा**— [3] स्वरूपपक्षदूषणापातादिति भावः । ततः किमित्यत्राह— **भेदे च** इति । **तद्धर्मः** — भेदस्य धर्मः । परस्पराश्रयमाह— **किञ्च** इति । धर्मधर्मिणोः, धर्मिप्रतियोगिनोः, तत्तज्जातीययोश्च तत्तद्भावग्रहपूर्वको भेदग्रहः, तत्पूर्वकश्चेतरः इत्यन्योन्याश्रयः । साधकाभावमुपसंहरति—**अतः** इति ॥

**किञ्च 'घटोऽस्ति' 'पटोऽस्ति' 'घटोऽनुभूयते' 'पटोऽनुभूयते' इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते । ... ... ... घटादयोऽपरमार्थाः व्यावर्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्पादिवत् — इति । एवं सत्यनुवर्तमानाऽनुभूतिरेव परमार्थः; सैव सती ॥**　　　　(पृ. २२)

बाधकं दर्शयति — **किञ्च** इति । व्याप्तिं शिक्षयति — **घटोऽस्ति** इत्यादिना । अनुवृत्तिव्यावृत्तिसिद्ध्यै **पट**—उक्तिः । सदनुभूत्यैक्याय **अनुभूयते** इत्युक्तिः । ततः किमित्यत्राह — **अत्र** इति । [4]उदाहरति — **रज्जु** इति । रज्ज्वादिवत् सर्पादिवच्चेत्यर्थः । तद्विवृणोति — **यथा** इति । [5]सोपाधिकत्वं शङ्कते — **ननु च** इति । परिहरति — **उच्यते** इति । [6]साधनव्यापकत्वेनोपाधिं दूषयितुं प्रतिपन्नांशमाह—**घटादौ** इति । सा किं बाधफलभूतम्, उत संवादफलमिति विवेचनीयत्वमाह — **सा** इति । [7]बाधफलत्वं दर्शयितुमाह — **किम्** इति । [8]'घटोऽस्ति' इति प्रतीते

---

1. परिहारसामान्यात्—क.　　2. बाधमाह—ख.
3. स्वरूपपक्षे दूषण—ग.　　4. दृष्टान्तमाह—ग.
5. सोपाधिक शंकते—अ.　　6. साधनव्यापकत्वे सोपाधिकं—क.
7. ततः किमित्यत्र बाधफलं—ग.　　8. घटोऽस्तीत्यत्र प्रतीते—क.

विषये पटाभावः । वाधसिद्धिं दर्शयति — **सिद्धं तर्हि** इति । पुरोवर्तिनि रजतस्याभावो हि बाधितत्वमित्यर्थः । ततः किमित्यत्राह — **अतः** इति । शुक्तिधियो रूप्यप्रत्यनीकत्वं [1]बाधकत्वम् । विषयत्वाभावो व्यावृत्तिः । [2]निरुपाधिकत्वात् हेतोः साधकत्वमाह — **सा** इत्यादिना । उक्ततर्कानुग्राह्यमाह — **प्रयोगश्च** इति । धीसत्यत्ववादिनः किं सतः पारमार्थ्येनेत्यत्राह — **एवम्** इति । तर्हि सत्यद्वयप्रसङ्ग इत्यत्राह — **सैव** इति ॥

**ननु च — सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् । ... ... ... ... न ह्यनुभूतिर्वर्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्तप्रकाशाऽभ्युपगम्येत ॥** (पृ. २२–२३)

सद्धियोः विषयविषयिभावेन भिन्नत्वात्, नैक्यं संभवतीति चोदयति — **ननु** इति । मानमेयानुपपत्तिभ्यां ज्ञेयभेद [3]निरासात् ज्ञानज्ञेयभेदस्यापि निरस्ततां वदन् परिहरति — **नैवम्** इत्यादिना । **न प्रमाण** इति । भ्रान्तिसिद्ध इत्यर्थः । धीसदैक्यं निगमयति — **तस्मात्** इति । अमेयत्वे तुच्छत्वं स्यादित्याशङ्क्याह — **सा च** इति । हेतुमाह — **अनुभूतित्वात्** इति । व्यतिरेकव्याप्तिं दर्शयति — **अन्यत** इति । अनुमानान्तरमप्याह — **किञ्च** इति । प्रत्यनुमाननिरासश्चार्थतः क्रियत इति चशब्दार्थः । **कल्पयितुम्** — वस्तुत्वात् भासमानत्वादित्यादिभिरिति भावः । कुत इत्यत्राह — **सत्तयैव** इति । असिद्धिशङ्कापरिहाराय एतद्विवृणोति — **न हि** इति । विद्यमानदशायां [4]कदाचिदप्रकाशत्वमुपाधिरिति भावः । सत्त्वे

---

1. बाधत्वम् । विषयस्याभावो–क.
2. निरुपाधित्वात् हेत्वोः–ग.
3. निरसनात्–क.
4. कदाचिदप्रकाशमानत्वम्–ग.

[1] सर्वदा प्रकाशमानत्वे स्वसिद्धित्वे व्यतिरेकिहेतुरिति स्फुटम् । सुखाद्यन्यत्वे सति इति हेतोर्विशेष्यत्वमभिप्रेतम् । मृषावादिमते सुखादेर्जडत्वात् ॥

**अथैवं मनुषे— उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासते 'घटोऽनुभूयते' इति । ... ... ... ... अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वात्मस्पर्शवदशक्यत्वादिति ॥** (पृ. २३)

अथ वस्तुत्वादिति हेतोरुपाधितयोक्तायाः सत्त्वेऽप्यस्फूर्तेः साधनव्यापकतयाऽनुपाधित्वम्, हेतुतयोक्तस्य सत्त्वे सदा भानस्यासिद्धिं च कौमारिलमतेन शङ्कते- **अथैवम्** इति । तदुपन्यस्यति— **उत्पन्नायाम्** इति । **मात्र**चा धीव्युदासः । 'घटोऽयम्' इत्यध्याहार्यम् । "घटोऽयम् इति जानन्" इति ह्यनन्तरं विवरिष्यते । व्यक्तं च संवित्सिद्धौ—

"घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते ।
न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥" इति ।

"**घटोऽनुभूयते**" इत्यस्योत्तरत्रान्वयः, **विषयमात्रम्** इत्यनेन विरोधात् । 'घटोऽनुभूयते' इत्यनुभवोऽपि भासत इत्यत्राह- **घटोऽनुभूयत** इत्यादि । 'घटोऽयम्' इति ज्ञानवेलायां 'घटेदं'शब्दार्थान्यत्वादनुभूतेरनुभवो नास्तीत्यर्थः । घटपटादिसाधारण्य [2] ज्ञापनायाघटभूतामित्यनुक्तिः । तदा तस्य कथं भासकत्वं [3] शब्दालोकादि हि ज्ञाततया भासकमित्यत्राह -- **तस्मात्** इति । ज्ञानमक्षवत् सत्तया [4] भासकम् इत्यत्र किं नियामकमित्यत्राह—

1. सदा प्रकाशमानत्वम्, स्वसिद्धत्वे व्यतिरेकी हेतुरिति-**ग.**

2. ज्ञापनाय घट-**क.**

3. शब्दलिङ्गालोकादि-**ग.**

4. भासकम् । किं नियामकम्-**ग.**

**तस्मात्** इति । त्वदुक्तहेतोरसिद्धेः, मदुक्तस्य च निरुपाधित्वादित्यर्थः । तर्हि धीव्यवहारः कथमित्यत्राह— **तदनन्तरम्** इति । **कादाचित्क** इति । कादाचित्कत्वात् कार्यम्, ततः [1] सहेतुकमित्यनुमेयमित्यर्थः । अर्थगतस्यापि प्राकट्यस्य स्वप्रतियोगिकत्वात् स्वगतज्ञानानुमापकत्वम् । व्याप्तिस्मरणादेरनवकाशमाशंक्याह— **तदनन्तरम्** इति । शतपत्रवेधवत् शैघ्र्यादुपपन्नमिति भावः । [2] 'अनुमीयते' इति वर्तमानव्यपदेशोऽप्यासत्त्यतिशयादिति चाभिप्रेतम् । स्वदर्शनप्रसिद्ध्या परश्चोदयति— **एवम्** इति । दूषयति— **किमिदम्** इति । किं साधकतयाऽभिमतं सत्त्वे सदा [3] भानम् उत साध्यतयाऽभिमतं स्वयंप्रकाशत्वमिति विकल्पमभिसन्धाय प्रथमस्यासिद्धत्वेऽपि [4] सिद्धत्वमभ्युपगम्यानैकान्त्यमाह— **न तावत्** इति । तद्विवृणोति— **न हि** इति । द्वितीयं दूषयति- **अत** इति । साधनस्यासिद्ध्यनैकान्त्याभ्यां न साध्यसिद्धिरित्यर्थः । प्रथमे सुखादेर्धीविशेषत्वेनानैकान्त्याभावम् अनुभूतित्वादिहेत्वन्तरेणापि तत्साधनं चाशङ्क्य व्याहतिपरास्तत्वमाह— **अर्थान्तरम्** इति । **इति मनुषे** इत्यन्वयः ॥

**तदिदमनाकलितानुभवविभवस्य स्वमतिविजृंभितम्, ... ... ... ... अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे च स्वयमेव हेतुः ॥** (पृ. २३)

स्वसिद्धिवादी परिहरति — **तदिदम्** इति । कृत्स्नभानव्यवहारहेतोरनुभवस्य स्वभानव्यवहारयोरन्यानपेक्षत्वरूपं विभवमजानन् — **अनाकलितानुभवविभवः** । प्राकट्यं दृष्टं वा कल्पितं वेति विकल्पमभिप्रयन् प्रथमं शिरो दूषयति— **अनुभूति** इति । विषयधर्मो जन्यश्चेत् सर्वैरुपलभ्येत,

---

1. सहेतुकमित्यनुमेत्यर्थः-ग. 2. अनुभूयते-अ, ग.
3. भासमानं-क. 4. सिद्धिमुपगम्य-अ.

रूपादिवत् इत्यर्थः । न च द्वित्वादिवत् अनुपलब्धिसंभवः, अपेक्षाबुद्धेर्द्वित्वादिव्यवहारमात्रजनकतया द्वित्वादिजनकत्वाभावात् । अपेक्षाबुद्धेर्द्वित्वाद्यभिव्यञ्जकतया तद्गत एव भानोपपत्तेश्च । न चानागताद्यर्थेषु प्राकट्यम्, निराश्रयधर्मायोगात् । तदुक्तं संवित्सिद्धौ —

"अतीतेऽनागते चार्थे कथं प्राकट्यसंभवः ।
न हि धर्मिण्यसत्येव धर्मः संभवमृच्छति ॥" इति ।

न च तेषु द्वित्वादिजन्म, अर्थवत् द्वित्वादेरपि धीस्थतया व्यवहारोपपत्तेः । न च विषयविषयिभावसंबन्ध एव प्राकट्यम्, संबन्धिभ्यां विना [1]तत्प्रतीत्ययोगात् ज्ञानमपि [2]ज्ञातमित्यनुमेयाभावादिति भावः । अथ कर्तृत्वं व्युदस्यति— **उभय** इति । नामान्तरेण प्राकट्योपगमशङ्काव्युदासाय **उभयाभ्युपेत** शब्दः । प्राकट्यजनकत्वेना[3]भ्युपेततयैवेति **एव**काराभिप्रायः । **व्यवहारः** — ज्ञानादिः । [4]'दृष्टो घटः' इतिवत् 'द्विष्टो घटः' इतिवत् 'ज्ञातो घटः' 'प्रकटो घटः' इत्युक्तिः । विषयविशेषनियतव्यवहारः कर्मकर्तृव्यवहारो विकल्पव्यवहारश्च **अशेष**शब्दोक्तः । प्राकट्योपगमेऽपि कथं तद्घट[5] एव तद्धीर्जनयति, न पट इत्यनुयोगे सति इन्द्रियसंप्रयोगस्यैव नियामकतयाऽभ्युपेतस्य व्यवहारव्यवस्थापकत्वोपपत्तेः । 'घटोऽनुभूयते' 'घटः प्रकाशते' इति कारकभेदव्यवहारस्य 'परशुना छिनत्ति' 'परशुमुद्यम्य निपातयति' इतिवत् धातुभेदनिबन्धनत्वाच्च । 'घटोऽयम्' इत्येतावद्व्यवहारस्या[6]धिकाविवक्षानिबन्धनत्वात्, तस्याश्च ज्ञानाभावव्याप्यत्वाभावाच्च [7]कल्पकव्यवहारान्यथासिद्धिरिति भावः ॥

---

1. तत्प्रतीत्ययोगेन–क  2. ज्ञातमित्यनुमेयत्वाभावात्–ग
3. भ्युपेततयैवेति–ग  4. दृष्टो घटः इतिवत् ज्ञातो घटः-ख
5. एव धीर्जनयति–अ.  6. धिकविवक्षा–क.
7. कल्पकव्यवहारोऽन्यथा–ग.

मानसप्रत्यक्षवेद्यत्वमाशङ्कयाह— **नापि** इति । क्षणिकात्मविशेषगुणत्वं हेतुः । सुखादिः सपक्षः । संयोगरूपधर्माद्यात्मनः संयोगा हेतौ व्यावर्त्याः । अन्यतरासिद्धिः, गुणत्वक्षणिकत्वानुगमात् । [1] किञ्च मानसस्याबुभुत्सित-[2] ग्राह्यत्वेऽन्योन्याश्रयः, [3] इच्छायां ज्ञानम् ज्ञात इच्छेति । किञ्च सुखादौ बुभुत्सानियमपूर्वकज्ञान [4]नियमदर्शनात् तया सहानन्तसंविदावलिः स्यात् न च द्वितीयादिज्ञानेन बुभुत्सेति वाच्यम्, मानसत्वाविशेषात् । न च मानसं द्वितीयादि, क्षणिकात्मविशेषगुणत्वाविशेषात् । तथा सति हेत्व-नैकान्त्यम्, अमानसेऽपि प्रवृत्तेः । द्वितीयस्यामानसत्वे प्रथमस्यापि तथात्वात्, सर्वशून्यता । [5]द्वितीयादिष्वसिद्धिश्चेत् प्रथम एव तथा स्यात् । अतो मानस-प्रत्यक्षवेद्यत्वं नेति भावः । एवं मानान्तरागोचरत्वात् ज्ञानस्य तुच्छत्वे सर्वतुच्छत्वप्रसङ्गाच्च, [6]परिशेषात् स्वसिद्धित्वसिद्धिरित्याह— **अपि तु** इति ॥

न परं परिशेषः, [7]अनुमा चेत्याह—**प्रयोगश्च** इति । [8]लाघवायानु-मा‌द्वयं तन्त्रेणोक्तम् । [9]प्रथमा प्राकट्याभ्युपगमेनोक्ता, द्वितीया त्वनभ्यु-पगमेन । **अनुभूतिः अनन्याधीनस्वधर्मा, अनन्याधीनस्वव्यवहारा** इति प्रतिज्ञाद्वयम् । एवं हेतू च द्वौ । अन्याधीनधर्मत्वेऽपि धर्मवत्तया

1. 'किञ्च' इति क पाठे न.

2. ग्राह्यत्वात् ज्ञानविषयज्ञानतज्ज्ञानादिपरंपरानुच्छेदप्रसङ्गः । बुभु-त्सितग्राह्यत्वेऽन्योऽन्याश्रयः—अ.

3. इच्छाया ज्ञानम्, ज्ञानत इच्छेति—ग.

4. नियमादर्शनात्—ग.

5. द्वितीयादि स्वसिद्धि चेत् प्रथममेव तथा स्यात्—ख

6. पारिशेष्यात् न स्वसिद्धित्वासिद्धिः—ग

7. अनुमानं च—ख

8. लाघवादनुमानद्वयं—ख

9. प्रथमम् ... ... उक्तं, द्वितीयं—ख

सिद्धसाध्यत्वव्युदासाय **अनन्याधीन**शब्दः। **अन्य**शब्दोऽत्यन्तसजातीयान्तरपरः। अत्यन्तसजातीयत्वं नाम येन शब्देन सजातीयान्तर-[1]प्रतियोगिनिर्देशः [2]तच्छब्दप्रवृत्तिनिमित्तवत्त्वम्। ज्ञानान्तरानपेक्षस्वसाध्यपरगतधर्मेण सिद्धसाध्यत्वव्युदासाय **स्व**शब्दः। ज्ञानान्तरानपेक्षस्वगतैकत्वादिना सिद्धसाध्यत्वव्युदासाय स्वजन्यपरगतधर्मात्यन्तसजातीयशब्दोऽध्याहार्य इत्यर्थवशादवगतम्। अनन्याधीनस्वजन्यपरगतधर्मात्यन्तसजातीयधर्मेत्यर्थः। एवम् **अनन्याधीनस्वव्यवहारा** इत्यत्रापि द्रष्टव्यम्। हेतुमाह— **स्व** इति। **हेतुत्वम्**— धर्महेतुत्वं व्यवहारहेतुत्वं [3]च अनैकान्तिकम्। अतः **तत्**-शब्दः। तादृगित्यर्थः। स्वस्मिन् यादृग्भवति, परत्र तादृशो धर्मस्य व्यवहारस्य वा हेतुत्वात्। तादृक्त्वं चात्यन्तसजातीयत्वम्। असंभवव्युदासाय **स्वसंबन्ध** शब्दः। अनुमितिलिङ्गे व्यभिचारश्चानेन परिहृतः। तद्धि न स्वसंबन्धमात्रेण [4]लिङ्गिप्रकाशव्यवहारहेतुः। किन्तु तज्ज्ञानेन। अत्र तु ज्ञानान्तरा[5]व्यवहितसंबन्धो विवक्षितः। स्वगतधर्मेण वा व्यवहारेण वा स्वसंबन्धात् तस्य [6]तस्य च स्वयं हेतुरिति साध्याविशिष्टत्वव्युदासाय **अर्थान्तर**शब्दः। ज्ञानस्य स्वस्मिन् [7]तादृग्रूपत्वापादने अत्यन्तसजातीयानपेक्षत्वं साध्यम् [8]परत्र स्वगतधर्मात्यन्तसजातीयधर्महेतुत्वं स्वगतव्यवहारात्यन्तसजातीयव्यवहारहेतुत्वं च हेतुरित्युक्तं भवति। परत्र प्रकाशधर्मतद्व्यवहारहेतुत्वस्यैव साधनतया विवक्षितत्वान्न काष्ठच्छेदकपरश्वादौ व्यभिचारः। व्याप्तिपूर्वकं दृष्टान्तमाह— **य** इत्यादिना। तद्विवृणोति— **रूपादिर्हि** इति। पक्षधर्मताबललब्धमर्थं वदन्निगमयति— **अतः** इति। 'निरासको दीपः, निरसनीयं तमः; जनको दीपः, जन्यं ज्ञानम्; जनकं ज्ञानं, जन्यो

---

1. प्रतिक्रियानिर्देशः-अ  2. तच्छब्दप्रवृत्तिनिमित्तत्वं-ग.
3. च नैकान्तिकम्-ग.  4. लिङ्गप्रकाश-क.
5. व्यवहितस्य संबन्धो-क.  6. तस्य स्वयं-अ.
7. तादृग्रूपापादने-ग.  8. न तत्र-क.

व्यवहारः' इति भाट्टोक्तः कर्मकर्तृविरोधो दृष्टान्ते दार्ष्टान्तिके च न विद्यते। स च ज्ञापकेषु न [1] ज्ञातृमनःशब्दादौ दर्शनात् ॥

**सेयं स्वयंप्रकाशाऽनुभूतिर्नित्या च, प्रागभावाद्यभावात्। ... ......अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुम् इत्युत्पत्ति-प्रतिसंबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ॥ (पृ. २३-२४)**

अथ सौगतसाम्यव्युदासाय नित्यत्वमाह — **सेयम्** इति। हेतुमाह— **प्राक्** इति। कुत इत्यत्राह — **तत्** इति। कथं [2]स्वसिद्धित्वे तदभाव इत्यत्राह — **न हि** इति। स्वतः पक्षे सती वाऽसती वेति विकल्पं मत्वा ग्राह्याभावात् प्रथमं दूषयति — **अनुभूतिः** इत्यादिना। द्वितीयं ग्राहका-भावात् दूषयति — **एवम्** इत्यादिना। अन्यतः पक्षं दूषयति — **नापि** इति। अनन्यगोचरत्वे कथं तदभावानवगम इत्यत्राह — **अस्याः** इति। न हि घटस्याभावः साध्यत इति भावः। ततः किमित्यत्राह — **स्वतः** इति। प्रागभावाभावात् जन्मतत्प्रयुक्तविकारान्तराभावमाह — **अतः** इति। **अतः** — स्वतः परतः पक्षयोरुक्तदोषात्। विकारान्तराभावे साध्ये अजत्वं व्यतिरेकिहेतुः। घटो दृष्टान्तः ॥

**अनुत्पन्नेयमनुभूतिरात्मनि नानात्वमपि न सहते, व्यापक-विरुद्धोपलब्धेः। ... ... .... ... अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्तमानमनात्मत्वमपि हि संविदो व्यावर्तयति ॥ (पृ. २४)**

अजत्वात् सजातीयभेदं व्युदस्यति— **अनुत्पन्ना** इति। **व्यापक-विरुद्धोपलब्धेः** — नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः। तद्वि-

---

1. ज्ञातृमनःशब्दपदशब्देषु–ग.

2. स्वसिद्धत्वे–ग.

वृणोति — **न हि** इति । **नानाभूतं न ह्यनुत्पन्नं दृष्टम्**, अपि तूत्पत्तिमदेव दृष्टमित्यर्थः । 'धीरनाना, अजत्वात्; यन्नाना तज्जन्मवत्, यथा घटः' इति प्रयोगः । अस्मिन्नर्थे पूर्वोक्ते च अन्वय्यनुमानमाह— **भेद** इति । आदिशब्दाज्जन्मादयः । 'भेदो विकारश्च न धीधर्मः, वेद्यत्वात्, रूपवत्' इति । व्यावृत्तिरूपः [1] एकत्वनित्यत्वादिश्च धर्मोऽपि नेत्याह— **अतः** इति । **अन्योऽपि**— एकत्वादिरपि; व्यावृत्तिरूपोऽपि । अनुभूतिं पक्षीकृत्य **अनुभवस्वरूपत्वात्** इति व्यतिरेकिहेतुः; व्यावृत्तिरूपधर्मं पक्षीकृत्य **अनुभाव्यत्वम्** अन्वयिहेतुरिति भावः ॥

निर्विशेषत्वादिकमात्मनः श्रूयते, त्वया तु तत् सर्वं कथं संविद उच्यते इत्यत्राह — **यतः** इति । विजातीयभेदरूप आश्रयो हि ज्ञाता । स तु संविदतिरिक्तत्वात् घटवदपरमार्थ इति सैवात्मा इत्यर्थः । तुच्छत्वव्युदासाय **स्वप्रकाश**शब्दः । आत्मनि श्रुतं निर्विशेषत्वं स्वसिद्धित्वं च संविदि दृष्टमिति साऽऽत्मेति च भावः । स्वसिद्धित्वं पृथगेव हेतुरित्याह — **अजड** इति । तदुपपादयति — **अनात्मत्व** इति । **व्याप्तम्** इति कर्तरि क्तः । धीरात्मा, अजडत्वात्; यदनात्मा तज्जडं, यथा घट इति ॥

**ननु च अहं जानामीति ज्ञातृता प्रतीतिसिद्धा । नैवम्; सा भ्रान्तिसिद्धा ... ... ... अत एव सुप्तोत्थितः कदाचिन्मामप्यहं न ज्ञातवानिति परामृशति ॥** (पृ. २४–२५)

स्वानुभवप्रत्यक्षविरोधेन चोदयति — **ननु च** इति । भ्रान्तितया परिहरति — **नैवम्** इति । तावदंशस्य पाश्चात्यबाधादित्यभिप्रयन्नाह — [2]**रजतता** इति । कथं भ्रान्तित्वमित्यपेक्षायां, स्वरूपभूतज्ञानाश्रयत्वं वा

1. एकत्वानित्यत्वादिधर्मश्च नेत्याह-ग.

2. 'रजत इति । कर्तृत्वमाश्रयत्वम् ।' मध्ये ग्रन्थपातः-क.

ज्ञानक्रियाश्रयत्वं वा ज्ञातृत्वमिति विकल्पमभिप्रेत्य, प्रथमं व्युदस्यति — **अनुभूतेः** इति । **कर्तृत्वम्** — आश्रयत्वम् । अन्यस्य कर्तुः अन्यत्वादेव मिथ्यात्वात् स्वयमेव स्वाश्रयः स्यात्, तत् व्याहतमित्यर्थः । भ्रान्तपुरुष-प्रतिपन्नत्वमपि हेतुमाह — **अतः** इति । द्वितीयं व्युदस्यति — **ज्ञातृत्वं हि** इति । ततः किमित्यत्राह — **तच्च** इति । कादाचित्कत्वात् **विक्रियात्मकत्वम्** । [1]साक्षित्वमपि न ज्ञातृत्वम्; अपि त्वविद्यानुभवरूपत्वमित्यभिप्रायेण **साक्षिणि** इत्युक्तम् । कर्तृत्वादेरनात्मधर्मत्वेऽनुमानमाह — **दृश्यधीन** इति । **आदि**शब्दात् अहंधीवेद्यत्वम् ॥

अहमर्थो ह्यात्मा, [2]तत्सामानाधिकरण्येन ज्ञाताऽप्यात्मा इत्यत्राह— **सुषुप्ति** इति । वक्ष्यमाणोपजीवनेन **अपाय** उक्तः । [3]अकर्तृत्वानहंत्वयोर्व्यतिरेकेणाह — **कर्तृत्व** इति । देहेऽहंधीर्भ्रान्तिरूपेति न प्रामाणिकी; आत्मनस्तु प्रामाणिकाहंधीवेद्यस्य कथमनात्मत्वमित्यत्राह—**अहंप्रत्यय** इति । यद्वा देहस्यानात्मत्वं कुत इत्यत्राह— **अहंप्रत्यय** इति । तर्हि ज्ञातुरेवात्मत्वं स्यादित्यत्राह – **तथा** इति । देहात् ज्ञातुरप्यात्मनो वैलक्षण्यं मानसिद्धमित्यहंधीवेद्यत्वमात्रमेवानात्मत्वसाधकमित्यर्थः ॥

[4]स्वप्रकाशसंविदाश्रयत्वरूपं क्रियारूपज्ञानाश्रयत्वलक्षणं च ज्ञातृत्वमात्मनोऽनुभवरूपस्य न संभवतीत्युक्तम् । [5]संविदोऽहमर्थतया भानं कथमुपपद्यत इत्यत्राह— **एवम्** इति । [6]अभिव्यञ्जकत्वात् तात्स्थ्यभानम् ।

---

1. साक्षित्वमपि ज्ञातृत्वम्–अ.
2. तत्सामानाधिकरण्यात्–अ.
3. अकर्तृत्वानहन्तृत्वयोः-ग.
4. स्वप्रकाशक्रियारूपज्ञानाश्रयत्वलक्षणं च-ग.
5. संविदोऽहमर्थस्यतया–अ.
6. अभिव्यञ्जकतोऽस्तु, आत्मस्थतया भाने-ग.

कथमित्यत्राह— **आत्मस्थ** इति । [1] दर्पणत्वादिप्रयुक्तताव्युदासाय स्थलत्रयम् । तत्फलमाह— **तत्कृत** इति । स्वसिद्धेरभिव्यङ्ग्यत्वं जडस्याभिव्यञ्जकत्वं कर्मकर्तृविरोधं चाशङ्क्याह— **स्वप्रकाशायाः** इति । उपपादयति— **रवि** इति । [2] कुत्रेत्यत्राह— **जालक** इति ॥

परमार्थभानवेलायामभानाच्च तन्मिथ्यात्वमाह — **यत** इति । **यत** इति [3]साध्यस्य हेतुतया निर्देशः । 'अग्निमत्तया हि धूमवा'निति वत् । उत्पत्त्यपेक्षया, न तु ज्ञप्त्यपेक्षया । [4]कथं तथा भानमित्यत्राह — **तत्र** इति । "नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मि" इति सुषुप्तौ श्रुतिः, "अहङ्कारं बलं दर्पम्" इति मुक्तौ स्मृतिः, "महाभूतान्यहङ्कारः" "अहङ्कारविमूढात्मा" इत्यादि च हिशब्देन द्योत्यते । सुषुप्तौ प्रबुद्ध-परामर्शे च हेतुमाह — **अतः** इति । **अतः** इति पूर्ववत् ॥

**तस्मात् परमार्थतो निरस्तसमस्तभेदविकल्पनिर्विशेषचिन्मात्रैक-रसकूटस्थनित्यसंविदेव ... ... ... ... ब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते — इति ॥** (पृ. २५)

ततः किं कर्मानपेक्षायामित्यपेक्षायां, "यदप्याहुः" इत्यारभ्योक्तं वस्तुसामर्थ्यमुपसंहरति — **तस्मात्** इति । **तस्मात्** — उक्तमानतर्कैरुप-

---

1. स्वभावसिद्धशब्देनौत्सर्गिकत्वं विवक्षितम् ; क्वचित् प्रमाणबाधश्चेन्न तथेति भावः । दृष्टान्तं दर्शयति-दर्पणेति । आत्मस्थतयाऽभिव्यञ्जनं न दर्पणत्व-प्रयुक्तम्, न च प्रतिबिम्बत्वप्रयुक्तम्, अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं खण्डादिग्रहणम् । आदिशब्देन मुण्डादिग्रहणम्—इति ग पाठे अधिकः ।

2. कुत इत्यत्राह-ग.

3. साध्यहेतुतया निर्देशः । अग्निमत्तया भमवान् इतिवदुत्पत्त्यपेक्षाया ननु—अ

4. कथं तदा—अ.

पादनात् । **निर्विशेष** इति स्वगतभेदाभावः । **चिन्त्वम्** — [1]स्वसिद्धित्व-मिति न पुनरुक्तिः । **भ्रान्त्या विवर्तते** इति [2]करिकलभवन्निर्देशः । **शुद्धम्** — अविद्यारहितम् । **मुक्तम्**—जन्मजरामरणादिरहितम् । **वेदान्ता-नामारम्भत्वं** नाम तद्विचारारंभणीयत्वम् । वाक्यजन्यमेकत्वज्ञानमुपायः, [3]निर्विशेषं वस्तु उपेयम्, [4]निवर्त्यमनिर्वाच्यमज्ञानमिति त्रिकमिह ग्रन्थे दर्शितम् । बन्धस्य सकारणस्य [5]सत्यत्वे धीनिवर्त्यत्वाभावात् तदर्थशास्त्रा-नारम्भं पूर्वपक्षीकृत्य, बन्धस्य मिथ्यात्वात् तन्निवर्तकज्ञानप्रधानं शास्त्रम् आरभ्यमिति [6]सिद्धान्तितं परैः । अतो [7]मिथ्याबन्धनिवर्तकधियः कर्मान-पेक्षत्वात्, न कर्मज्ञानं पूर्ववृत्तमिति वस्तुसामर्थ्यम् उपपादितं भवति ॥

इति महापूर्वपक्षः ।

---

## महासिद्धान्तः ॥

**तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहिणाम् ... ... ... ... कुतर्ककल्ककल्पितमिति, न्यायानुगृहीतप्रत्यक्षादि-सकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् ॥** ( पृ. २५ )

अथ परोक्तोपायोपेयनिवर्त्यानां मानतर्कापेततां, स्वाभ्युपगतानां तु तदुपपन्नतां च प्रतिजानन् [8]बहुशास्त्रज्ञबहुग्रन्थकृतां स्खलनासंभवं च सम्यग्-

---

1. स्वसिद्धत्वम्–ग. 2. करिकलभवत् । शुद्धम्-ख.
3. निर्विशेषवस्तु–ग. 4. निवर्त्यमनिर्वाच्याज्ञानम्–ग
5. सत्यत्वे निवर्त्यत्वाभावात् – ग.
6. सिद्धान्तितम् । अतो–क. 7. मिथ्याभूतबन्ध–ग.
8. बहुशास्त्रज्ञानां बहुग्रन्थ–ग.

ज्ञानसामग्रीवैकल्यप्रदर्शनेन परिहरति — **तदिदम्** इत्यादिना । **तदिदम्**— परोक्तोपायादित्रिकम् । "**आरभ्यन्ते इति यदप्याहुः**" **तदिदम् अनादरणीयम्** इत्यन्वयः । "तं त्वौपनिषदं [1]पुरुषं विद्धि" इति श्रुतिं स्मारयति — **औपनिषद** इति । उत्तीर्णव्युदासाय **परम**शब्दः । इति उपेयम् । उपायमाह — **वरणीयता** इति । निवर्त्यमाह — **अनादि** इति । "शुद्धभावं गतो भक्त्या [2]शास्त्राद्वेद्मि जनार्दनम्", "यस्य देवे परा भक्तिः" इति भक्तेः सम्यग्धीहेतुत्वात् तद्विरहः सामग्रीवैकल्यमिति भावः । भक्त्य-भावहेतुं वा भक्तिनिरसनीयं तदभावादनुवृत्तं वाऽऽह — **अनादि** इति । पापाज्ञानयोस्तद्वासनयोश्च अन्योन्याश्रयपरिहाराय **अनादि**शब्दः । उपायादि-त्रयविषयबुद्धयः **अशेष**शब्दोक्ताः । शेमुषीदोषफलमाह — **अनधिगत** इति । शास्त्रप्राथम्यं सविशेषपरत्वातिशयात् पराभिमतप्राबल्याच्च । **आदि**-शब्दात् [3]अनुमा । प्रत्यक्षानुमयोरवान्तरभिदापरः **सकल**शब्दः । **वृत्तम्**— बोधनम् । अर्थभेदवत् प्रकृतिप्रत्ययात्मकं — **पदम्** । तत्समुदायात्मकं — **वाक्यम्** । तस्य **अर्थयाथात्म्यम्** — तात्पर्यम् । प्रत्यक्षादेः [4]स्वरस-वृत्तित्वम् । न्यायानां मानानुग्राहकत्वम् । तथाऽभिमानेऽपि स्वोक्तानां मानबाध-कत्वं, तेषामुचितविषयविशेषाश्च इत्येतत् सर्वमनधिगतमित्यर्थः । तर्हि किमवलम्ब्य कृतमित्यत्राह — **विकल्प** इति । प्रथमकक्ष्यायामेव भङ्गुरै-र्व्याहतैः बौद्धाद्यात्तसारतया ऋजीषैः कुतर्कैः कल्पितमित्यर्थः । स्वमतस्य मानतर्कोपपन्नतां बोधायनटङ्कादिबहुशिष्टपरिग्रहं चाह — **न्याय** इति । **अनादरणीयम्** — आदर्तुमयोग्यम् ॥

**तथा हि — निर्विशेषवस्तुवादिभिः निर्विशेषे वस्तुनि 'इदं**

1. पूरुषं-ग. 2. शास्त्राच्चेति-अ.

3. अनुमानम् । प्रत्यक्षानुमानयोः -ग.

4. स्वरसवृत्तिः-ग; स्वरसवृत्तिन्यायानां-अ,

**प्रमाणम्' इति न शक्यते वक्तुम् ... ... ... अतः प्रामाणिक-विशेषैः विशिष्टमेव वस्त्विति वक्तव्यम् ॥** (पृ. २६)

एवं संक्षेपतः प्रतिज्ञातमर्थमुपपादयितुमारभते — **तथा हि** इति। अत्र प्रबलतयाऽभिमतमानान्तर[1]पुरस्कारेणोपन्यस्यते, श्रुत्या तद्विरुद्धार्थ-प्रतिपादनायोगात्। अतो मानान्तराणां सविशेषपरत्वं दर्शयितुं [2]निर्विशेषे मानाभावं प्रतिजानीते — **निर्विशेष** इति। **इदम्** — प्रमाणत्वेन लोक-प्रसिद्धम्, परसंमतं वा। हेतुमाह — **सविशेष** इति। विशेषो न निर्विशेषः, कस्यचिद्धि [3]सः। धर्मतया धर्मितया वा, अन्याननुबन्धिवस्तु नेत्यर्थः। निर्विशेषं न मानगम्यम्; [4]स्वसिद्धेरित्यत्राह — **यस्तु** इति। **स्वगोष्ठीनिष्ठः** — सर्वलोकसर्वपरीक्षकासंमतः। अनुभवं दर्शयति — **इदम्** इति। सविषयत्वसाश्रयत्वापरोक्षत्वादिः **विशेषः**। विशिष्टविषयशब्द **औ**पचारिकः। [5]विशिष्टतया भासमानत्वं विवक्षितम्। **अनुभूयमान** इत्यत्रापि तथा। प्रतीतत्वेऽपि युक्तिबाधितं सविशेषत्वमित्यत्राह — **सविशेषोऽपि** इति। **निष्कृष्यमाणं** — निष्कर्षदशायाम्। पक्षानति-रेकप्रसङ्गात् स्वरूपस्य धर्मेतरत्वभ्रमसहत्वाभ्यां शौक्ल्यादिवैधर्म्याच्च **सत्ता-तिरेकिभिः** इत्युक्तम्। अनैकान्त्यभ्रमाविरोधव्यधिकरणासिद्धिव्युदासाय **स्वासाधारण**शब्दः। सामान्येन शिक्षितोऽर्थः तथाप्यवर्जनीय इति पुनः कीर्तनम्। विशेषव्युदासकत्वात् स्वयं च [6]निवर्तते इत्यत्राह — **अतः** इति।

---

1. पुरस्कारेणोपन्यस्य ततः श्रुत्या तद्विरुद्धार्थप्रतिपादनायोगात् मानान्तराणाम्—ग.

2. निर्विशेषमानाभावं—क. 3. सः धर्मितया वा-ख.

4. किं तु स्वसिद्धीत्यत्राह-ग

5. विशिष्टविषयतया—ग. 6. निवर्तन्ते-ग.

**अतः** — उक्तलक्षणविशेषावश्यंभावात् । शुक्तित्वनिवृत्तौ रूप्यानिवृत्तिवत् निरासकासिद्धौ निरासासिद्धेरिति भावः । **कैश्चित्** — प्रामाणिकैः । **अन्ये**– घटादिगतरूपाद्याः । **क्वचित्** — प्रत्यक्षादौ स्वानुभवे च । कर्मकर्तृव्युदास-[1]मुपगम्य निरासकैः सविशेषत्वमुक्तम् । अथ स एव नेत्याह — **धियो हि** इति । [2]**धीत्वम्** —विषयप्रकाशकत्वं ; **स्वप्रकाशता**—अनन्याधीनप्रकाशत्वम्, साधनं साध्यं च इत्यर्थः । ज्ञातृज्ञेयसंबन्धनियमोपलब्धेरिति हेत्वर्थः । न [3] विषयभासनं स्वभावः , स्वापादावदृष्टेरित्यत्राह–**स्वाप** इति । **अनुभवः**– आत्मस्फुरणम् । **स्वावसरे** — अहमर्थात्मत्वसमर्थनावसरे । **निपुणतरम्** – परोक्तयुक्त्यैवेति भावः । परसाध्यैः सविशेषत्वमाह — **स्व** इति । ते स्वरूपमित्यत्राह — **ते च न** इति । परं प्रति स्वरूपं साध्यं चेत् सिद्धसाध्यता । अतो विगीतमविगीतं च नैकमित्यर्थः । विमतिफलभूताद्युपपादनाच्च अतिरेकमाह — **स्वाभिमत** इति । साधकैश्च सविशेषत्वं फलितम् । **स्वाभिमत**शब्दः साधनविशेषणम् । न च सिद्धं साध्यं चैकमित्यर्थः । साध्यसाधनधर्मा मिथ्या इत्यत्राह — **अतः** इति । **अतः** — उक्तैर्हेतुभिः । साध्याद्यप्रामाणिकत्वे प्रमाणोपन्यासवैयर्थ्यं विपरीताकारप्रसङ्गश्चेति **प्रामाणिक**पदस्याभिप्रायः । प्रसक्तानुप्रसक्त्या स्वानुभवस्य सविशेषसाधकत्वमुक्तम् ॥

**शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधानसामर्थ्यम् .... .... .... .... निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्विशेषवस्तुनि शब्दः प्रमाणम् ॥** ( पृ. २६ )

---

1. अभ्युपगम्य–ग.

2. धीत्वात्-विषय–क.

3. विषयभासकस्वभावः–क.

अथ प्राक् सामान्येन प्रतिज्ञातं सर्वमानसविशेषविषयत्वं तद्विशेष-प्रदर्शनेन विवृण्वन् परपक्षे प्रत्यक्षात् प्रबलं स्वपक्षे सुतरां सविशेषपरं च शब्दं निरूपयति — **शब्दस्य तु** इति । अतः तु [1]विशेषेण शब्दो । पदरूपेण प्रवृत्तिं विवृणोति — **प्रकृति** इति । ततः किमित्यत्राह — **प्रकृतिप्रत्यययोः** इति । [2]वाक्यरूपेण प्रवृत्तिं विवृणोति — **पद** इति । वाक्यार्थैक्या-न्निर्विशेषसिद्धिशङ्कां परिहरन्निगमयति — **पदसङ्घात** इति । पदार्थसंसर्गविशेषो वाक्यार्थः, न तु पदार्थप्रहाणमित्यर्थः । निर्विशेषशब्दात् प्रतीतिमात्रं, न तु प्रमितिः । विभक्तीतरपदयोगावश्यंभावात् व्याहतेरित्यभिप्रायवान् **प्रमाण**शब्दः । इत्थं विभागाभावे, पूर्वपक्षसिद्धान्तरूपेण [3]सकलशास्त्र-प्रवृत्तिः । तस्मादयं भ्रान्तप्रयुक्तश्चेत् सङ्कोचः कार्यः । 'नगरे को विशेषः?' इति पृष्टे, 'न कश्चिद्विशेषः', "अविशेषस्तनौ हि ते" इत्यादिवत् ॥

**प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेष-वस्तुनि प्रमाणभावः । ... ... ... अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ॥** (पृ. २६–२७)

अथ प्रत्यक्षस्यापि तथात्वं प्रतिजानीते — **प्रत्यक्षस्य** इति । दृष्टान्ततया वक्ष्यमाण[4]प्रतिसन्धानोपयोगितया च न सविकल्पकोपादानम् । तदर्थं तत्स्वरूपमाह — **सविकल्पकम्** इति । इतरस्यापि तथात्वमाह — **निर्विकल्पकमपि** इति । **स्वस्मिन्** — निर्विकल्पके । **अनुभूत**जात्यादि-

1. विशेषणशब्दो - अ.

2. पदस्यैवेति-वाक्यं तावदास्ताम् । पदमेव सविशेषपरमिति भावः । इति-ग पाठे अधिकः ।

3. न सकलशास्त्रप्रवृत्तिः । तस्मादयं भ्रान्तिप्रयुक्तः-ग.

4. प्रतिसंबन्ध्युपयोगितया-ग.

विशिष्टविषयस्य [1]सविकल्पके प्रतिसन्धानस्य हेतुत्वादित्यर्थः । सकलविशेष-शून्यवस्तुमात्रं हि निर्विकल्पकम् । अतो हेत्वसिद्धिरित्यत्राह — **निर्वि-कल्पकं नाम** इति । कथमित्यत्राह — **तथा** इति । अदर्शनं विवृणोति— **केनचित्** इति । स्वस्मात् [2]गगनात् व्यावृत्तं हि प्रतीयते सर्वम् । पञ्चमीस्थाने **हि**शब्दः । अनुपपत्तिं विवृणोति — **त्रिकोण** इति । **अयोगः** — दृष्टव्याप्तिविरोधेन क्लृप्त्यनुपपत्तिः । सविशेषविषयत्वं न चेत् प्रत्ययत्वहानिरिति बाधकतर्कः । प्रत्ययत्वादिति हेतुश्चाभिप्रेतः । **निर्वि-कल्पकं नाम** इति प्रतिज्ञातस्वमतपरमतसिद्ध्यसिद्ध्योः प्रमाणं प्रत्यक्षं [3]योग्यानुपलम्भश्च इत्युक्तं भवति । एवं कतिपयविशेष[4]विरहितविषयं निर्विकल्पकमित्युक्तं भवति । [5]तथा सति विकल्पशब्दो विकल्पविशेष-विषयः स्यात् ॥

उक्तस्य सविकल्पकनिर्विकल्पकविभागस्योदाहरणमाह — **अतः** इति । किमिदं सङ्केतमात्रमिति शङ्कायां ग्राह्यभेदं दर्शयति — **तत्र** इति । अनुवृत्ति-प्रतीत्यप्रतीत्योः शब्दप्रवृत्तिनिमित्ततां दर्शयति — **प्रथम** इत्यादिवाक्यद्वयेन । **अनुवृत्तिधर्मः** — धर्मो हि विकल्पः । गोत्वविवरणाय **वस्तुसंस्थान**शब्दः । तद्विवरणाय **सास्नादि**शब्दः । अनुवृत्त्यग्रहाज्जातिरगृहीता स्यादित्यत्राह — **न पुनः** इति । अग्रहणासंभवमुपपादयति— **संस्थानरूप** इति । [6]**संस्थान-रूप**शब्दाभिप्रायं विवृण्वन् पूर्वं मानतयोक्तविशिष्टप्रतिसन्धेरनुग्राहकत्वं च वदन् मानमेयानुपपत्त्यभावाद्विशिष्टग्रहणमाह — **संस्थानरूप** इत्यादिना ॥

---

1. सविकल्पकप्रतिसन्धानस्य-ग.
2. गगनाद्वा–ग.
3. योग्यानुपलब्धिश्च–ग.
4. विरहिविषयं निर्विकल्पकमुक्तम्-अ., क.
5. तथा च-ग.
6. यद्वा संस्थानशब्दाभिप्रेतं-ग.

हेतुद्वयेन [1]गन्धादेर्दण्डादेश्च व्युदासः । अनुवृत्त्यग्रहेऽपि प्रकार-प्रकारिभावेन ग्रहणमित्यभिप्रेतम् । "इदमित्थम्" इति हि वक्ष्यते । प्रथमे जातिरगृहीता चेत्, द्वितीयादिषु तदनुवृत्तिर्दुर्ग्रहा । अनेकव्यक्त्य-न्वयरूपा हि सा । स च अन्वयोऽन्वयिनः [2]पूर्वव्यक्तिस्थतया परामर्शेनैव द्वितीयादिषु गृह्यते । अत एव "जात्यादयो विशेष्यं च निर्विकल्पके [3]संबन्धविरहेण गृह्यन्ते" इत्यपि निरस्तम्, मानमेयानुपपत्त्यभावात् । संबन्धधियः [4]संबन्धिपृथग्ग्रहणपूर्वकत्वं न [5]संबन्धधीत्वात्; किन्तु भिन्न-सामग्रीवेद्यसंबन्धिनिष्ठसंबन्धविषयत्वप्रयुक्तम् । सामग्रीभेदाश्च [6]यथायथं देशकालस्वभावविप्रकर्षसौक्ष्म्य[7]व्यवधिषु अन्यतमेन भवन्ति, यथा दण्ड-देवदत्तप्रत्यभिज्ञा विषय[8]भूगन्धादौ । किञ्च दण्डदेवदत्तयोः [9]पृथक्स्थितयोः पृथग्ग्रहणम्, सहावस्थितयोः विशिष्टग्रहणे [10]सन्निहितसंबन्धिविषयीभाव इव सन्निहितसंबन्धविषयीभावेऽप्यनुपयुक्तम् ॥

ननु अनुवृत्तिग्रहाग्रहौ हि वैषम्यमुक्तम् । तत् कथं द्वितीयादिग्रहस्य सविकल्पकत्वनियमः? तस्मिन्नप्यनुवृत्त्यग्रहसंभवादित्यत्राह — **अतः** इति । **अतः**–प्रथमं ससंस्थानवस्तुग्रहणात् । **द्वितीयादिग्रहणम्**–द्वितीयादित्वेन ग्रहणम् । अनेन स्मरणविधुरप्रथमेतरग्रहणव्युदासः । [11]संस्कारयोगविरहौ ग्राहकवैषम्यम्; पूर्वोक्तं तु ग्राह्यवैषम्यमिति द्रष्टव्यम् । द्वयोरपि सविशेष-विषयत्वं निगमयति— **अतः** इति ॥

---

1. गत्यादेर्दण्डादेश्च–अ.
2. पूर्ववृत्तिस्थतया–अ
3. संबन्धिविरहेण.क.
4. संबन्धिपथमग्रहण–ग.
5. संबन्धित्वात्–क.
6. यथाविधं–क.
7. व्यवहितधीषु–ग.
8. भूतगन्धादौ–क.
9. पृथक्सिद्धयोः–ग.
10. सन्निहितसंबन्धिविषयाभाव इव सन्निहितसंबन्धविषयाभावेऽपि–क.
11. संस्कारयोगविरहेण–अ.

**अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थमिति प्रतीतौ ... ... वस्तुगतस्वभावविशेषैस्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रतिज्ञायामिव स्ववाग्विरोधमपि न जानाति ॥**

(पृ. २७-२८)

प्रसङ्गात् भेदाभेदं निराकरोति — **अत एव** इति । **अत एव** — प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसमर्थनादेव । **सर्वत्र** — पिण्डद्वये जातिव्यक्त्योश्च । **अतः**शब्दाभिप्रेतमाह — **इदम्** इति । पिण्डद्वयभेदाभेदनिर्वाहकजातिव्यक्त्योस्तदङ्गीकारे तत्राविरोधायाकारान्तराभावात् प्रतीतिरेव परस्य शरणमिति तद्व्युदासाय प्रथममपि [1]भेदेन प्रतिपत्तिः प्रदर्श्यते — **इदमित्थम्** इति । तदेव विवृणोति — **तत्र** इति । प्रथमपिण्डग्रहणे अभेदेन ग्रहणम् , एकशब्दानुविद्धप्रत्ययः , मत्वर्थीयानपेक्षसामानाधिकरण्यम् सहधीनियमश्च इति [2]जातिव्यक्त्योर्भेदाभेदसाधकहेतुचतुष्टयमाशंक्याह — **तथा हि**— इति । तेषु प्रथमं व्युदस्यति— **प्रथममेव** इति । ततः किं [3]भेदग्रहणस्येत्यत्राह— **व्यावृत्तिश्च** इति । [4] अत्राखण्डभङ्गश्च फलितः । धर्मिणो व्यावृत्तिर्धर्म एवेत्युक्तेः । धर्मस्यैव हि स्वरूपं व्यावृत्तिः । शुक्तित्वग्रहाग्रहयोर्भ्रमनिवृत्त्यनिवृत्तिदृष्टेरिति । गोत्वादिविशिष्टधीरस्तु , [5] ततः किं भेदधिय इत्यत्राह— **सर्वत्र** इति । **सर्वत्र**— [6] दण्डदेवदत्तगोत्वतदाश्रयादिषु । तर्हि सहधीनियमादिवैषम्यत्रयं कथमित्यत्राह— **तत्र** इति ।

---

1 भेदेन प्रदर्श्यते-अ.

2. जातिव्यक्त्योर्भेदाभेदधीहेतुचतुष्टयम्-ग.

3. भेदेन ग्रहणस्य-ग.

4. अत्राखण्डभङ्गं च फलितम् । धर्मिणो व्यावृत्तिधर्म एव-अ.

5. ततः किमित्यत्राह-क.

6. दण्डदेवदत्तगोतदाश्रय-अ.

[1] अपृथक्सिद्धविशेषणत्वादित्यर्थः । एकशब्दानुविद्धधीर्विशेष्यैक्यविषया, एको दण्डीतिवत् । [2] अपृथक्सिद्धविशेषणवाचित्वात् मत्वर्थीयप्रत्ययानपेक्षा । सह-भावो द्वित्वसाधकः, तन्नियमस्तु सुतराम् । [3] अतो विरुद्धम । किञ्च तन्नियमस्तु असाधारणानैकान्त्यात्मैक्यसाधकः । भेदांशस्तु संयोगगतः । तत्संबन्धस्तु शैत्यौष्ण्यसंबन्धवत् विरोधात् दुरुपपादः । [4] नियतः संबन्धश्च नैक्यम् । अजसंयोगवत् ॥

एवं वैषम्यं चेत् कथं 'सर्वत्र' इति ग्रन्थे तुल्यत्वोक्तिरित्यत्राह— **उभयत्र** इति । विशेषणविशेष्यभावप्रयुक्तभेदः समानः, तन्नियमानियमौ वैषम्यमित्यर्थः । यद्वा इदमित्थंभावसाम्यात् भेदश्चेत् उक्तवैषम्यादभेदोऽपि स्यादित्यत्राह— **उभयत्र** इति । इदमित्थंतया भेदोऽनिवार्यः उभयसंमतेः । ततो न तद्विरुद्धाभेदक्लृप्तिः । न ह्यवान्तराकारभेदः साधारणाकारविरोध्याकार-कल्पक इत्यर्थः । जात्यादावेव तन्नियमः, न दण्डादाविति व्यवस्था-सिद्ध्यर्थमैक्यं कल्प्यमित्यत्राह- **इयान्** इति । तदपि इत्थमेवेति कुत इत्यनाश्वासे स्वमाने पर्यवसानात् प्रतिपन्नविरुद्धक्लृप्तिगौरवमयुक्तमित्यर्थः । यद्वा भेदे तुल्ये दण्डादावपि सहधर्मानियमः स्यात्, जातिव्यक्त्योर्वा स न स्यादित्यत्राह - **इयान्** इति । न हि साधारणाकारे सत्यवान्तरभिदा त्याज्येत्यर्थः ॥

[5]अथ प्रतीतिमेव शरणं श्रयतः परस्यैव प्रतीतिपराहतिमाह— **अतः** इति । यदि तयोरैक्यं अन्यतरदेव प्रतीयेत । न च तथा प्रतीयते ।

---

1. अपृथग्विशेषण-अ.
2. अपृथक्सिद्धविशेषवाचित्वात्-अ.
3. अतो विरुद्धत्वम्-क.
4. नियतसंबन्धश्च-अ.
5. अतः प्रतीतिमेव शरणयतः-क.

तथाऽपि नैक्यम् । [1] अन्यतरदप्रतीतं स्यादिति भावः । एतन्निरासस्य [2] सौत्रतामाह— **तदेतत्** इति । मानान्तराणामपि सविशेषविषयत्वमाह — **अतः** इति । त्रित्वमेवाभ्युपेतम् । आधिक्यपक्षेऽप्याह— **प्रमाण** इति । सर्वमानसविशेषविषयत्वविस्तरोक्तौ प्राक् तत्संग्रहोक्ताविव [3] बुद्धिस्थस्वसिद्धिवादेऽपि न निर्विशेषसिद्धिरिति ज्ञापनाय "प्रागुक्तसविशेषत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयम्" इति पूर्वोक्तं स्मारयन् स्ववाग्विरोधं च दर्शयति— **वस्तु** इति ॥

**यत्तु-प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वात् दुर्निरूपः इत्युक्तम् ... ... ... ... वस्तुभेदरूपतत्संस्थानरूपगोत्वादेः गृहीतत्वात् क्षणान्तरग्राह्यं न किञ्चिदिह तिष्ठति ॥** (पृ. २८)

अथ भेदव्युदासककुतर्कान् निरस्यन् परोक्तमानमेयानुपपत्ती अनुवदति—**यत्तु** इति । न तावत् भेदस्य न प्रतीतिः, शास्त्रकथानारंभापत्तेः स्ववाग्विरोधाच्च । नापि तस्या निर्मूलत्वम्, तस्याः कार्यत्वेन कल्प्यत्वान्मूलस्य । न [4] चास्य दुर्निरूपत्वम्, कार्योत्पत्त्यनुगुणरूपत्वात् कारणस्य । नापि निर्विषयत्वम्, तत्साधकमानतर्कविशेषविषयधियोऽपि [5] तथात्वे प्रतिज्ञातनिर्विषयत्वासिद्धेः । अतथात्वे प्रतिज्ञाव्याघाताच्च । बाध्यविषयत्वेऽपि तथा प्रत्यक्षादिभिः बाधो न दृष्ट इति कृत्वा यौक्तिकबाधं परिहरति —**तदपि** इति । **जात्यादेरेव**—स्वपरनिर्वाहकस्य प्रतियोग्यनपेक्षस्यैव चेति भावः ।

---

1. अन्यतरत् प्रतीतं-ग.
2. सौत्रत्वम्-ग.
3. बुद्धिस्थस्वसिद्धवादेऽपि न निर्विशेषत्वसिद्धिः-ग.
4. चास्या दुर्निरूपत्वं, कार्योत्पत्त्यनुगुणतया सुनिरूपत्वात्-ग.
5. तथात्वप्रतिज्ञादिनिर्विषय-क.

**दूरोत्सारितम्** — [1]यावत्कार्यं स्थितेः कल्प्यत्वेऽपि एकक्षण एव सुग्रहत्वोक्त्या अतीव निरस्तमिति भावः । स्वान्यनिर्वाहं परोक्त्यैव दर्शयति– **संवेदनवत्** इति । पक्षवत् सपक्षवच्चेत्यर्थः । अनेन परोक्तदोषस्य परिहृतत्वमाह — **अत एव** इति । **अत एव** — जात्यादेः स्वपरनिर्वाहकत्वात् तद्विशिष्टग्रहणस्यैव भेदग्रहणत्वाच्च इत्यर्थः । [2]क्षणिकत्वाभ्युपगमेनाह — **एकक्षण** इति । प्रतियोग्यनपेक्षया [3]यौगपद्यक्रमैक्यायोगः प्रत्युक्तः । मेयानुपपत्तौ स्वरूपपक्षत्वोक्तदोषश्च तदैव परिहृतः । अन्यपरिहृतः व्यवहारः । व्यवहारविशेषः तु तदपेक्षाशब्दस्वभावात्, अंबादिशब्दवत्; ज्ञानादौ गवादिशब्दे च तदनपेक्षणात्; पर्यायत्वं च परिहृतम् । अर्थानतिरेकेऽपि ब्रह्मस्वरूपादिशब्दवत् सहोक्तिसंभवात् । धर्मपक्षे स्वपरनिर्वाहप्रतियोग्यनपेक्षाभ्यां नानवस्थित्यन्योन्याश्रयौ । धर्मस्य तु स्वरूपमेव भेदः । तत्र भिन्नशब्दस्तु फलसाम्यादौपचारिकः ॥

**अपि च सन्मात्रग्राहित्वे 'घटोऽस्ति' 'पटोऽस्ति' इति विशिष्टविषया प्रतीतिर्विरुध्यते । ... ... ... 'अयमस्मात् भिन्नः' इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात् प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम् ॥** (पृ. २८-२९)

एवं विषयदुर्निरूपत्वे निरस्ते प्रतीत्यनभ्युपगमः परस्य गतिरिति तन्निराकरोति– **अपि च** इत्यादिना । प्रतिपत्ति–व्यवहार–शब्दव्यवस्था-विरोधाः **सन्मात्र** इत्यादिग्रन्थत्रयोक्ताः । प्रतिदूषणं दूष्यैक्यज्ञापनाय

1. यावत्कार्यस्थितेः–क.

2. क्षणिकत्वोपगमेनाह–ख.

3. यौगपद्यक्रमायोगः प्रत्युक्तः । मेयानुपपत्तौ तैः स्वरूपपक्षोक्तदोषश्च तथैव परिहृतः । व्यवहारविशेषे तु तदपेक्षा शब्दस्वभावात् अम्बादि-शब्दवत् । –ग.

**सन्मात्रशब्दः** । [1] प्रतीतिविरोधविशेषम् आह— **किञ्च** इति । कालभेद-वत्प्रत्यभिज्ञाधारावाहिकधीव्युदासाय आह — **विशेषाभावात्** इति । तथोपगमं दूषयति— **प्रतिसंवेदनम्** इति । प्रतिपत्तृविशेषविरोधमाह— **सर्वेषाम्** इति । [2] कथमन्धाद्यभावस्य निषेध इति शङ्कायां पूर्वोक्तप्रतीतिविरोधं विवृण्वन् धीकारणस्याभावं दुर्निरूपतां च व्युदस्यति— **न च** इत्यादिना । **समवेत**शब्दः आश्रितपरः । **विशेषः**— ग्राह्यविशेषः । **विशेषविषयाणि**— व्यावृत्तवस्तुविषयाणि, नानुवृत्तसन्मात्रविषयाणि इत्यर्थः । आगमानर्थक्य-माह— **निर्विशेष** इति । अप्राप्ते हि सोऽर्थवान् । [3] अपसिद्धान्तमाह— **सन्मात्र** इति । निगमयति —**अतः** इति ॥

निगमनग्रन्थप्रसक्तयोरर्थयोः प्रथममुपपादयति — **संस्थान** इति । दृष्टिः क्लृप्तिश्च हेतुद्वयेन निरस्ते । नाममात्रवैषम्यमिति [4]व्युदासायाह— **अतिरेक** इति । असमवायित्वेनेति भावः । न तावत् दर्शनम् जातिसामान्य-व्यक्ति [5] व्यावृत्त्यादिशब्दवदनुगतव्यवहारोऽन्यथासिद्ध इति न कल्पनम् । शब्दानुगमस्तु सौसादृश्यादित्यर्थः । संस्थानम् अवयवसंयोगविशेषश्चेत् आत्मादावव्याप्तिः । स्वरूपं चेन्न विशिष्टविषयता प्रत्यक्षस्य । अनुभयं चेत् असम्मतं स्यादित्यत्राह — **संस्थानम्** इति । **स्व**शब्दो धीस्थपरः । अथ जातेः संस्थानरूपायाः एव भेदत्वमाह— **जाति** इति । **व्यवहारसंभवात्**— प्रतियोगिनिरपेक्षस्य भावस्य तत्सापेक्षशब्दवाच्यत्वं [6] भावाभावव्यवहारे दृष्टम् ।

---

1. प्रतीतिविशेषविरोधं–ग.
2. कथमन्धाद्यभावस्यानिष्टता–ग.
3. अपसिद्धान्ताद्याह–ग. अपसिद्धान्ताद्वाह–क.
4. तद्व्युदासाय–ग.
5. व्यावृत्तादि–अ.
6. अभावाभावव्यवहारे–ग.

स हि [1] प्रतियोग्यनपेक्ष इति भावः । तद्वत् जात्यादिरेव भेदशब्दवाच्य इति भावः । चोदयति — **ननु** इति । परिहरति — **सत्यम्** इति । [2] **व्यवह्रियते च** — न परं गृह्यते इत्यर्थः । कथमित्यत्राह — **गोत्व** इति । कथं तद्व्यवहारे तद्व्यवहार इत्यत्राह — **गोत्वादिः** इति । तथात्वं कथमित्यत्राह — **गोत्वादौ** इति । इतराभेदबुद्ध्यादिनिवृत्तिः अस्तु, ततः किं गोत्वादेर्भेदत्वे इत्यत्राह — **भेद** इति । भेदो ह्यभेदविरोधीति भावः । धर्मत्वं भ्रमासहत्वं च स्वरूपस्य भेदत्वे प्रयोजकम् । भ्रमसहस्य धर्मेतरस्य न स्वरूपं भेद इति कण्ठोक्तम् । प्रतियोगिनिरपेक्षगोत्वादिव्यवहार एव भेदव्यवहारश्चेत् तस्य [3] प्राक् तत्सापेक्षतोक्तिः कथमित्यत्राह — **अयमस्मात्** इति । सा शब्दविशेषस्वभावात्; ह्रानादौ शब्दान्तरे च तदभावादित्यर्थः ॥

**यत्पुनर्घटादीनां विशेषाणां व्यावर्तमानत्वेनापारमार्थ्यमुक्तम् ... .... देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रमपारमार्थ्यहेतुः ॥** ( पृ. २९-३० )

इत्थं [4] मानमेयानुपपत्ती परिहृत्य अनुमानं दूषयितुमनुवदति — **यत्पुनः** इत्यादिना । दूषयति — **तत्** इति । प्रतिपन्नोपाधौ बाधाबाधयोरेव मृषात्वामृषात्वसाधकत्वम्, न व्यावृत्त्यनुवृत्तिमात्रयोरिति विशेषः [5] **परेण** नालोचित इत्यर्थः । सोपाधिकत्वकालात्ययापदेशव्याघाताः प्रपञ्चमिथ्यात्वविषयसर्वानुमानसाधारणाः । आद्यं तत्रैवोपपादितम् । द्वितीयश्च धर्मिग्राहकमानबाधरूपः । तृतीयश्च [6] साध्यसाधकसत्यत्वमिथ्यात्वविकल्प-

---

1 प्रतियोग्यनपेक्षभावः–अ. 2. व्यवह्रियते चापरम्–अ.
3. प्राक्तनापेक्षतोक्तिः–ग. 4. मानमेयानुपपत्ति–ग.
5. परेणानालोचित–ग. 6. धर्मिसाध्यसाधक–ग.

फलरूपः । न च [1]साध्यमिथ्यात्वे नित्यत्वम्, लोकसिद्धतया संविदि पराभ्युपगमेन च बाधबाधस्य प्रामाणिकत्वात् । सत्यत्वसत्यत्वस्यामानकत्वात् [2]तदुक्तिर्नित्यसमैव । न च सत्यत्वं सत्यत्वान्तराभावान्मृषा, नित्यत्ववत् स्वपरनिर्वाहकत्वात्; [3]दृश्यत्वे ब्रह्मणि च अधिष्ठानत्वोपगमात्, अधिष्ठानाध्यस्तयोरेकधीवेद्यत्वाच्च । दृश्यत्वनियमो [4]हेतुश्चेत् कथं सतो दृश्यत्वनियमाभावेनानुमानसौष्ठवात् भेदमिथ्यात्वेन सदनुभूत्यैक्यात् सतो दृश्यत्वनियमाभाव इति । द्रष्टव्यत्वश्रुत्या च तत् । 'अद्रेश्यम्' इत्यादिनिषेधस्तु सामान्यविषयः, 'परिपश्यन्ति धीराः' इति तत्रैवोक्तेः । विशेषनिषेधश्च 'न चक्षुषा' इत्यादेः । व्यावर्तमानत्वं च ब्रह्मणि व्यभिचारी, जडादिभ्यो व्यावृत्तत्वात् तन्मिथ्यात्वे जडादित्वं व्यावर्त्याभावश्च । [5]घटादिव्यावर्तमानस्यापि मिथ्यात्वाभ्युपगमात् । [6]व्यावर्तमानजडादिभ्यो व्यावृत्तत्वं मिथ्या न वा? उभयथाऽपि ब्रह्म व्यावृत्तमिति । अत्र तु [7]सोपाधिकत्वं वक्तुं बाधस्य पक्षान्वयव्युदासाय तं शिक्षयति—**द्वयोः** इति । **बाधितस्यैव** इति । **व्यावृत्ति**शब्दः तद्विशेषपरः । **व्यावर्तमानत्वमात्रम्** वक्ष्यमाणत्वात् मिथ्यात्वसाधिका व्यावृत्तिः बाधितस्यैवेत्यर्थः । ततः किमित्यत्राह—**अत्र** इति । [8]देशकालभेदे सत्यविरोधादबाधं दर्शयितुं तयोरैक्ये विरोधबाधौ दर्शयति — **यस्मिन्**

---

1. साध्यमिथ्यात्वे नित्यसमलोकसिद्धतया-**अ.** साध्यमिथ्यात्वे नित्यसमः, लोकसिद्धतया संविदि पराभ्युपगमेनैव बाधकबाधस्य-**ग.**
2. स्वदुक्तिः-**ग.**
3. दृश्यत्वम् इति-**ग.** पाठे न.
4. हेतुश्चेत् चक्रकम्; सतो ... सौष्ठवात्, तद्भेदमिथ्यात्वेन-**ग.**
5. घटादेः व्यावर्त्यमानत्वस्यापि-**ग.**
6. व्यावर्त्यमान-**ग.**
7. सोपाधित्वं वक्तुं बाधस्यापेक्षान्वय-**अ.**
8. देशकालभेदे सत्यविरोधादिबाधफलाभावमाह-अन्यत्रेति-**अ.**

(मध्ये ग्रन्थपातः) ।

इत्यादिना । च – एवार्थः । [1] निवृत्तिः पूर्वोक्ता । घटादौ तद्विपर्ययमाह – **देशान्तर** इति । विरोधबाधफलाभावमाह — **अन्यत्र** इति । **अन्यत्र**— विरोधबाधस्थले । उक्तं दृष्टान्ते दर्शयति – **रज्जु** इति । इत्थं व्याप्तिः शिक्षिता । फलितमनुमानदूषणं दर्शयति—**इति** इति । **मात्रचा** विरोध-बाधहेतुकव्यावृत्तिव्युदासः । पटे घटाभावः साध्यश्चेत् सिद्धसाध्यता । घटेऽपि चेत्, विलक्षणधीबोध्यत्वं [2] किं हेतुः ? सोपाधिकत्वम् । प्रति-पन्नोपाधौ बाधितत्वं चेत्, असिद्धिरित्यर्थः । न साध्याविशिष्टत्वमुपाधेः, स हि बाधितत्वम् । बाधार्हत्वं हि साध्यम् । ननु [3] यावज्जीवमबाधे विषयेषु संप्रतिपन्नासत्येष्ववृत्तेर्न साध्यसमव्याप्तिः । नैवम् — [4] मिथ्याभूतेष्वित्यनया धिया बाधितत्वात् ईश्वरादिधीबाधितत्वाच्च तेष्वपि वृत्तेः । देशकालविषयभ्रमेषु क्रियादिः उपाधिः । अतश्च न साध्यसमव्याप्त्यभावः । अत एव हि **देशकालादिप्रतिपन्नोपाधौ** इति वक्ष्यते ॥

**यत्तु–अनुवर्तमानत्वात् सत् परमार्थः इति ... ... ... अनु-भूतिरेव सती इत्येतदपि निरस्तम् ॥** ( पृ. ३० )

अथ अनुवर्तमानत्वहेतोः सिद्धसाध्यतामाह—**यत्तु** इति । [5] सत एव सत्यत्वे, व्यधिकरणासिद्धिविरोधौ सिद्धसाध्यता चेति भावः । मिथ्यात्व-निरासमुपजीव्य धीसदैक्यं निरस्यति— **अनुभूति** इति । अनुवर्तमानत्वस्य स्वरूपासिद्धिं सूचयितुं **विशेषशब्दः** । [6] मानार्हतत्तद्विशेषातिरिक्तानुवृत्त-वस्त्वभानात् ॥

1. नित्यवृत्तिः–क.
2. किं च हेतोः सोपाधिकत्वम्–ग.
3. यावज्जीवं बाधाविषयेषु-ग.
4. मिथ्याभूतेष्वप्यमयोर्धिया–ग.
5. अत एव सत्यत्वे व्यधिकरणासिद्धिः । विरोधेऽन्ये सिद्धसाध्यता–ग.
6. मानार्हतद्विशेष–ग.

**यत्तु अनुभूतेः स्वयंप्रकाशत्वमुक्तम् ... ... ... अतोऽनुभूतिश्चेत् स्वतः सिद्धेति वक्तुं न शक्यते ॥** (पृ. ३०)

अथ स्वप्रकाशत्वे शिक्षणीयांशं वक्तुमनुवदति— **यत् तु** इति । वक्तव्यांशमाह— **तत्** इति । **न तु सर्वेषां सर्वदा** [1] इत्येतद्ग्रन्थद्वयेनोपपादयति—**पर** इत्यादिना । [2] **अनुभूतिश्चेत्** इति उक्तवैषम्यविरहोऽभिप्रेतः ॥

**अनुभूतेरनुभाव्यत्वे अननुभूतित्वमित्यपि दुरुक्तम् ... ... ... ... अननुभूतित्वप्रसङ्गो दुर्वारः, गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात् ॥** (पृ. ३०–३१)

अथ व्यतिरेकिणमनुवदति— **अनुभूतेः** इति । अनिष्टं प्रसञ्जयति — **स्वगत** इति । परधियो [3] वेद्यत्वानभ्युपगमे लौकिकवैदिकव्यवहारविरोधौ ग्रन्थद्वयेनाह— **पर** इत्यादिना ॥

अथ कालात्ययापदेशं वक्ति— **न च** इत्यादिना । तदर्थं धीस्वरूपं शिक्षयति— **अनुभूतित्वम्** इति । [4] घटादष्टातीतानुभवा व्यावर्त्याः । **वर्तमानत्वम्**— विषयसंबन्धरूपेण । **अनुभूतित्वम्**— ज्ञानत्वम् । अथ [5] स्वसिद्धिवादिनामप्यभिमतं लक्षणान्तरमाह— **स्व** इति । दण्डचक्रेन्द्रियासंभवा व्यावर्त्याः । इन्द्रियं हि न स्वसत्तयैव, किन्तु ज्ञानद्वारा साधनम् ।

---

1. इत्येतद्ग्रन्थद्वयमुपपादयति- **क.**

2. 'सर्वदा इत्येतदुपपादयति–स्वानुभवस्यापि इति । अनुभूतेरनुभाव्यत्वात् असंभवे परोक्तानुमानं दूषयति-(अनुभूतिश्चेदिति)' इति **ग** पाठे अधिकः ।

3. वेद्यत्वानुपगमे-**अ.**

4. घटदष्टातीतानुभवा व्यावृत्ताः । पक्षान्तरमाह–स्वेति–**ग.**

5. स्वसिद्धवादिनां- **क.** अस्वसिद्धिवादिनां-**अ.**

प्रतीतस्वीव्यावर्तकपदद्वयानुपपत्तेः । ततः किमित्यत्राह— ते च इति । न हि साधारणाकारोऽसाधारणाकारविरोधीति भावः । अथ सोपाधिकत्वमाह— **घटादेस्तु** इति । प्रतितर्कपराहतिमाह— **तथा** इति । "ख्यातेः नासद्" इत्यसतो निषेधाधिकरणत्वस्य परैरुपगमात् दृष्टान्तता ॥

**गगनकुसुमादेरननुभूतित्वम् असत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत् ... ... ... ... अतः 'अनुभाव्यत्वेऽननुभूतित्वम्' इत्युपहास्यम् ॥** ( पृ. ३१ )

उपाधिं शङ्कते—**गगन** इति । [1] घटादावुपाधिः सुवच इत्याह— **एवम्** इति । तस्य पक्षे प्रसक्तिं शङ्कते—**अनुभूतेः** इति । अननुभाव्यत्वेऽपि तत् प्रसञ्जयति— **अननुभाव्यत्वेऽपि** इति । [2] धीर्वेद्या, धीत्वात्; यदवेद्यं तन्न धीः, यथा खपुष्पम् । अधीत्वम् अज्ञानाविरोधित्वं च खपुष्पे असत्त्वाच्चेत्, असत्त्वमपीहावेद्यत्वे प्रसजेत् । [3] यद्यत् वेद्यत्वे, तत्तदवेद्यत्वेऽपि प्रसजेत् । तत् [4] धर्मिग्राहकमानविरुद्धं चेत्, वेद्यत्वपक्षेऽपि तथा इति भावः ॥

**यत्तु संविदः स्वतः सिद्धायाः प्रागभावाद्यभावादुत्पत्तिर्निरस्यते, ... ... ... ... ... ... योग्यानुपलब्ध्यैवाभावः समर्थित इति उपशाम्यतु भवान् ॥** (पृ. ३१–३२)

अथ सुगतसाम्यव्युदासकतया [5] परोक्षं धीमित्यत्वमनूद्य [6] व्युदस्यति–

1. घटादावप्युपाधिः–ग.

2. प्रकाशनियमाभावाविरोधित्वमज्ञानाविरोधित्वम् । अत्रेदं व्यतिरेक्यनुमानम् धीः वेद्या ग.

3. यद्वेद्यत्वे तत् तदवेद्यत्वेऽपि–क. 4. धर्मिग्राहकविरुद्धं–ख.

5. परोक्षधीनित्यत्वं–क. 6. व्युदस्यते–ख.

**यत्तु** इति । **अन्धस्य** इति । असिद्धमत्यन्तासिद्धेन साध्यत इत्यर्थः । ग्राहकाभावमाशंक्याह—**प्राक्** इति । विरोधं शङ्कते— **कथम्** इति । परिहरति— **न हि** इति । समकालत्वस्य ग्राह्यमात्रप्रयुक्तता निरस्ता । अथ [1]ग्राह्यविशेषप्रयुक्ततां दूषयितुं शङ्कते — **अथ** इति । [2]वचनस्य वक्तव्यदृष्टिरपेक्षितेत्यभिप्रयन्नाह—**किम्** इति । [3]दृष्टिसिद्धावभावसिद्धिमाह—**हन्त** इति । भावाभावसमकालत्वोपगमेन [4]दूषितम् । अथ तदत्यन्तायुक्तमित्याह—**तत्प्राक्** इति । समकालत्वं न चेत्, असत्यपि घटे 'घटोऽयम्' इति धीः स्यादित्यत्राह—**इन्द्रिय** इति । **प्रमाणानां च** इति । च—शब्दात् प्रत्यक्षस्य चेत्युक्तं भवति । धीत्वं, मानत्वं, प्रत्यक्षत्वं वा न तत्र प्रयोजकम्, किन्तु तदवान्तरमैन्द्रियकप्रत्यक्षत्वमित्यर्थः । उपपादयति—**स्मरण** इति । **आदि** शब्दादीश्वरप्रत्यक्षम् । तर्हि मानमेयाविनाभावः क इत्यत्राह—**अतः** इति । **अतः**— समकालनियमाभावाद्धि तत्सिद्धिरित्यर्थः । [5]संप्रतिपन्नमानेषु [6]तददर्शनात् तदनुगुणसंबन्धो वाच्य इत्यर्थः । कथमित्यत्राह—**न हि** इति । तर्हि क इत्यत्राह— **अपि तु** इति । स्मृतिनिर्विषयत्वमर्थान्निरस्तमित्याह— **अतः** इति । **अतः** —समकालत्वनियमाभावात् [7] ॥

[8]धीरेवाभावग्राहिकेत्युक्तम् । तस्याः प्रमाणानन्तर्भावात् [9]ग्राहकत्वाभावं शङ्कते — **अथोच्येत** इति । मानान्तरान्वसेयत्वं विवृणोति — **न हि** इति । निगमयति — **अतः** इति । परिहरति — **यदि** इति ।

---

1. ग्राह्यविशेषप्रवृत्ततां-अ.  2. वचनवक्तव्य-अ.

3. दृष्टिसिद्धावसिद्धिमाह-क  4. दूषणमुक्तम्-ग.

5. यद्वा संप्रतिपन्नमानेषु तद्दर्शनात् तदनुगुणं संबन्धो-ग.

6. तद्दर्शनात्-क.  7. नियमाभावादित्यर्थः-क.

8. धीरेव भावग्राहिका-अ.  9. ग्राहकाभावं-अ.

[1]**यदि:** किमर्थः। किम् अत्ररूढश्चेत् [2]तर्हि इत्यर्थः। षष्ठे माने पराङ्गीकृतमिति **योग्यानुपलब्ध्यैवाभावः समर्थितः** इति इति ॥

**किञ्च प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत् ... ... .... .... तास्वपि दशासु अनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्। न च तदस्ति॥** (पृ. ३२–३३)

अर्थापत्तिमप्याह — **किं च** इति। [3]सविषयस्य निर्विषयस्य वा ज्ञानस्य नित्यत्वमिति विकल्पमभिप्रेत्य प्रथमं दूष्यते — **प्रत्यक्ष** इत्यादिना। घटसत्ताकालकार्त्स्न्यपरः **सर्वदा**शब्दः। ततः किमित्यत्राह — **तदप्रतीतिः** इति। **अप्रतीतिः** — अप्रकाशः। ज्ञानस्य [4]व्यवहारानुगुण्याभावो विवक्षितः। एवं [5]विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्त्या धियः कादाचित्कत्वमुक्तम्। अथ घटाद्यनित्यत्वान्यथानुपपत्तिमाह — **घटादि** इति। नित्यतया अनवभासान्यथानुपपत्तिमाह— **नित्यं चेत्** इति। यत् पूर्वपक्षिणा संविदः स्वतःसिद्धत्वेन ज्ञानान्तराविषयत्वात्, ज्ञानान्तरेण तदभावो दुर्ग्रहः इत्युक्तम्, तत् ज्ञानान्तरेण तन्नित्यत्वग्रहेऽपि समानमित्यभिप्रयन्नाह— **स्वतःसिद्धम्** इति। यद्वा [6]प्राथमिकार्थापत्तेरेव अनुग्राहकतर्कद्वयं **घटादि** इत्यादि [7]ग्रन्थद्वयोक्तिः॥

अनुमादिधियामपि तथात्वे विषयनित्यत्वं प्रसञ्जयति— **एवम्** इति। **एवं**— प्रत्यक्षज्ञानस्य कालानवच्छेदे सतीत्यर्थः। अनुमानादिधियां वेद्यसमकालत्वनियमाभावेऽपि वेद्यातीतत्वागामित्वे धीकालापेक्षयेति स्वनित्यत्वे

---

1. यदिनः किमर्थः—अ. 2. तदेत्यर्थः· ग.
3. सविषयस्य वा—क. 4. विषयव्यवहार—ग.
5. विषयव्यवहारानुगुण—ग. 6. प्रथमोक्तार्थापत्तेः—घ.
7. ग्रन्थद्वयोक्तम्—घ.

[1] तदसिद्धिः । न तु लिङ्गाद्यपेक्षया । [2] लिङ्गादिजधियो लिङ्गादितत्काल-गोचरत्वाभावात् । लिङ्गादेः प्रत्यक्षधीवेद्यत्वात् [3] उक्तरीत्या प्रत्यक्षस्य च कालानवच्छिन्नविषयत्वादिति भावः । **कालानवच्छिन्नाः** इति अनुगतनित्य-लक्षणसूचनम् । कथमित्यत्राह—**संवित्** इति । संविदो विषयान् अवच्छिन्नान् अनवच्छिन्नान् वा यथा प्रकाशयन्ति, तथैव विषयैर्भवितव्यमित्यर्थः । मृदोऽनुवृत्तावपि [4] घटाद्यवस्थयेव धियोऽपि प्रत्यक्षाद्यवस्थत्वेनानित्यत्वोपपत्तिः । [5] अत व्योम्नः इव धियोऽवच्छेदकघटादिविगमे नित्यत्वमित्यत्राह— **न च** इति । **विषयः**— अवच्छेदकः । विशिंषन् हि विषय उच्यते । अतः आश्रयस्यापि ग्रहणम् । उत्तरत्र तु पृथङ्निर्देशात् **विषय**शब्दः कर्ममात्रपरः । इह तदभावादवच्छेदकपरः । हेत्वन्तरं चाह— **विषय** इति । धूमपतनयो-रभावेऽपि वह्निगुरुत्वयोः [6] सिद्धिवत् स्वप्रकाशत्वसिद्धिः किं न स्यादित्य-त्राह— [7] **संविदः** इति । सा च समव्याप्त्यभावात् । धूमपतनयोरभावेऽपि मानान्तरेण वह्निगौरवयोरिव, अत्र न मानान्तरेण धर्मिसाध्ययोः सिद्धि-रभ्युपगतेति [8] स्वतः परतश्च असिद्धेः संविदस्तुच्छतेत्यर्थः । न तुच्छता, स्वापादौ भानादित्यत्राह— **न च** इति । योग्यानुपलब्धिमुपपादयति— **तास्वपि** इति ॥

**ननु अनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः । अतः .... .... ... ... किं भवतः परमार्थभूतोऽप्यस्ति विकारः, येनैत-द्विशेषणमर्थवत् भवति । न ह्यसावभ्युपगम्यते ॥** (पृ. ३३)

---

1. तदप्यसिद्धिः–क. 2. लिङ्गादि च धियः-क.
3. उक्तनीत्या–ग. 4. घटाद्यवस्था । एवं-क.
5. अथ–अ. 6. सिद्धवत्–अ.
7. संविद इति । समव्याप्त्यभावात् । स च धूमपतनयोः-अ.
8. स्वप्रकाशत्वस्यासिद्धेः–ग.

अनुभूतेः स्मृतिव्याप्यत्वं नेति चोदयति—**ननु** इति । परिहरति–**उच्यते** इति । [1] भवान्तरानुभूतव्युदासायाह–**निखिल** इति । [2] जातिस्मृति-हेतुसुकृतयोगव्युदासाय **प्रबल**शब्दः । न परं साधकाभावः, बाधकं चाह–**सुप्त** इति । अन्यथासिद्धिमाशंक्याह — **न च** इति । ज्ञातृज्ञेययोः स्मृतिहेतुत्वं व्याप्त्या चेत् अनुभवहेतुत्वमपि स्यात् । व्याप्त्यनादरे स्मृति-हेतुत्वमपि न स्यात् इति भावः । [3] अहमर्थविगममभ्युपगम्योक्तम् । अथ स नेत्याह — **तास्वपि** इति । प्रागुक्तार्थविरोधं दर्शयंश्चोदयति — **ननु** इति । परिहरति — **सत्यम्** इति । **आत्मानुभव** — [4] अहमर्थस्य स्फुरणम, प्रभातिरिक्तस्य दीपस्य औज्ज्वल्यवत्; न त्वनुभूत्यनुभव इत्यर्थः । अनुभूतिविरहे स आत्मा निर्विशेष इत्यत्राह–**स च** इति । इह किं निषिध्यत इत्यत्राह–**इह** इति । [5] शब्दान्तरेणासन्मतोक्ति-रिति पराभिप्रायं शङ्कते— **केवल** इति । **आत्मानुभवे**—आत्मानु-भववेलायाम् । [6] अत्राह— **न** इति । विषयरहिताऽपि सा धर्मभूता संवित् साश्रयेत्यर्थः । यद्वा **आत्मानुभवः**– आत्मस्फुरणम । आत्मानुभवो नाम [7] केवला संविदिति शङ्का । अत्राह– **न** इति । धर्मिस्फुरणरूपा संवित् साश्रया । स्फुरणं हि स्फुरदाश्रयो धर्म [8] इत्यर्थः । अथ पूर्वप्रकृतं निगमयति— **अतः** इति । परतः पक्षेऽपि [9] तत्सिद्धिमाह— **अनुभूतेः** इति ॥

---

1. भावान्तरानुभूति–ग.
2. जातिस्मृतिहेतुसुकृतायोगव्युदासाय क. सुकृतव्युदासाय–ग.
3. अहमर्थविगममुपेत्योक्तम्–अ. असामर्थ्यविगममभ्युपेत्य–ग.
4. अहमर्थस्य स्मरणम्–क.
5. शब्दान्तरेणासन्मतोक्तिः । पराभिप्रायं–ग.
6. इत्यत्राह–अ.
7. केवलसंवित्–क.
8. इत्यर्थः आत्मस्फुरणम्–क.
9. तत्सिद्धमाह–अ.

[1] अजत्वमभ्युपगम्यापि विकारान्तराभावं व्युदस्यति—**यदपि** इति। 'भावत्वे सति' इति विशेषणेऽपि तद्वैयर्थ्यमभिप्रेत्योपालभते—**भावेष्विति** इति। व्यभिचारमाह— **तथा** इति। **तथा** – भावरूपा। **चः** ह्यर्थः; अप्यर्थो वा। परिहारं शङ्कते— **तद्विकाराः** इति। विशेषणवैयर्थ्यमाह— **किम्** इति। अर्थवत्त्वेऽपसिद्धान्त इति भावः। [2] उत्पत्तिव्याप्यविकारसत्त्वे [3] दृष्टान्तस्य साध्याव्यावृत्ततया हेतोः व्याप्यत्वासिद्धिः [4] फलति॥

**यदपि — अनुभूतिरजत्वात् स्वस्मिन् विभागं न सहते ... ... ... ... अभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्, तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्॥** (पृ. ३४)

अथ अनुत्पत्तिलक्षणहेत्वसिद्धया स्वगतनानात्वनिरासासिद्धिमभिप्रेत्य भेदमात्रस्य [5] विजातीयभेदस्य उत्पत्तिव्याप्यत्वं निरस्यति — **यदपि** इत्यादिना। सर्ववाद्यभिमते मृषावादिभिरेवाभिमते च स्थले व्यभिचारं ग्रन्थद्वयेनाह— **अजस्यैव** इत्यादिना। पूर्ववत् परिहारमाशङ्क्य दूषयति— **स** इति। **प्रतिबन्धः** – [6] व्याप्तिः। दूषणान्तरमाह— **अविद्याया** इति। **अथ** सजातीयभेदाभावं व्युदस्यति— **अबाधित** इति। घटकरकाकाशदृष्टान्तमाशङ्क्याह— **छेद्य** इति। संबन्धिसंयोगादीनामिवोत्पादकोऽभिव्यञ्जकश्च धियः, न तु [7] वियतः इति घटादिव्यञ्जकमात्रम्। व्यतिरेकेऽनुपलम्भादिति भावः॥

---

1. अजत्वमभ्युपगम्यापि-अ. अजत्वमभ्युपेत्यापि-ग.

2. उत्पत्तिव्याप्ति-क. 3. दृष्टान्तसाध्या-ग.

4. फलितेति-ग. 5. विजातीयभेदस्य च-घ.

6. व्याप्तः-अ. प्रतिबद्धः व्याप्तिः-च.

7. वियत इव घटादिव्यञ्जकमात्रव्यतिरेके-ग.

अथ स्वगतभेदनिरासकमनुभूतित्वं व्यतिरेकि, दृश्यत्वम् अन्वयि च दूषयति— **यदपि** इति । अन्वयिनः पक्षत्रयवृत्तित्वलक्षणसाधारणानैकान्तिकत्वम्, व्यतिरेकिणस्त्वसाधारणानैकान्तिकत्वं दृश्यधर्मान्तरराहित्यात् । सपक्षेषु नित्यत्वादिषु सत्स्वपि तेषु अनुभूतित्वादिति हेतोरवृत्तेः । **न च** इत्यादि । स्वरूपात् परस्परं च भेदः । तेषां स्वरूपमाह— **स्वसत्तया** इत्यादिना । उभयग्रन्थानुगतप्रकाशशब्दार्थमाह— **प्रकाशश्च** इति । **सर्वे** इति । अनुगतनित्यलक्षणं प्रागुक्तम् । अत्र तु कालादन्यस्य तेन सविशेषत्वज्ञापनाय एवमुक्तम् । अतद्व्यावृत्तिरूपतामाशङ्क्याह— **तेषाम्** इति । [1] शौक्ल्यादिदृष्टान्तवैषम्यमभिप्रेत्याह— **संविदि तु** इति । तुशब्दस्तद्वैषम्ये । तच्च प्रागुक्तम् । **किमपि नोक्तं भवेत्** इति । सिद्धसाध्यत्वं, 'संविन्नित्या' इत्यादिसमानाधिकरणपदप्रयोगवैयर्थ्यं चेति भावः ॥

**अपि च संवित् सिध्यति वा न वा? सिध्यति चेत् ... ... ... ... अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत् कर्तृत्वमपि दुर्घटमिति ॥**　　(पृ. ३४-३५)

निर्भेदत्वे निराकृते तन्मुखेन संविदात्मत्वं निराकर्तुमुपक्रमते — **अपि च** इत्यादिना । [2] **सधर्मकता** — मानानां सविशेषविषयत्वोक्तेः । [3] सिध्यतः स्वव्यवहारानुगुणत्वलक्षण [4] सिद्धिधर्मकत्वाद्वा इति भावः । तुच्छत्वसविशेषत्वव्युदासाय परोक्तं शङ्कते — **सिद्धिः** इति । सिद्धेः सिद्ध्यन्तरानपेक्षत्वादिति भावः । सविशेषत्वमापादयन् पृच्छति — **कस्य** इति । **कस्य** आश्रयस्य, **कं** विषयं प्रति । अतथात्वे बाधमाह — **यदि** इति । तद्रूप-

1. शौक्ल्यादिदृष्टान्तवैयर्थ्यमभिप्रेत्य-अ.
2. 'सधर्मता' इति मूले पाठः ।
3. सिद्ध्यतस्य कर्मव्यवहार-अ.
4. सिद्धिधर्मकत्वाच्च-ग.

पादयति — **सिद्धिर्हि** इति । उत्तरं शङ्कते — **आत्मनः** इति । **आत्म**शब्दः पुरुषवाची । परिहरति — **कोऽयम्** इति । **किं** क्षेपे । [1] सिद्धिप्रतिसंबन्धित्वं प्रत्यक्षम् **अयम्** इति पदेन सूच्यते । तद्धि आत्मलक्षणम् । तादृश आत्मा अहमर्थ एव, न तु धीरिति भावः । इममभिप्रायमजानन् [2] पूर्वपक्षी **कोऽयम्** इति प्रश्नमात्रं मन्वानः पूर्वोक्तं संविदात्मत्वं स्मारयन् प्रतिवक्ति — **ननु** इति । दूषयति — **सत्यम्** इति । **दुरुक्तत्वम्** उपपादयति — **तथा हि** इति । धर्मधर्मिरूपपुञ्जाभिप्रायो **जात** शब्दः । किं ज्ञप्तिरुत्पत्तिर्वा सिद्धिः ? ज्ञप्तिश्चेत् का सा कीदृक् ? तस्या उभयसंबन्धित्वे किं मानम् ? वृत्तिज्ञानं हि सविषयाश्रयम्, [3] केवला हि धीः आत्मा, विषयोपादानं च किमर्थमित्यादिशङ्कायामाह — **एतदुक्तम्** इति । **व्यवहार** इत्यादिना सिद्धिस्वरूपमुक्तम् । **अवगच्छामि** इत्यादिना ज्ञानसंविदैक्यम् । **आत्मसाक्षिक** इति तत्संबन्धित्वे मानम् । तथात्वं तवापि इष्टमित्याह—**एतत्** इति । कर्मनिर्देशफलं दर्शयति— **अस्य** इति ॥

**तथा हि— अस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिव ... ... ... ... अनुभूतिमात्रमेव परमार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः ॥** (पृ. ३५)

धर्मधर्मिभावो दर्शितः । स्थिरत्वास्थिरत्ववैषम्यमाह— **तथा** इति । उभयं क्रमात् ग्रन्थद्वयेनाह — **कर्तृस्थैर्यम्** इत्यादिना, **अहं जानामि** इत्यादिना **च** । प्रत्यभिज्ञाविषयतया **स्थैर्यम्** उक्तम् । अथ तदाश्रयतया स्थैर्यमाह— **एवम्** इति । **न घटते** इति । ज्वालाप्रत्यभिज्ञावत् नान्यथासिद्धिः इति भावः । उक्तमुपपादयति— **अन्येन** इति ॥

---

1. सिद्धिप्रतिसंबन्धिप्रत्यक्षत्वं–**ग.**
2. पूर्वपक्षं–**क.**
3. संवित् केवला हि धीरात्मा । इह विषयोपादानं–**ग.**

अथ धिय [1] आत्मत्वाय नित्यत्वमुपगम्याह– **किं च** इति । [2] न केवलमनित्यत्वे इति **अपि**– अर्थः । कथमित्यत्राह— **प्रतिसन्धानं हि** इति । तदेव दर्शयति— **अहम्** इति । तस्यानिष्टत्वमाह– **भवतः** इति । इष्टत्वेऽपि गतेर्गन्तृत्ववत् अयुक्तमित्याह— **अनुभूतिः** इति । उत्पत्त्यादिकं सविषयायाः [3] नित्यत्वादिकं त्वविषयायाः इत्यत्राह— **संवित्** इति । कल्पनालाघवमाशङ्क्याह — **उभय** इति । संविदपि किं [4] न लभ्यते ? उपलब्धिर्ज्ञातुरपि तुल्येति भावः । धियो विषयाश्रयसंबन्धित्वमुपलब्धमपि युक्तिहतमित्यत्राह— **अनुभूति** इति ॥

**ननु च— 'अहं जानामि' इत्यस्मत्प्रत्यये योऽनिदमंशः ... ... ... नैतदेवम्, 'अहं जानामि' इति धर्मधर्मितया प्रत्यक्षप्रतीतिविरोधादेव ॥** ( पृ. ३५-३६ )

[5] **ननु च** इत्यादि । **अनिदमंशः** परागर्थेतरः प्रत्यगर्थ इत्यर्थः । तत्र हेतुः **प्रकाशैकरसत्वम्** ; तत्र हेतुः **चित्पदार्थत्वम्** । युष्मदर्थत्वे हेतुः **युष्मदर्थलक्षणोपेतत्वम्** । तच्च **धीबलनिर्भासनम्** । तत्र हेतुः [6] **चिन्मात्रातिरेकः** । धीः चित्त्वात् स्वसिद्धिः ; स्वसिद्धित्वात् प्रत्यक् ; ततः आत्मा । यन्नैवम्, तन्नैवम्, यथा घटः इति संविदात्मत्वाय व्यतिरेकित्रयम् । ज्ञानाचिदन्यत्वात् अस्वसिद्धिः ; ततः पराक् ; ततः अनात्मा, यथा घटः इति

---

1. आत्मत्वव्युदासाय-ग.

2 न केवलमनित्यत्वमित्यर्थः-अ.

3. नित्यत्वादिकं च निर्विषयाया.-ग.

4. न दृश्यते–क.

5. 'प्रत्यक्त्वलक्षणमात्मत्वमहमर्थात्मत्वे न सिध्यति, संविदात्मपक्ष एव सेत्स्यतीति चोदयति '–(ननु च) इति ग पाठे अधिकः ।

6. चिन्मात्रातिरेकित्वधीः ।–ग.

अहमर्थानात्मत्वान्वयित्वयं चाभिप्रेतम् । परिहरति— **नैतत्** इति । प्रतीतिविरोधमाह— **जानामि** इति । धियः स्वसिद्धित्वमिष्टम्; ज्ञातुर्जडत्वं प्रतिवक्ष्यते । ज्ञातुः [1] प्रत्यक्तया धीधर्मकतया, धियश्च तद्धर्मत्वेन पराक्त्वेन च सुखादिवत् प्रतीत्या चतुर्णां हेतूनां कालात्ययापदेश इति भावः । [2] ज्ञप्त्यात्मत्वज्ञातृपराक्त्वानात्मत्वसाधकानामसिद्धिश्च ॥

**किं च— अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ।**

**......................**

**"ज्ञोऽत एव" इत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥**

(पृ. ३६)

प्रत्यक्त्वं विपरीतसाधकं चेत्याह— **किं च** इति । स्वस्मै [3] भान् प्रत्यङ्, परस्मै तु पराङ् । अहं स्वस्मै भाति, धीश्च सुखवत् परस्मा इति [4] विपरीतत्वाद्धि इत्यर्थः । "कोऽहमिति", "शब्दोऽहम्" इत्याद्यागमविरोधश्चेहाभिप्रेतः । **हिः** हेतौ । ज्ञानं [5] परागनात्मा, अनहंत्वादिति चार्थसिद्धम्, अहंधिया पराचो भेदोक्तेः । श्रुत्यर्थापत्तिमाह— **निरस्त** इति । ततः किमित्यत्राह— **अहम्** इति । यत्संबन्धिदुःखध्वंससुखप्राप्ती इष्टे तन्नाशे मुक्तावधिकारिविरहात् अप्रामाण्यमित्यर्थः । धीस्थितिमुपगम्याह— **मयि** इति । स्तम्भे स्थिते स्ववधोऽपुमर्थ इति भावः । न च तत्स्थितिरित्याह— **स्व** इति । [6] घटाकाशवत् इत्यत्राह— **छेत्तुः** इति । अस्य

1 प्रत्यक्षतया-अ

2. ज्ञप्त्यात्मत्वे ज्ञातृ-अ.

3. भासनात् प्रत्यक् ...... पराक्-ग.

4. विपरीतसिद्धिरित्यर्थः-ग.

5. परागनात्मा च-ग.

6. घटाकाश इत्यत्राह-अ.

भाव: पूर्वोक्त । [1] ज्ञात्रात्मत्वं निगमयति — **अतः** इति । अथ श्रुतिस्मृति-सूत्रस्वारस्यं दर्शयन् संविदनात्मत्वं निगमयति— "**विज्ञातारम्**" इत्यादिना **स्थितम्** इत्यन्तेन । मुक्तौ ज्ञातृत्वसिद्ध्यै "**जानात्येव**" इति । सौत्रं [2] **ज्ञत्वम्** आत्मान्वयीति ज्ञापयितुमुक्तम् "**नात्मा**" इति ॥

**अहं प्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । ... ... ... एवमात्मा चिद्रूप एव चैतन्यगुण इति । चिद्रूपता हि स्वयंप्रकाशता ॥** (पृ. ३६–३७)

अथ स्ववाग्विरोधमाह — **अहंप्रत्यय** इति । [3] '**अस्मदर्थो युष्मदर्थः**' इति व्याहतिः । अथ [4] चिदन्यत्वादसिद्धित्वादिव्याप्तिः कथमिति शङ्कायां हेत्वसिद्धिं व्याप्तिमप्याह—**न चासौ** इति । **स्वयंप्रकाशत्वात्**— [5] स्वव्यवहारानुगुण्यशक्तियुक्तत्वात् । तच्च कथमित्यत्राह — **चैतन्य** इति । चेतना ज्ञानम्, [6] तस्य भावः चैतन्यम्, ज्ञानत्वगुणकता; ज्ञानस्वरूपते-त्यर्थः । अस्मिन्नर्थे उदाहरिष्यमाणश्रुतेरनुग्राहकतर्कमाह — **य** इति । [7] आत्मदीपधर्मभूत [8] ज्ञानप्रभयोः घटादिविषयं प्रति साक्षाद्वा प्रणाड्या वा [9] यादृशं व्यवहारानुगुण्यं भवति, तादृशव्यवहारानुगुण्यमिह **प्रकाश**शब्दार्थः । आत्मनः स्फुरणम्, [10] दीपस्य तमोविरोधिरूपमौज्ज्वल्यं तद्धर्मक इत्यर्थः ।

---

1. 'सत्ता सामान्याकारः, ज्ञप्तिता विषयप्रकाशनरूपविशेषाकारः'-इति **ग** पाठे अधिकः ।
2. ज्ञातृत्वमात्मन एवेति-**ग**.
3. अस्मदर्थो न-**ग**.
4. चिदन्यत्वादसिद्धत्वादि-**क**. चिदन्यत्वात्स्वसिद्धत्वादिव्याप्तिः-**ग**.
5. स्वव्यवहारानुगुण-**ग**.
6. तद्भावः (?) **क**.
7. आत्मदीपयोः-**ग**.
8. ज्ञानप्रभयोः विषयं प्रति-**क**.
9. यादृग्व्यवहार ... ... तादृग्व्यवहार-**ग**.
10. दीपस्य तु तमोविरोधिरूपमौज्ज्वल्यं प्रकाशः तद्धर्मकः-**ग**.

**अनन्याधीनप्रकाशः** — स्वधर्मनिरपेक्षप्रकाशः । न हेत्वसिद्धिः । सपक्षे [1] प्रत्यक्षेणैव वक्ष्यमाणश्रुत्या ज्ञातुः प्रकाशत्वसिद्धेः । यद्वा अनुमितिविवक्षयाह— **चैतन्य** इति । 'धूमवत्त्वमेव हि अग्निमत्त्वम्' इतिवदुक्तिरियम् । [2] धीधर्मकत्वात् **स्वप्रकाशत्वम्** इत्यर्थः । व्याप्तिमाह—**य** इति । यः साक्षाद्वा प्रणाड्या वा स्वव्यवहारेऽत्यन्तसजातीयानपेक्षवस्तुधर्मकः, सः स्वधर्मानपेक्षप्रकाश इत्यर्थः । [3] ज्ञाता स्वधर्मभूतप्रकाशतुल्यप्रकाशः, प्रकाशधर्मकत्वात् । यो यादृक्प्रकाशधर्मकः, सः स्वयमपि तादृक्प्रकाशः, यथा दीपः इति प्रयोगः । अनुमितिपरत्वादपि श्रुत्यनुग्राहकपरत्वं युक्तम्, **चैतन्यस्वभावता** इति प्रथमायाः स्वारस्यात्, उपरि **तथा हि** इत्युक्तेश्च । न हि 'तथा च' इत्युक्तम् । [4] अथ भान्यत्वात् घटवत् दीपो भानिर्भास्य इति साध्यविकलो दृष्टान्त इत्यत्राह — **न हि** इति । **अप्रकाशत्वम्** — प्रकाशरूपत्वाभावः । अतः **अन्याधीनप्रकाशत्वम्** । आकांक्षापूर्वक [5] मर्थस्थितिमाह— **किं तर्हि** इति । [6] तेजस्त्वात् भावात् भानैरपेक्ष्यदीपस्य [7] व्यभिचारादर्शनेऽपि, न तद्व्याप्तिभङ्गो न्याय्यः, अतिप्रसङ्गात् । [8] भान्यत्वं न साध्यसमव्याप्तम् । तमसि भानैरपेक्ष्यात्, भान्यत्वं तमस्यनैकान्तिकमिति भावः । दीपः प्रभानपेक्षश्चेत्, प्रभावद्विषयमपि भासयेदित्यत्राह— **अन्यान्** इति । परिच्छिन्नस्वरूपत्वादिति भावः ॥

ज्ञानस्य गुणत्वे ज्ञानरूपस्य आत्मनो न ज्ञानाश्रयत्वम् । द्रव्यत्वे तु

---

1. प्रत्यक्षेण वक्ष्य-**क**　　2. धीधर्मकत्वात् प्रकाशत्वम्-**क**.

3. ज्ञाता स्वधर्मभूतप्रकाशनिरपेक्षप्रकाशः । यो यादृक्प्रकाशधर्मकत्वात् प्रकाशधर्मकः, सः स्वयमपि-**ग**.

4. चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वात्-**ग**.

5. अर्थसिद्धिमाह-**ग**.

6. तेजःस्वभावात् भानैरपेक्ष्यं दीपस्य-**ग**.

7. व्यभिचारदर्शनेऽपि-**क**.

8. भान्यत्वसाध्यव्याप्तं तमसो भानैरपेक्ष्यात्-**ग**.

नायुतधर्मधर्मिता । [1] दीपतत्प्रभादिवच्चेत् न, विशीर्णदीपावयवानामेव [2] प्रभात्वादित्याशङ्कायामाह— **एतदुक्तम्** इति । **यथा** शब्दस्य उत्तरत्र **एवम्** इत्यत्रान्वयः । **एकम्** — एकजातीयम् । [3] प्रभाया अयुतसिद्धत्वात् शौक्ल्यादिवत् गुणत्वमेव न स्यादित्यत्राह— **यद्यपि** इति । **गुणभूता** इति । [4] परतन्त्रभूता । द्रव्यत्वे हेतुमाह-- **स्व** इति । तत्रापि तेजस्त्वे हेतुमाह— **प्रकाश** इति । **प्रकाशः**— औज्ज्वल्यम्, तमोविरोधिरूपम् । गुणोक्तिः कथमित्यत्राह— **अस्यास्तु** इति । [5] विशरणमाशङ्कयाह— **न च** इति । [6] हेतुमाह— **मणि** इति । सामग्र्यनुगमाभावेऽपि प्रतिक्षणं [7] मण्यादिनाशोत्पादक्लृप्तावतिप्रसङ्ग इति भावः । अवयविप्रतीत्यभावं प्रसञ्जयति— **दीपेऽपि** इति । कथमित्यत्राह— **न हि** इति । [8] संहतौ विशरणे वा स्वभावे, मूर्ते न प्रहारप्रतिबन्धौ स्याताम् । न च ताविति न [9] अवयविधीः । युगपद्विष्वग्विशरणे न नियामकम् । अतो [10] यथादृष्ट-मभ्युपेत्यमित्यर्थः । कथं प्रतिक्षणं [11]नाशोत्पादावित्यत्राह— **पुष्कल** इति । केवलदण्डादिव्युदासाय **पुष्कल**शब्दः । अतिप्रसङ्गश्च नेति भावः । [12]दूरान्तिकयोर्वैषम्यं कथमित्यत्राह— **प्रभाया** इति । **आदि**शब्दात् दूरे प्रकाशौष्ण्यमान्द्यम् । दृष्टान्ते दर्शितमर्थं पक्षेऽतिदिशति — **एवम्** इति ।

---

1. दीपतत्प्रभादिवच्चेत् विशीर्ण-**क**.
2. प्रभावादित्याशङ्कायामाह-स्वेति । तत्रापि-**अ**. (अत्र ग्रन्थपातः-**अ**.
3. कथम्-**क**. 4. नित्यपरतन्त्र-**ग**.
5. दीपविशरणं-**ग**. 6. तत्र हेतुमाह-**अ**.
7. मण्यादिनाशोत्पत्तावतिप्रसङ्गः-**क**.
8. विशरणस्वभावत्वे मूर्तेन प्रहरप्रतिबन्धौ-**ग**.
9. अवयविधियः युगपद्विष्वग्विशरणे च नियामकम्-**अ**.
10. यथादृष्टमभ्युपेयम्-**ग**. 11. नाशोत्पत्ती-**क**.
12. आत्यन्तिकयोः-**अ**.

ततः किं स्वसिद्धित्व इत्यत्राह— **चिद्रूपता** इति । वक्ष्यमाणश्रुतिव्याचिख्यासयेयमुक्तिः ॥

**तथा हि श्रुतयः—' स यथा सैन्धवघनोऽनन्तरोऽबाह्यः ... ... अन्योऽन्तर आत्मा विज्ञानमयः " इत्याद्याः । वक्ष्यति च " ज्ञोऽत एव " इति ॥** (पृ. ३७–३८)

अनुग्राह्यमानं दर्शयति— **तथा हि** इति । [1] प्रदेशभेदेन जडत्वव्युदासः सैन्धवदृष्टान्तोपजीव्यः । **अतायम्** इति । **ज्ञानत्वम्**— स्वसिद्धित्वमित्यर्थः । ज्ञानधर्मकत्वं दर्शयति—**न विज्ञातुः** इति । धर्मभूतज्ञाननित्यतामात्रं **न हि विज्ञातुः** इत्यत्र श्रुतम्; न ज्ञातुरात्मत्वमित्यत्राह— **अथ यो वेद** इति । आत्मनो ज्ञातृत्वं स्वप्रकाशत्वं च एकस्मिन् वाक्ये श्रूयत इत्याह— **योऽयम्** इति । ज्ञातृत्वं [2] ज्ञानस्वरूपत्वं च एकस्मिन् वाक्यान्तरे प्रतीयत इत्याह— **एष हि** इति । ज्ञातुः मुमुक्षुज्ञातव्यत्वज्ञापनायाह— **विज्ञातारम्** इति । मुक्तौ तथात्वायाह— **जानात्येव** इति । मुक्तौ 'न प्रेत्य संज्ञाऽस्ति' इत्यादिधीनिषेधस्य विषयं दर्शयति— **न पश्य** इत्यादिभिः । [3] ज्ञानस्वरूपत्वतद्धर्मकत्वतदविरोधानां सौत्रतामाह— **ज्ञोऽत** इति ।

**अतः स्वयंप्रकाशोऽयमात्मा ज्ञातैव, न प्रकाशमात्रम् । ... ... ... न हि लोकवेदयोर्जानात्यादेरकर्मकस्याकर्तृकस्य च प्रयोगो दृष्टचरः ॥** (पृ. ३८)

निगमयति — **अतः** इति । ज्ञानस्य ज्ञानानाश्रयत्वं व्याप्त्या चेत्

1. प्रदेशभेदेन जडत्वव्युदासाय सैन्धवदृष्टान्तः–**ग.**
2. ज्ञानस्वरूपं-**ग.**
3. ज्ञानस्वरूपकत्वतद्धर्मत्वतदविरोधानाम्–**क.**

ज्ञानं कस्यचिद्धर्मः स्यात्; श्रुत्या चेत् [1] स्वतन्त्रत्वं, तथैव ज्ञानवत्त्वमप्यास्थेयम् । एवं च न व्याप्तिविरोधः । गुणभूतस्यैव हि ज्ञानस्य ज्ञानानाश्रयत्वं दृष्टमिति भावः । अनुग्राहकान्तरमाह—**प्रकाशत्वात्** इति । विषयेण साक्षात् [2] संबन्धित्वं, साक्षाद्वा प्रणाड्या वा । विषयव्यवहारहेतुत्वं **प्रकाशत्वम्** । हेत्वन्तरमाह— **संवित्** इति । दारादिशब्दवत् । शब्दस्वभावात् तथात्वं, [3] नार्थस्वभावात् इत्यत्राह— **न हि** इति । अर्थानुपपत्त्यभावात् न तथेति भावः । त्वन्मतेऽपि स्वरूपविषयस्य कथं संबन्धिशब्दत्वम्? उच्यते [4] स्वरूपे तु स्वसिद्धौ रूढिः । संबन्धिशब्दतयोपदेशसाफल्यं धर्मभूतज्ञाने । परमते तु तदपि न । संबन्धितया भातस्यैव विषयाश्रयशून्यत्वसमर्थनात् ॥

**यच्चोक्तम् अजडत्वात् संविदेवाऽऽत्मेति, तत्रेदं प्रष्टव्यम् .... ... अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवाहमर्थः ॥**

(पृ. ३८–३९)

अजडत्वहेतुं दूषयितुमाह — **यच्चोक्तम्** इति । चतुर्धा विकल्पमभिप्रेत्याह — **तत्रेदम्** इति । प्रथमं शङ्कते — **स्वसत्ता** इति । तत्रापि साक्षाद्वा प्रणाड्या वा व्यवहारानुगुण्यस्य स्वसत्ताप्रयुक्तत्वं विवक्षितमिति अभिप्रेत्य प्रथमेऽनैकान्त्यमाह — **तथा** इति । [5] ज्ञात्रात्मत्वसिद्धिमुपजीव्य दूषणमुच्यते । पक्षे संविदि अस्मदभिमतात्मनि ज्ञातरि अनात्मनि दीपे च वृत्त्याऽनैकान्तिकमित्यर्थः । दूषणान्तरद्वयमाह— **संवित्** इति । **विरोधः**–

1. स्वतन्त्रतयैव ज्ञानवत्त्वं-ग.
2. संबन्धितया साक्षाद्वा-ग.
3. न तु अर्थ-ग.
4. स्वमते स्वसिद्धौ रूढः संबन्धि-ग.
5. ज्ञातृत्वसिद्धिम्-ग.

निर्विशेषत्वविरोधः । [1] विशेषाभ्युपगमेऽपसिद्धान्तः । यद्वा ज्ञातात्मत्वसिद्धिमनुपजीव्याह–**संवित्** इति । पक्षे संविदि, विपक्षे अनात्मनि दीपादौ च वृत्त्या **विरोधः** । साक्षादिति पक्षे, [2] प्रणाड्या इति पक्षे च असिद्धिस्वमतविरोधौ तुल्यौ । इदं दूषणद्वयमुत्तरत्राप्यनुसन्धेयम् । प्रथमाभिप्रेते चतुर्धा विकल्पे द्वितीयं शिरो दूषयति– **अव्यभिचरित** इति । [3] परमते तु सुखादौ **व्यभिचारः** । तृतीयं शङ्कते– **यदि** इति । असिद्धया दूषयति– **ज्ञानं वा** इति । [4] उक्तलक्षणमजडत्वमसिद्धमित्यर्थः । चतुर्थं तु स्वप्रकाशत्वम् । तत् दूषयति— **तस्मात्** इति । ज्ञानकर्मतां विना भानं चेत् [5] ज्ञातर्यपीति स्वाभिमतविरोधः । ज्ञानान्तरानपेक्षत्वं चेदसिद्धम् आश्रयापेक्षत्वादित्याह— **ज्ञानस्यापि** इति । उपपादयति — **तत्** इति । **प्रकटत्वम्**– अपरोक्षतया भासमानत्वम् निगमयति – **अतः** इति ॥

**अथ यदुक्तम्— अनुभूतिः परमार्थतो निर्विषया निराश्रया च सती .... ... ... अनुभूतेर्न मिथ्यात्वमिति चेत् ; हन्तैवं सति तद्बाधादेव ज्ञातृत्वमपि न मिथ्या ॥** (पृ. ३९)

ज्ञातृत्वस्य अध्यस्तत्वमनुवदति— **अथ** इति । दूषयति – **तत्** इति । [6] प्रसञ्जकप्रसक्तविपर्ययमाह — **अत्र तु** इति । **पृथक्** — वैयधिकरण्येन । तथात्वं दर्शयति — **तथा** इति । ततः किमित्यत्राह — **तदेवम्** इति । विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टाध्यासोऽनुपपन्न

1. विशेषाभ्युपगमेऽपि सिद्धान्तः.-अ.
2. प्रणाड्या वेति–ग.
3. परमतेन सुखादौ-ग.
4. उक्तलक्षणमजडत्वसिद्धमित्यर्थः-अ.
5. ज्ञातर्यपि स्वाभिमत-ग.
6. प्रसञ्जकप्रसक्तविषयमाह–अ ; ... ... विपर्ययत्वमाह–ग.

इत्यर्थः । समानाधिकरणधीर्न प्रसञ्जनीया [1] तथा सति भ्रमायोगात् । न हि [2] शुक्तिरजतमिति भ्रमः संभवतीति चेत्, धी इदंस्थाने चेत् तथा प्रतीतिप्रसङ्गः । शुक्तिस्थाने चेत् भ्रमानुदय इति भावः । भ्रान्तस्य [3]प्रतिभासामृषात्वमनूद्य परिहरति— **यदपि** इत्यादिना । वैषम्यमाशङ्क्या-विशेषमाह— **सकल** इत्यादिना ॥

**यदप्युक्तम्– अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न संभवति । ... ... ... ज्ञातृत्वं ज्ञानस्वरूपस्याऽऽत्मन एवेति न कदाचिदपि जडस्याहङ्कारस्य ज्ञातृत्वसंभवः ॥** (पृ. ३९ ४०)

**ज्ञानकर्तृत्वम्–** विकारजडरूपम्; नाविकाराजडात्मनि । किन्तु तादृश्यन्तःकरणे दृश्यत्वात् रूपवच्च, नात्मनि, तथात्वे अहंधीवेद्यत्वे च अनात्मत्वात् इत्येतत् परोक्तमनुवदति — **यदपि** इति । **आदिशब्दो** विकारित्वार्थः । दूषयति — **नैतत्** इति । **आदिशब्दात्** जडत्वादिः । अन्तःकरणं न ज्ञातृ, [4] अचेतनत्वात् इत्यादिभिः देहवत् इत्यन्वयिभिः तद्विरोधिनो व्यतिरेकिणो बाधिता इत्यर्थः । अचित्त्वे तुल्येऽपि देहस्येन्द्रिया-श्रयत्वादिवत् अचित्त्वादौ तुल्येऽपि अन्तःकरणस्य ज्ञातृत्वं स्यादिति ज्ञातृत्वस्य चेतनासाधारणत्वासिद्धिरित्यत्राह — **एतदुक्तम्** – इति । देहात्मभेदसिद्धये देहस्य [5] द्रष्टृत्वं येन विरुद्धधर्मेण निवार्यते, तेनैवान्तःकरणस्यापीत्यर्थः ।

---

1. तया ह्यतिभ्रमायोगात्-अ ; तथा सति विभ्रमायोगात्-ग.

2. शुक्तिः रजतम्-ग.

3. प्रतिभाया मृषात्वं-ग.

4. अचेतनत्वादिभिः देहवत्-अ ; अचेतनत्वात् इति । अचित्त्वे तुल्येऽपि-ग.

5. द्रष्टृत्वम्-अ.

[1] यद्यपि दृशित्वानुपपत्त्या देहात्मभेदः, न द्रष्टृत्वादिना, तथाऽपि दृशित्वमन्तःकरणस्य येन वार्यते, तेनैव द्रष्टृत्वमपि इति [2] दृशित्वनिवारकमेव द्रष्टृत्वनिवारकमित्यर्थः । अनात्मत्वादिप्रसङ्गः प्रत्यक्षागमबाधितः । अबाधिताहंधीवेद्यत्वमात्मत्वस्यैव साधकम् । देहे तु बाधादनात्मत्वं वक्ष्यते । **न च** इति स्पष्टम् । **गुण**शब्दोऽपृथग्विशेषणपरः । ततः किमित्यत्राह— **ज्ञानं च** इति । [3] धर्म्यनित्यत्वे धर्मानित्यत्वं; तन्नित्यत्वेऽपि औपाधिकत्वं धर्मानित्यताहेतुरिति तद्व्युदासाय **नित्यस्य स्वाभाविकधर्मत्वेन** इति पदद्वयम् । उभयोश्च मानतया श्रुतेः सूत्रोपात्तत्वात्, सूत्रद्वयमुदाहरति— **नित्यत्वं च** इत्यादिना । [4] धियो ध्याश्रयत्वं कथमित्यत्राह— **अस्य** इति । तर्हि सर्वे सर्वदा सर्वज्ञाः स्युरित्यत्राह—**स्वयम्** इति । **स्वयं**—स्वतः । तर्हि इदानीमपि कदाचित् सर्वविषयविकासः स्यात्; मुक्तावपि कदाचित [5] सङ्कोचः स्यात् । बन्धमोक्षयोः सङ्कोचविकासव्यवस्थायामपि बद्धाः सर्वेऽप्यज्ञाः स्युः इत्यत्राह — **अतः** इति । अनेन "अविद्या कर्मसंज्ञाऽन्या" इत्यादिस्मृतिः स्मारिता । नोत्पत्तिश्चेत् किमिन्द्रियैः? उत्पत्त्यभावात् प्रसरतारतम्यस्य कर्मतारतम्यकृतत्वाच्च इन्द्रियवैयर्थ्यमित्यत्राह — **तच्च** इति । कर्माधीनप्रसरणम् [6] इन्द्रियद्वारकमित्यर्थः । उत्पत्त्यादिव्यपदेशः कथमित्यत्राह — **तमिमम्** इति । प्रसरकर्तृत्वं विकार इत्यत्राह — **ज्ञान** इति । तन्नानिष्टम् । अचेतनवद्विकारो ह्यनिष्ट इत्यर्थः । **मुखान्तरेण**

1. यद्यपि दृशित्वानुपपत्त्या देहात्मभेदः, न दृष्टत्वादिना, तथाऽपि दृशित्वमन्तःकरणस्य येन वार्यते, तेनैव तस्य दृष्टत्वमपीति, दृशित्वनिवारणमेव दृष्टत्वनिवारकमित्यर्थः अ.

2. दृशित्वानिवारकमेव द्रष्टृत्वानिवारकं-**क.**

3. धर्म्यनित्यत्वतन्नित्यत्वेऽपि-**क.**

4. धियोऽप्याश्रयत्वं-**ग.**

5. ज्ञानसंकोचः-**ग.**

6. इन्द्रियद्वारमित्यर्थः-**अ.**

विकारनिषेधविषयमाह -- **तच्च** इति। [1] अचिद्रूच्च स्वतश्च विकारो निषेध्यत इत्यर्थः। प्रसरकर्तृत्वं च विकारत्वात् अन्तःकरणस्य इत्यत्राह — **एवंरूप** इति। स्वधर्मधीप्रसरकर्तृत्वं न अतद्धर्मकस्य इत्यर्थः। **स्वरूप**-शब्दोऽसाधारणधर्मपरः। यद्वा जडं न धीधर्मकम्, घटवत्। अतो ज्ञानस्वरूपस्यैवोक्त [2] लक्षणकर्तृत्वमित्यर्थः ॥

**जडस्वरूपस्याप्यहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या .... ... ... अहङ्कारस्य त्वचेतनस्य ज्ञातृत्वासंभवादेव सुतरां न तत्संपर्कात् संविदि ज्ञातृत्वं तदुपलब्धिर्वा ॥** (पृ. ४०–४१)

अथ परोक्तासु छायापत्तिसंपर्काभिव्यक्तिषु [3] प्रथमं **चित्** इत्यादिना-ऽनूद्य [4] दुर्निरूपत्वमाह- **केयम्** इति। तदेव विवरीतुं विकल्पयति — **किम्** इति। धीस्थं चरमं दूषयति—**न तावत्** इति। अथ प्रथमं —**नापि** इति। **उक्तरीतिः** — अचित्त्वादिः। किं ज्ञातृत्वं [5] छायापन्नम्, उत ज्ञप्तिरिति विकल्पे प्रथमं शिरो दूषितम्। द्वितीयं दूषयति — **द्वयोः** इति। व्यापकनिवृत्त्या [6] अप्यत्र न छायापत्तिरित्यर्थः। अन्यतरस्याचाक्षुषत्वेऽपि न छाया; द्वयोरपि तथात्वे किं पुनः इति **अपि**शब्दार्थः। संपर्कं शङ्कते— **अथ** इति। दूषयति— **नैतत्** इति। [7] रुमागतकाष्ठादिलवणत्ववत् जलौष्ण्यवद्वा इत्यभिप्रायेण **ज्ञातृत्वं तदुपलब्धिर्वा** इत्युक्तम्। जडत्व-वैषम्यात् **सुतराम्** इत्युक्तिः। अजडस्य हि संभवेत्। एवं ज्ञातृत्वसंपर्कपक्षः

---

1. अचिद्वत् स्वतो निषिध्यते-**ग.** 2. उक्तधर्मलक्षण-**क.**

3. प्रथमं छायापत्तिपक्षमनूद्य-**ग.** 4. दुर्निरूपता-**क.**

5. छायापत्तिः-**ग.** 6. अप्यत्र छायापत्तिरित्यर्थः-**ख**

7. रुमागतकाष्ठादिलवणत्वं शीतलौष्ण्यवच्च-**क.**

कण्ठोक्त्या दूषितः । [1]ज्ञप्तिसंपर्केऽपि न धर्मधर्मिभावेनान्वयः संपर्कः । अचेतनज्ञप्तयोस्तदसंभवात् । न च पृथग्भूतयोः संयोगः, ज्ञातृत्वव्यतिरेकेण ज्ञप्त्यनुपलंभादिति भावः ।

**यदप्युक्तम् — उभयत्र न वस्तुतो ज्ञातृत्वमस्ति । ... ... ... ... यथोक्तम् — " करणानामभूमित्वान्न तत्संबन्धहेतुता ॥ " इति ॥** (पृ. ४१–४२)

पक्षद्वयात् वैषम्यं दर्शयन् अभिव्यक्तिं शङ्कते— **यदपि** इति । दूषयति — **तत्** इति । व्यञ्जकापेक्षाव्यञ्जकत्वशक्त्योरभावादित्यर्थः । उक्तवैशद्याय सांप्रदायिकत्वाय चाह— **तदुक्तम्** इति । आत्मसिद्धि[2]ग्रन्थं विवृणोति— **स्वयम्** इदि । **अचित्** इति । चिदन्यत्वात् [3]तन्निर्भास्य इति भावः । **अनुदित** इति [4]कादाचित्कप्रकाशत्वेन व्यञ्जकापेक्षाव्युदासः ॥

अन्यापेक्षया तयोः व्यङ्ग्यत्वे व्यञ्जकत्वे चाभ्युपेतेऽपि नान्योन्यं तथात्वमित्याह — **किं च** इति । **प्रातिकूल्यम्** –उक्तस्वभावविरोधः । व्यङ्ग्यस्य व्यञ्जकत्वे [5]परोक्तदृष्टान्तं व्युदस्यति — **न च** इति । कुत इत्यत्राह — **तत्रापि** इति । कथं तर्हि करतलायत्तो रविकरप्रकाशातिशय इत्यत्राह — **कर** इति । नाहङ्कारः करादिवत् स्थूलः । ज्ञानं च रविकरवत् न बाहुल्यार्हमिति भावः ॥

अथ अभिव्यक्तिं विकल्प्य दूषयति — **किं च** इति । **किंरूपा** – दुर्निरूपा । उत्पादकमप्युत्पत्तिद्वाराऽभिव्यक्तिहेतुः इति **उत्पत्तिः** शङ्किता ।

---

1. ज्ञप्तिसंपर्कोऽपि न–**ग.** 2. ग्रन्थार्थं–**ग.**

3. निर्भास्यत–**अ.** 4. कदाचित् प्रकाशत्वेन–**ख.**

5. परोक्तं दृष्टान्तं–**ख.**

द्वितीयं दूषयति — **नापि** इति । तृतीयं व्युदस्यति — **ततः** इति । अनुभाव्यत्वम् उपेत्य दूषयितुमाह — **स हि** इति । [1] इन्द्रियसंबन्धहेतुत्वोक्तिः दृष्टानुग्रहस्य करणानुग्रहस्य [2] वोपलक्षणार्था, विधान्तरासंभवात् । अन्यच्च अदृष्टानुग्रहस्य कर्त्रनुग्रहस्य वोपलक्षणम् । शमादेः शास्त्रानुग्राहकत्वं [3] परोक्तदिशा । द्विविधोऽप्यनुग्रहोऽनुपपन्न इत्यर्थसिद्धम् । अन्यथाऽनन्तर-ग्रन्थवैघटयम्, स हि न द्वैविध्यपरः । पक्षान्तरममानकमिति दूषणस्य स्फुटत्वादनुक्तिः । यद्वा उत्तरार्धसिद्धं दूषणं पूर्वार्धेन स्मारितमिति भावः । [4] "अहमर्थस्य बोद्धृत्वान्न स तेनैव शोध्यते" इति हि तत् ॥

**किं च — अनुभूतेरनुभाव्यत्वाभ्युपगमेऽपि अहमर्थेन न तदनुभवसाधनानुग्रहः ... ... ... अतो न केनापि प्रकारेणा-हङ्कारेणानुभूतेरभिव्यक्तिः ॥** (पृ. ४२–४३)

ऐन्द्रियकत्वमुपगम्य दूषयति — **किं च** इति । **स हि** इत्यादेरेवं वाऽर्थः — पूर्वमनुभवपर्यालोचनयाऽनुग्रहो दूषितः । अथ अनुग्रह-पर्यालोचनया दूष्यते — **स हि** इति । अनुभाव्यत्वमभ्युपगम्याह — **किं च** इति । अन्यत् सर्वं पूर्ववत् । तत्स्वरूपमाह — **स हि** इति । व्यक्ति-दर्पणाद्यन्यथासिद्धेर्वक्ष्यमाणत्वात् प्रतिबन्धनिरासः परिशेषितः । [5] दूषयति—**न च** इति । अज्ञानस्याहङ्कारापोह्यत्वसंविदाश्रयत्वयोः प्रथमं दूषयति—**न तावत्** इत्यादिना । इह **अज्ञान**शब्दो भावाभावसाधारणः । दूषणं च तस्य तथा ॥

1. इन्द्रियं बन्धहेतुत्वोक्तिः दृष्टानुग्रहस्य वा करणानु–**अ**.

2. चोपलक्षणार्था विधान्तरसंभवात् । अन्यच्च अदृष्टानुग्रहस्य चोप-लक्षणम्–**क**.

3. परोक्तिदिशा–**ख**.

4. अहमर्थस्य बोध्यत्वान्न स तेनैव बोध्यते–**ख**.

5. अथानुभवपर्यालोचनया दूषयति–**ग**.

संविद्गतत्वं दूषयति — **न च** इति । **संविदाश्रयत्वम्** — संवित्संबन्धित्वम् । आश्रयणं हि संबन्धः । स च विषयत्वेन आधारत्वेन च । अतो विषयस्याप्याश्रयशब्देन विवक्षा युज्यते । "आश्रयश्चेतसो ब्रह्म" इतिवत् । तदनुपपत्तौ हेतुमाह — **ज्ञान** इति । ततः किमित्यत्राह — **ज्ञातृ** इति । निदर्शयति — **यथा** इति । अज्ञानाश्रयत्वे देवदत्तवत् ज्ञानाश्रयत्वप्रसङ्गः । अज्ञानविषयत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । अज्ञानाश्रयत्वमुपगम्याह — **संविदः** इति । [1] ज्ञाननिवर्त्याज्ञानत्वे ज्ञानविषयत्वप्रसङ्गः इत्यर्थः । [2] संवित्संबन्ध्यनुपपत्तिमुपसंहरति — **अतः** इति । भावरूपत्वे विशेषतो दूषणमाह — **अस्य च** इति । अभावरूपत्वं दूषयति — **ज्ञान** इति । **विरोधित्वम्** — प्रतिबन्धकत्वम् न सहावस्थितिः । अभिव्यक्त्यनुपपत्तिं निगमयति — **अतः** इति । **केनापि प्रकारेण** — उत्पादकतया, प्रकाशकतया, तदनुग्राहकतया चेत्यर्थः ॥

**न च स्वाश्रयतयाऽभिव्यंग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः ... ... न ज्ञप्तिमात्रम् । अहंभावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम् ॥** (पृ. ४३)

स्वाश्रयतयाऽभिव्यक्तिमनैकान्त्येन दूषयति—**न च** इति । दूषणान्तरमाह — **यथा** इति । **ज्ञानस्य प्रतीत्यानुगुण्यं** नाम [3] व्यवहारानुगुण्यम् । तच्च कुत इत्यत्राह — **तच्च** इति । दृष्टान्तान्यथासिद्धिमाह — **न च** इति । दोषत्वमुपपादयति —**तद्दोष** इति । केनाभिव्यक्तिरित्यत्राह — **अभिव्यञ्जकस्तु** इति । तस्य व्यञ्जकत्वादिति भावः । **न चेह** इति । अहङ्कारस्य [4] स्थूलस्वच्छ-

---

1. ज्ञाननिवर्त्याज्ञानत्वे विषयत्व-**ख**.
2. संवित्संबन्धानुपपत्तिं-**क**.
3. स्वव्यवहारानुगुण्यम्-**ख**.
4. स्थूलद्रव्यत्वाभावात्-**अ**. स्थूलद्रव्यत्वाकाराभावात्-**ग**.

द्रव्यत्वाभावादिति भावः । **व्यक्तेस्तु** इति । **आकारः**—अयुतधर्मः । अहङ्कारस्य ज्ञातृत्वानुपपत्तिं निगमयति — **अतः** इति । व्यक्तिदर्पणाभिप्रायेण **वस्तुतो दोषतो वा** इति उक्तम् । ज्ञातुरात्मत्वं निगमयति— **तस्मात्** इति । [1] यद्यप्यात्मत्वोपगमो धियः, तथाऽपि [2] अहंभावविरहे, न तस्याः प्रत्यक्त्वमित्याह — **अहम्** इति ॥

**तमोगुणाभिभवात् परागर्थानुभवाभावाच्च अहमर्थस्य ... ... ... ... 'न किंचिदहमवेदिषम्' इति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु ॥** (पृ. ४३-४४)

अथ सुषुप्तौ [3] अहंभानमाह—**तम** इत्यादिना । आन्तरो बुद्धिसुखादिः, बाह्यो मनुष्यत्वादिश्च **परागर्थः** । [4] तदुभयाननुभवहेतुः **तमोगुणाभिभवः** । **चः** त्वर्थः । **अहम्** इति । प्रत्यक्तयेत्यर्थः । अविशदावभासः पराभीष्टश्चेत्याह — **भवद्** — इति । तदनुपगमे धियोऽप्यप्रकाशत्वप्रसङ्गः इति भावः । स्वयंज्योतिष्ट्वश्रुत्या [5] सर्वैः वेदान्तिभिः सुषुप्तौ भानमात्मनोऽङ्गीकार्यम्, [6] अविशदावभासश्च । वाद्यन्तरैश्च [7] स निर्विकल्पके । इह तु प्रामाणिकत्वम् भिदा । स्वापे तु धीर्वा अहमर्थो वा इति विमतिः । परपक्षे मानाभावमाह — **न हि** इति । प्रत्यक्त्वाय **अहम्**—उक्तिः । स्वपक्षे मानमाह— **एवं हि** इति । श्रुतिस्वारस्यमप्यनुसन्धेयम् । " अत्रायं पुरुषः

---

1. यद्यप्यात्मनो ... .... धियः अ.
2. अहंभावविरहेण प्रत्यक्त्वायोग इत्याह—ग.
3. अहमभिमानमाह—ग.
4. तदुभयानुद्भवहेतुः—ख. तदुभयानुभवाभावहेतुः तमोगुणानुभवः—ग.
5. सर्ववेदान्तिभिः—क.
6. अविशदावभासश्च वाद्यन्तरैः निर्विकल्पके—ग.
7. सर्वनिर्विकल्पके—क.

स्वयंज्योतिर्भवति", "मन्ता बोद्धा विज्ञानात्मा पुरुषः" इति । परामर्श-फलितमाह — **अनेन** इति । आनुकूल्यप्रतिसंबन्धितया **सुखित्व**-उक्तिः । **ज्ञातृत्वं** — प्रत्यक्त्वम्, न तु धर्मधीस्फुरणम् । "तद्विषयप्रकाशन-वेलायाम्", "पुंस्त्वादिवत्" इति भाष्यसूत्रस्वारस्यविरोधात् अस्मरण-नियमाद्युपपत्तिविरोधाच्च न भाष्यकाराभिमतम् । प्रतीतेः अन्यथासिद्धि-माशङ्क्याह— **न च** इति । प्रतीतिस्वारस्यविरोधमाह— **अतत्** इति । "मन्दमगच्छं मधुरमगायम्" इतिवदिति भावः । **अस्वाप्सम्** इति न तदा स्वापानुसन्धिः । यावत्यंशे नानुपपत्तिः, तावत एव भानाङ्गीकारात् । चत्वरे गजाभावं [1] वदता पृष्टेन न हि प्रातः सोऽनुसंहितः, योग्यानुपलब्ध्या, पश्चाद्धि सोऽवगम्यते, तद्वत् ॥

[2] अथ अनुपपत्त्या [3] समकालीनत्वाभावक्लृप्तिरित्याशंक्य, ज्ञातुर-स्थैर्य [4] मननुभवो वा सा इति कृत्वा प्रथमं व्युदस्यति — **न च** इति । **मयेदम्** इत्यादिना त्रिविध [5] व्यापारपरामर्शो दर्शितः । [6] विपर्ययेणाननुभवं शङ्कते — **एतावन्तम्** इति । ज्ञातुरनिषेध्यत्वमभिप्रयन्नाह — **ततः किम्** इति । [7] शङ्कते — **न किञ्चित्** इति । परिहरति — **नाहम्** इति । [8] कृत्स्नविषयत्वेऽनिष्टमाह — **न किञ्चित्** इति । निषेधस्याकृत्स्नविषयत्वे द्वयोस्तुल्ये धीव्यतिरिक्तविषयत्वं किं न स्यादित्यत्राह — **सुषुप्ति** इति । निषेधस्य [9] धीव्यतिरिक्तगोचरत्वेनाहमर्थस्यापि तद्विषयत्वकल्पनं प्रतीति-

---

1. वदता न हि प्रातः-**ग**.
2. अन्यथानुपपत्त्या समकालीनत्वाभावादक्लृप्तिः-**ग**.
3. समकालीनत्वभावक्लृप्तिः-**अ**.
4. अनुभवो-**ग**.
5. व्यापारावमर्शो-**ख**.
6. विपर्ययेणानुभवं-**अ**.
7. पुनः शंकते-**ग**.
8. कृत्स्नप्रतिषेधत्वे-**ग**.
9. धीव्यतिरिक्तगोचरत्वेनाहमर्थस्यातद्विषयत्वकल्पनम्-**क**.

स्वारस्यविरुद्धम्। यथा प्रातश्चत्वरे गजो नेत्युक्ते, गज एव निषिद्धः, न चत्वरम्; तस्य तदभावाश्रयत्वेन ज्ञातत्वात्, तद्वदित्यर्थः। **देवानाम्** - [1]अप्रतिब्रुवताम्॥

**'मामप्यहं न ज्ञातवान्' इति अहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत इति चेत् ... ... ... स्वापाद्यवस्थास्वप्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम्॥** (पृ. ४४–४५)

विशेषविषयं निषेधं शङ्कते — **माम्** इति। प्रतिवक्ति — **स्व** इति। **विरोधः** न मिथः, किन्तु अहमर्थनिषेधवचनेन। [2]तं दर्शयति — **अहम्** इति। पृच्छति—**माम्** इति। [3]प्रागयुक्तभाषणात् प्रश्नः साधुरित्याह — **साधु** इति। विषयविभागमाह — **तत्** इत्यादिना। [4]नायं शाब्द इत्यत्राह — **अहं माम्** इति। अहमर्थनिषेधानुवृत्त्योर्व्याघातशमनाय[5] इति भावः। [6]विपर्ययेण किं न स्यादित्यत्राह — **जागरित** इति। योग्यत्वायोग्यत्ववशात् उक्त एवार्थ इत्यर्थः। अनेन 'अयमहमस्मीति न जानाति इति [7]विशिष्टाहमर्थानुभवं निषेधन्ती "नाह खलु" इत्यादिश्रुतिरपि व्याख्याता। [8]स्वोक्तानुगुणमनुभवं दर्शयति—**अत्र** इति। ईदृगेव सदानुभवः। अनुभूतं कृत्स्नमेकदेशं वा वदति, न वा; शब्दप्रयोगस्य वैवक्षिकत्वादिति भावः॥

---

1. अप्रतिवक्तृत्वात् देवानामित्युक्तम्-**ग.**
2. तत् दर्शयति-**ख**
3. प्रागयुक्तभाषणमसाधु। प्रश्नः साधुः-**ग.**
4. शब्द इत्यत्राह-**क.** 5. व्याघातदर्शनाय-**ग.**
6. विपर्ययेण किं न स्यात् योग्यानुपलब्ध्या पश्चाद्धि तदित्यत्राह जागरितेति-**ख.**
7. विशिष्टाहमर्थं निषेधन्ती-**अ.** विशिष्टाहमर्थानुभवनिषेधेन-**ग,**
8. सिद्धान्तानुगुणमनुभवं-**क.**

परमतप्रक्रिययाऽपि ज्ञात्रनुवृत्तिमापादयति — **किञ्च** इत्यादिना । ततः किमित्यत्राह — **साक्षित्वम्** इति कथमित्यत्राह — **न हि** इति । तदुपपादयति — **ज्ञातैव** इति । अनुशासनानुगुण्यमाह — **स्मरति च** इति । ततः किमित्यत्राह — **स च** इति । उत्तरत्र विस्तरेण विवक्षितमनुमानमिह संक्षेपेण दर्शयति — **आत्मन** इति । **अवभासत इति** इत्यन्तेन व्याप्त्युक्तिः । **स्वस्मै** भानं हेतुः । व्याप्तमर्थं पक्षेऽतिदिशति — **स्वाप** इति । जाग्रदात्मा सपक्षः ॥

**यत्तु—'मोक्षदशायामहमर्थो नानुवर्तते' इति, तदपेशलम् । ... ... नाज्ञत्वमापादयति; कुतः संसारित्वम् । अपि तु तद्विरोधित्वान्नाशयत्येव ।।** ( पृ ४५-४६ )

मुक्तावहमर्थाननुगमं व्युदस्यति — **यत् तु** इत्यादिना । सौगतानां त्वदुक्तदोषः तवैव स्यादित्यर्थः । न स्वरूपनाशः, [1] धीः स्थिता इत्यत्राह— **न च** इति । एवकारः [2] प्रागुक्तत्वद्योतकः । ज्ञात्रात्मत्वसमर्थने संक्षिप्तां श्रुत्यर्थापत्तिं मुक्तावनुगमहेतुतया विस्तरेणाह — **अपि च** इति । दुःखित्वं भ्रान्तमित्यत्राह—**भ्रान्त्या वा** इति । [3] द्विचन्द्रज्ञानी तन्निवृत्तिमिच्छति, न स्वनिवृत्तिमिति भावः । ततः किमित्यत्राह — **ततश्च** इति । धीः स्थिता इत्यत्राह — **अहम्** इति । **परमार्थतः** इत्यादि, **ततश्च** इत्यादि, **बुद्धिपूर्व** इत्यादि च ग्रन्थजातं [4] प्रागनुक्तविवरणरूपम् । अनुमानमाह — **स च** इति । [5] व्यतिरेकमाह — **यः पुनः** इति । अहमिति व्यवहारार्हत्वं साध्यमिति न

---

1. धीस्थितेः इत्यत्राह–**ग.** 2. प्रागुक्तार्थद्योतकः–**ग.**

3. द्विचन्द्रज्ञाने–**ग.** 4. प्रागुक्त–**ग.**

5. स्वस्मै प्रकाशमानत्वेनान्वयव्याप्तिमाह–यो य इति । तथावभासमानत्वेन व्यतिरेकमाह–**ग.**

साध्याविशिष्टता । [1] विशेषविरोधमाशंक्यागमविरोधसोपाधिकत्वाभ्यां परिहरति —**न च** इत्यादिना । 'न पश्यो मृत्युं पश्यति' इत्यादिश्रुतिविरोधो **मोक्ष-विरोधः** । सोपाधिकत्वं विवृणोति — **अज्ञानम्** इति । [2] अज्ञत्वफलमपि नेत्याह — **कुतः** इति ।।

**ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीना-महमित्येव ... .... .... ... .. "अहं बीजप्रदः पिता" "वेदाहं समतीतानि" इत्यादिषु ।।** (पृ. ४६–४७)

तत्त्वविदामनुभवेन चाहमर्थात्मत्वमाह — **ब्रह्म** इति । **ब्रह्मापरोक्ष्यम्** —अविद्यानाशलिङ्गम् । ब्रह्मवचसाऽप्युपपादयति — **सकल** इति । **सच्छब्द-प्रत्यय** इति । अहङ्कारसृष्टेः प्रागिति भावः । **अहंशब्दः** श्रुत इत्युपात्तम्— **हन्ताहम्** इति । "**बहु स्याम्**" — उत्तमपुरुषाकृष्टः सः इति भावः । "**स ईक्षत**" इति अनेकशाखाप्रसिद्धिज्ञापनाय । स्मृतिमाह — **यस्मात्** इति । क्षराक्षरातीतत्वचिदचिदन्तरात्मत्वनित्यत्वमहदादिकारणत्वमोक्षप्रद-त्वादयो नाहंकारस्य इति भावः । एभिः **अहंशब्दैः** चिन्मात्रोपलक्षणं चेत् अनेकवचनलक्षणैव दोषः ।।

**यद्यहमित्येवात्मनः स्वरूपम्, कथं तर्हि अहङ्कारस्य क्षेत्रा-न्तर्भावो भगवतोपदिश्यते? ... ... ... व्यापी— अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशनस्वभावः ।।** (पृ. ४७)

पूर्वपक्षबीजं परिहर्तुमाह— **यदि** इति । परिहरति— **उच्यते** इति । वक्ष्यमाणनिर्वाहौपयिकत्वेन ज्ञातात्मत्वं द्रढयति — **स्वरूप** इति ।

1. उपनयमाह-स्वस्मा इति । निगमनमाह-तस्मादिति—**ग.**

2. धर्म्यैक्ये सति प्रकारान्तरारोपेण ज्ञानमन्यथाज्ञानम् । धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानं—**ग.**

तस्यार्थमाह-**अव्यक्त** इति । वाचकत्वं दर्शयति—**स तु** इति । **अहं**-शब्दार्थ एकरूप उक्तः, प्रयोगान्यथासिद्धौ शक्तिभेदक्लृप्त्ययोगात् । अथ मोक्षे त्याज्यतया "अहङ्कारं बलं दर्पम्" इत्यादिशास्त्रेषु उच्यमानोऽहङ्कारः क इत्यत्राह— **अयमेव** इति । **अयं**शब्दः [1] प्रकृताहंभावपरः, न तद्धेतुपरः; गर्वाख्यत्वायोगात् । विषयविभागं निगमयति— **तस्मात्** इति । पुराणोक्तिं दर्शयति— **यथोक्तम्** इति । "शब्दोऽहम्" [2] इत्यादीन्यभिप्रेतानि । एतद्वचनार्थमपि हेतुत्वेनाह — **यदि** इति । निगमयति — **तस्मात्** इति । अहमर्थात्मविषयात्मसिद्धिग्रन्थमुदाहरति— **तदुक्तम्** इति । **अविद्यायोगतः**— अहमर्थात्मत्वेन [3] अनात्मन्यात्मबुद्धिरूपाया अविद्यायाः **योगतः** —उपपत्तितः । यद्वा विपर्यये तस्या **अयोगतः** — अनुपपत्तितः । धियोऽनात्मत्वे च तद्ग्रन्थमाह— **तथा च** इति । **साधन**शब्दस्य ज्ञप्त्युत्पत्तिसाधारण्यात् व्याचष्टे — **अनन्य** इति । अणुत्वाविरोधाय व्याप्तिशब्दं व्याचष्टे —**अतिसूक्ष्मतया** इति ॥

**यदुक्तं —दोषमूलत्वेनान्यथासिद्धिसंभावनया सकलभेदावलंबिप्रत्यक्षस्य शास्त्रबाध्यत्वम् ... ... ... अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न स्वाभिमतार्थसिद्धिः ॥** (पृ. ४८)

अथ [4] प्रत्यक्षाच्छास्त्रस्य प्राबल्यमनुवदति — **यदुक्तम्** [5] इति । 'कोयं दोष' इति वचनव्यक्त्या यद्दोषरूपं मूलमुक्तम्, तत् **कोऽयं दोष इति पृष्टे वक्तव्यम्** । न हि दोषमनुक्त्वाऽन्यथासिद्धिर्वाच्येत्यर्थः । शङ्कते — **अनादि** इति । **काचादेः** कादाचित्कत्वात् क्लृप्तावतिप्रसङ्गा-

1. पूर्वप्रकृताहंभाव-**ग**.
2. इत्यादीन्यप्यभिप्रेतानि । एतद्वचनार्थमप्यहमर्थात्मत्वहेतुत्वेनाह-**ग**.
3. अनात्मबुद्धिरूपायाः-**ग**.
4. प्रत्यक्षाच्छास्त्रप्राबल्यम्-**ग**.
5. इति । वचनव्यक्त्या-**क**

चानुक्तिः । मूलमूलिभावादेरप्रयोजकत्वे ज्वालाभेदानुमानं ह्युदाहृतम् । तस्मात् वैषम्यत्रयं विवक्षन् प्रथममन्यत्र दोषत्वानिर्णयात् अन्योन्याश्रयमाह— भेद इत्यादिना । प्रत्यक्षविरोधे यूपादित्यैक्यवाक्यवत् प्रमितिहेतुत्वायोगात् । प्रत्यक्षस्य [1] दोषमूलत्वनिश्चयसापेक्षः शास्त्रस्य [2] निर्विशेषबोधकनिश्चय इति **अन्योन्याश्रय** इत्यर्थः । [3] एकवर्तिकावृत्तित्वसाम्यस्य दोषत्वं हि भिन्नयोरपि ऐक्यधीहेतुतया दृष्टम् अचिरनिर्वापितारोपितदीप इति भावः ॥

बाध्यबाधकयोस्तुल्यदोषत्वमाह— **किञ्च** इति । न हि [4] भेदानुमा तदैक्यधीवत् सादृश्यदोषमूलेति भावः । परत्वं वैषम्यं शङ्कते— **अथ** इति । परिहरति— **तन्न** इति । कथमित्यत्राह— **रज्जु** इति । ज्ञाते सति ह्यनिवृत्तिः, [5] न तत् ज्ञातमित्यत्राह— **शास्त्रस्य च** इति । हेतुमाह — **श्रवण** इति । शास्त्रमपि काल्पनिकनिखिलभेदान्तर्गतमिति भावः । अथ मूलोच्छेदित्वमाह — **अपि च** इति । **शास्त्रम्** [6] इत्यनक्षरराशेर्व्युदासः । **असंभाव्य** इति । [7] सौगतादेः । **विरक्तत्वात्**— वस्तुतो निर्विषयत्वात् । यदि निर्विषयमपि बोधकं, तदा विपरीतमपि बोधयेदित्याह— **शास्त्र** इति [8] प्रामाण्यस्यापारमार्थ्यानुभूत्यसंबन्धित्वयोः सुगतागमादावपि तुल्यत्वादिति भावः [9] । परोक्तकृत्स्नकुतर्कव्याघातप्रदर्शनायाह — **अतः** [10]**स्वपक्ष** इति ।

---

1. दोषमूलत्वसापेक्षः-**क**.
2. निर्विशेषबोधकत्वनिश्चयः-**ग**
3. एकवर्तित्वसाम्यस्य-**अ** एकवर्तिवर्तित्व-**क**.
4. भेदानुमानतदैक्य-**क** ; अर्चिर्भेदानुमा-**ग**.
5. न च तत्-**ग**.
6. इत्यक्षरराशेः-**ग**.
7. सौगतागमादे -**ग**.
8. प्रामाण्यापारमार्थ्या-**ग**.
9. ‘ प्रत्यक्षादिकमवगमयतीत्यत्राह-नापीति ’ । इत्यधिकः **ग** पाठे ।
10. स्वपक्ष इति । स्वाभिमत इति-**ग**.

अर्चिषि धर्मिलिङ्गतद्व्याप्तिग्रहादेर्न दोषमूलत्वमिति भावः । **स्वाभिमत** इति । शास्त्रप्राबल्यादिकं न सिध्येदित्यर्थः [1] ॥

**ननु व्यावहारिकप्रमाणप्रमेयव्यवहारोऽस्माकमप्यस्त्येव । .... ... ... ... ब्रह्म मिथ्या , असत्यहेतुजन्यज्ञानविषयत्वात् , प्रपञ्चवदेव ॥** ( पृ. ४९ )

चोदयति — **ननु** इति । परिहरति — **कोऽयम्** इति । **प्रमाणकार्याभावात्** — बाष्पारोपितधूमवत् इति भावः । परान्तराभावं शङ्कते — **अथ** इति । उपेत्य परिहरति — **तत्** इति । बाधो न चेत् कथं दोषमूलत्वम्, अन्यतरेणापारमार्थ्यनिश्चयः [2] कुत इत्यत्राह — **एतत्** इति । यदि न बाधः, कथं मिथ्यात्वमित्यत्राह — **दोषो हि** इति । उक्तं दार्ष्टान्तिकेऽतिदिशति — **तथा** इति । धीमिथ्यात्वं परमतानुसारात् । व्याप्तिमूलत्वात् **प्रयोगाः** [3] इत्युक्तम् । प्रसङ्गतर्का एते — यूपादित्यैक्यवाक्यस्य [4] विधिशेषत्वादनुमानत्वोक्तिरपसिद्धान्तः । प्रत्यक्षबाधोऽपि [5] तात्पर्याभावान्तर्गतः । अपूर्वत्वं हि [6] साधकबाधकागोचरत्वम् । अतो नाध्यक्षाच्छास्त्रं बलवत् ॥

**न च वाच्यम् — स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य ... ... ... ... स तु बाधितोऽसत्य इत्यवसीयते । अबाधिता हि बुद्धिः सत्यैवेत्युक्तम् ॥** ( पृ. ४९–५० )

अथ असत्यात् [7] सत्यप्रतिप्रत्तिमाशंक्याह — **न च** इति ।

---

1. इति भावः–**ग.**
2. कुतेत्याह–**ग.**
3. इत्युक्तिः–**ग.**
4. विधिशेषत्वादमानत्वोक्तिः-**ग.**
5. तात्पर्याभावादन्तर्गतः–**ग.**
6. साधकागोचरत्वम्-**क.**
7. सत्यप्रतिसन्धि-**ग.**

[1] असत्यस्य हेतुत्वमात्रं ज्ञप्तिहेतुत्वं वा निरस्यत इत्यभिप्रायेण उत्पत्तिज्ञप्त्युदाहरणम्। स्वमते सत्यात् सत्यसिद्धिः। परमते तु असत्यादसत्यसिद्धिः। [2] अतो नासत्यात् सत्यधीः। विषयमिथ्यात्वोक्तिः परमतानुसारात्। ज्ञानाबाधं दर्शयति— **न हि** इति। [3] ज्ञानमात्रेऽतिप्रसङ्गात् तद्विशेषस्य हेतुत्वे, विषयस्योपलक्षणत्वे [4] ज्ञानस्य व्यावृत्ततयाऽवभासहेतुत्वम्; विशेषणत्वे शुभाशुभप्रतिपत्तिहेतुत्वमित्यसत्यस्यापि हेतुत्वे धियां तत्तद्व्यवहारानुगुण्यधर्मैः स्वतो व्यावृत्तत्वात् सामग्र्यवच्छिन्नत्वाद्वा, यदा शुभाशुभधीः तदा सामग्री [5] ज्ञायते, [6] यदा न, न तदा शुभाशुभधीः इति धियां विषयानपेक्षस्सामग्रीभेद एवावच्छेदक इति, तद्भेदज्ञापनाय बहूदाहरणोपन्यासः। **मायामयम्** — मिथ्याविषयम्। संस्कारमन्त्रौषधसादृश्यसर्पसन्निधिनिर्विषोरगपीडनचाक्षुषतेजःप्रतिफलनानि [7] तत्कार्यज्ञानानि च सत्यानि। सत्यत्वमुपपादयति — **एषाम्** [8] इति। न हि शुक्तिरूप्यमुत्पन्नमर्थक्रियाकृच्च। व्यापकनिवृत्त्या व्याप्यनिवृत्तिं शङ्कते — **हस्त्यादीनाम्** इति। परिहरति — **नैतत्** इति। **मात्र**चा विद्यमानत्वव्यावृत्तिः। तस्य कियदपेक्षितमित्यत्राह— **अर्थस्य** इति। अतीतादेर्विषयत्वदर्शनात् [9] विद्यमानस्याप्यभातस्य तदभावाच्चेत्यर्थः। इह चास्तीत्याह— **प्रति** इति।

---

1. असत्यस्य सत्योत्पत्तिहेतुत्वं ज्ञप्तिहेतुत्वं वा ... ... उत्पत्त्युदाहरणम् **ग.**

2. अतो न सत्यात् सत्यधीः-**क.**

3. न च ज्ञानमात्रे-**अ. क.**

4. ज्ञानावृत्तितया-**ग.**

5. जायते-**ग.**

6. यदा न तदा न-**क.**

7. तत्कालज्ञानानिवर्त्यानि-**ग.**

8. इति। व्यापकनिवृत्त्या-**ग.**

9. विद्यमानत्वेऽप्यभातस्य-**क.**

अविद्यमानस्य भानं कथम्; भातं चेद्धेतुत्वं च संप्रतिपन्नवत् स्यादित्यत्राह— **दोष** इति । [1] असत्यस्य पूर्वभानाभावान्न धीहेतुत्वम् । भाति चेदर्थः सत्यः इत्यत्राह— **स तु** इति । धीश्च तथा किं न स्यादित्यत्राह— **अबाधित** इति ॥

**रेखया वर्णप्रतिपत्तावपि नासत्यात् सत्यबुद्धिः, रेखायाः सत्यत्वात् । ... ... ... अतोऽसत्याच्छास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा ॥** (पृ. ५०-५१)

अथ धीव्यतिरिक्तासत्यहेतुभिः सत्यसिद्धिं व्युदस्यति — **रेखया** इति । असत्यतां दर्शयंश्चोदयति — **ननु** इति । परिहरति — **नैवम्** इति । सत्तया प्रमिततया च हेतुत्वायोगमाह — **असतो निरुपाख्यस्य** इति । **उपाख्या** प्रमितिः । क्लृप्तिश्च व्याप्तिविरुद्धेत्याह — **अनुपपन्नम्** इति । रेखायां वर्णधीर्वर्णप्रतीतिहेतुरिति पक्षे प्रतीत्यंशस्य हेतुत्वे दूषणमाह— **अथ** इति । दूषणान्तरमाह — **उपाय** इति । ऐक्यमुपपादयति — **उभयोः** इति । वर्णात्मताया उपायत्वे दूषणमाह — **रेखाया** इति । शङ्कते — **अथ** इति । स्वमतसिद्धिमाह — **हन्त** इति । [2] उदाहरणान्तरं प्रतिवक्ति — **रेखा** इति ॥

**न च** इत्यादि । कत्वखत्वादयः [3] क्रमोदात्तादयो वाऽभिव्यञ्जकनादगताः [4] शब्दे आरोपिताः अर्थधीहेतुः इति स्फोटवादाभ्युपगमेऽपि नासत्यात् सत्यधीरित्यर्थः । कुत इत्यत्राह — **नाना** इति । कत्वादिभिः क्रमोदात्तादिभिर्वा विशिष्टनादाभि [5] व्यक्तः शब्दः अर्थधीहेतुरित्यर्थः । ऐक-

1. असत्यसत्यस्य पूर्व-अ; असत्यस्य पूर्वभानाभावात् अधीहेतुत्वम्-**ग**.
2. उदाहरणान्तरं प्रतिक्षिपति न चेति-**ग**.
3. क्रमोदात्तत्वादयो वा-**ग**.
4. शब्दा-**ग**. 5. व्यक्तशब्दः-**ग**.

रूप्यं नेत्याह — **शब्दस्य** इति । एवकारः एकरूपशब्दव्युदासकः । एकरूपशब्दोपगमः किं बोधकत्वाय ? उत व्यवहारानुगमाय ? न प्रथमः, वर्णैरेव बोधोपपत्तेः । न द्वितीयः, श्रावणत्वोपाधिना तदनुगमसिद्धेः इति भावः । असत्यात् सत्यप्रतिपत्तिनिरासं निगमयति — **अत** इति ॥

**ननु न शास्त्रस्य गगनकुसुमवत् असत्यत्वम्; प्रागद्वैतज्ञानात् सद्बुद्धिबोध्यत्वात् । ... ... ... पाश्चात्यबाधादर्शनं तु तस्यैवेति अलमप्रतिष्ठितकुतर्कपरिहसनेन ॥** (पृ. ५१)

[1] सत्यत्वमुखेन चोदयति— **ननु** इति । [2] सत्यद्वित्वमित्यत्राह— **उत्पन्ने** इति । तर्हि न बोधकत्वमित्यत्राह— **न तदा** इति । दूषयति— **नैवम्** इति । उपपादयति— **अयति** इत्यादिना । प्रागुपेत्योक्तम् ; इदानीं नेत्याह— **पश्चात्** इति । धीसत्यत्वमेव तद्बाधश्चेत् प्रपञ्चसत्यत्ववचनं [3] तत्रापि बाधः । नञर्थोल्लिखितवचनमेव [4] बाधश्चेत् तन्माध्यमिकस्यैवेत्यर्थः । [5] अप्रतिष्ठितत्वम्, मानविरुद्धतर्कत्वात् ॥

---

## श्रुतिघट्टः ॥

**यदुक्तं — वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि, ... ... ... अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते ॥** (पृ. ५१)

1. सत्यमुखेन-**क** ; अथ सत्यत्वमुखेन-**ग.**
2. तर्हि सत्यद्वित्वमित्यत्राह-**ग.**
3. तथापि-**क.**
4. नञर्थोल्लिखितं वचनमेव-अ ; लिखितं वचनमेव-**ग.**
5. अप्रतिष्ठितं मानविरुद्धतर्कत्वात् प्रबलतमाऽभिमत-**ग.**

प्रबलतयाऽभिमतमानान्तरनिरूपणं [1] परिसमाप्य, प्रत्यक्षादेर्बलीयस्त्वात् शब्दस्यातीव सविशेषपरत्वाच्च सामान्यतः सविशेषपरत्वे स्थिते, वाक्यविशेषाणां वाक्यतर्कपर्यालोचनया सविशेषपरत्वं वक्तुं परोक्तार्थं [2] संग्रहतेऽनुवदति— **यदुक्तम्** इति । **निर्विशेष**—आदिना शोधकाद्यर्थोक्तिः । **मात्र** शब्देन सगुणे तात्पर्याभावः । **एवं**शब्द एतत्प्रकरणमात्रपरत्वव्युदासार्थः [3] । परिहरति— **तत्** इति । 'अर्वाचीनं सगुणम्' इत्यन्यथासिद्धिव्युदासायाह— **सच्छब्द** इति । "एकमेव", "बहु स्याम्", "ऐक्षत", "असृजत", "सदायतनाः सत्प्रतिष्ठाः", "ऐतदात्म्यमिदम्", "तत्त्वमसि" इत्यादीनामर्थ उक्तः [4] **जगदुपादानत्व** इत्यादिना । **सर्वान्तरत्वं सर्वनियमनं** च धारणादर्थसिद्धे; ' अन्तः प्रविष्टः शास्ता", "प्रशासने गार्गि" इति श्रुतेः । प्रतिज्ञावाक्यं किं, सा च कथं युज्यत [5] इत्यपेक्षायामाह— **प्रपञ्चितः** इति । कथमस्मिन् प्रबन्धे ज्ञेयमित्यत्राह — **अत्रापि** इति ॥

"येनाश्रुतं श्रुतम्" इत्यत्र येन श्रुतेन मतेनेत्येवमर्थः दृष्टान्तदार्ष्टान्तिकसामर्थ्याभ्याम्, "आत्मनि खल्वरे दृष्टे" इति वाक्याच्च । "कथं नु" इति — न हि घटधिया पटधीः इति भावः । "आदेश" इति घञोऽकर्त्रर्थकत्वादुपदेश्यपरत्वं न [6] शंक्यम्, प्रकृतिप्रत्यययोः प्रशासनकरणार्थत्वे स्वारस्यद्वयात् प्रकृतिः स्वरसा । करणत्वं वैवक्षिकम् । [7] शाब्दानुमतेः अपेक्षितविशेषोक्त्यौचित्यं त्वधिकमिति । कथमिति चोदिते

---

1. परिसमापित-अ 2. संग्रहेण-ग.

3. व्युदासार्थम्-ग. 4. जगदुपादानता-अ.

5. इत्याद्यपेक्षायाम्-अ. 6. शक्यम्-ग.

7. शब्दानुगतेः अपेक्षितविशेषार्थौचित्यं-ग.

कारणज्ञानेन कार्यज्ञानं लोकसिद्धं निदर्शयति -- "यथा" इति । [1] तत्रापि वैशेषिकमतेनासिद्धिमाशंक्याह — "वाचा" इति। 'घटेनोदकमाहर' इति वाक्यपूर्वकोदकाहरणादिव्यवहारेण हेतुना इत्यर्थः । [2] अत्राजहल्लक्षणा। प्रयोजनतया हेतुत्वम् । तद्धि धीस्थम् । उक्त्यादानाद्यर्थं नामरूपे [3] मृत्पिण्डेन स्पृश्येते इत्यर्थः । [4] अनेन धीशब्दादिभेदानामवस्थाभेदेऽपि 'आस्ते, शेते' इतिवत् अन्यथासिद्धिर्दर्शिता । किं नियामकमित्यत्राह — "मृत्तिका" इति । [5] सत्यम्- ज्ञानसिद्धम् । प्रत्यभिज्ञा नियामिकेत्यर्थः । अन्यथा साध्यवैकल्यम्, 'इति'शब्दवैयर्थ्यं च । अस्तु कार्यकारणयोस्तथात्वम्; तत् कथमादेशज्ञानात् जगद्धीरित्यत्राह — "सदेव" इति । अस्या असत्कार्यव्युदासपरत्वं "कथमसतः" [6] इत्याद्युत्तरानुगुणम् । 'एक' शब्दो नामरूपाविभागपरः, "बहु स्याम्" इत्यनन्तरोक्तेः, "एकेन सर्वं मृन्मयम्" इति दृष्टान्तानुगुण्यात्, अव्याकृतत्वश्रुतेश्च । 'एव'कारो वियदादिनित्यताव्युदासाय । एवमुपादानत्वे सति 'अद्वितीय'पदं धीस्थनिमित्तान्तरनिषेधकम् । "ब्रह्माध्यतिष्ठत्" इति च श्रुत्यन्तरं न सजातीयादिनिषेधपरम्, 'अग्र'शब्दवैयर्थ्यात् जीवसूक्ष्मभेदवैषम्यादिपरिहाराच्च । "तद्धैके" [7] इत्यादि तु असत्कार्यनिरासपरम; शून्यक्षणिकवादे निरस्तेऽपि प्रतिज्ञासिद्धेः एतन्निरासापेक्षणात्, 'अग्र'शब्दवैयर्थ्याच्च । नामरूपभाक्त्वं सद्वारकम्, अनुप्रवेशोक्तेः । स च नाचिन्मात्रे, किं तु जीवेऽपि, "विज्ञानं च" इत्यादिश्रुतेः । "सिंहेन मया" इतिवत् "जीवेनात्मना" इत्युक्तिः । 'सर्व'शब्दासङ्कोचात्, "सर्वाः प्रजाः"

---

1. तथापि–अ. 2. अत्र जहल्लक्षणा–ग.
3. पिण्डेन–अ. 4. अनेन शब्दादि–ग.
5. सत्यत्वं–अ.
6. इत्युत्तरानुगुण्यात् । एकशब्दो नामरूपविभागानर्हपरः–ग.
7. इत्याद्यसत्कार्य–ग.

इति पूर्ववाक्येन, "इदं सर्वम्" इत्यारभ्य, "विज्ञानं चाविज्ञानं च" इति [1]श्रुत्यन्तराच्च 'ऐतदात्म्यम्" इति चिदचितोस्तदात्मकत्वसिद्धिः। सामानाधिकरण्येन विशेष उपसंहारः "तत्त्वमसि" इति। एवं सति विशिष्टाद्वैतपरत्वे स्पष्टमुपक्रमोपसंहारादिलिङ्गषट्कम्॥

**"अथ परा यया तदक्षरम्" इत्यत्रापि .... .... .... कल्याणगुणयोगः परस्य ब्रह्मणः प्रतिपादितः॥** (पृ. ५१-५२)

परविद्यार्थमाह— **अथ** इति। "अचक्षुः" इत्यादिना इन्द्रियाधीनज्ञानक्रियत्वव्युदासः, "जवनो ग्रहीता" इति श्रुतेः। **विभुः**— प्रभुः नियन्ता; जगच्छरीरीति फलितम्। कारणत्वाक्षिप्तं सार्वज्ञ्यादि प्रकरणे "यः सर्वज्ञः" [2]इत्यादिकण्ठोक्तं च। **प्राकृताः**— प्रकृतिसंबन्धिनः, प्रकृतिसंसर्गप्रयुक्ताश्च॥

**"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रापि सामानाधिकरण्यस्य .... ... ... ... एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति हि शाब्दिकाः॥** (पृ. ५२)

अथ "सत्य"—आदिवाक्यस्य सविशेषपरत्वमाह — **सत्यम्** इति। कुत इत्यत्राह— **प्रवृत्ति** इति। ततः किमित्यत्राह — **तत्र** इति। को भेद इत्यत्राह — **इयान्** इति। [3]व्यावृत्तयः स्वरूपमात्रमित्यत्राह— **न च** इति। पर्यायत्वं स्पष्टमिति दूषणान्तरद्वयमाह— **एकेन** इति। द्वितीयमुपपादयति — **एकस्मिन्** इति। [4]विशेषणानेकत्वात् न ऐकार्थ्यमित्यत्राह—

1. श्रुत्यन्तरेण चैकार्थ्याच्च–अ.
2. इत्यादिकण्ठोक्तं च। अथ सत्यादिवाक्यस्य–अ.
3. व्यावृत्त्योः स्वरूपमात्रत्वम्–ग.
4. विशेषणानैकान्त्यात्–ग.

**न च** इति । **विशिष्टता**— विशेषणान्वयः । नाविरोधमात्रम्, अनुकूलमेवेत्यर्थः । उक्तं लक्षणग्रन्थेनोपपादयति — **भिन्न** इति । **प्रवृत्तिः**— विशेष्यबोधनम्; **निमित्तम्** – विशेषणम् । **अर्थे** – विशेष्ये । **भिन्न** इत्यादिना 'घटकुम्भ' शब्दव्युदासः । **एकस्मिन्** इति 'घटपट' उक्तिव्युदासः । विशेषणमात्रपरत्वे दूषणं तदनुपगमात् [1] प्रत्युक्तम् । विशेष्यमात्रपरत्वे पर्यायत्वादित्रयं लक्षणा च । असत्यादिप्रतियोगिनां तद्व्यावृत्तीनां [2] चोपलक्षणत्वपक्षे विशेषणत्वपक्षे चैकतरवैयर्थ्यं लक्षणा च । विशिष्टपक्षे न मिथः [3] समवायः, पदार्थानां पृथक् [4] स्मरणात्, परामर्शस्य [5] योग्यतानुरोधित्वात् अभिधानस्य यौगपद्याच्च । ज्ञाताज्ञातविभागः परामर्शदशायां प्रतीयते । यौगपद्येऽपि न विशेषणैक्यम्, [6] विशिष्टैक्यपरत्वात् समानविभक्तेः । तच्च व्युत्पत्त्यनुरोधात् । यथैकपदे अखण्डार्थवादी प्रष्टव्यः— सत्यादिपदानि [7] प्रतियोगिव्यावृत्तिमात्रपराणि, उत तदवच्छिन्नस्वरूपपराणि, उत स्वरूपमात्रपराणि; अवच्छिन्नपरत्वे च विशेषणतया उपलक्षणतया वा अवच्छेदकत्वम् । एषु शिरस्सु दूषणपरिहारास्तुल्याः । शौक्ल्यादिवैषम्यं शाब्दं स्फुटम् । तत्र कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तमिति [8] व्यावृत्त्यभिधायिपदसमभिव्याहारात्, अत्र तदभावाच्च । आर्थं तु द्विधा प्रागुक्तम् 'श्यामो युवा' इत्यादौ विशेष्यैक्यस्य न देवदत्तप्रत्यक्षबलाधीनत्वं, [9] धर्मिपदैकवचनात् । प्रत्यक्षे परोक्षे च खण्डादौ भेद इव [10] तादृशदेवदत्ते हि ऐक्यमपि दृष्टम् । विरोधाविरोधौ तु नियामकौ, न तु विशेषणत्वम् । अतो नैक्यप्रतीति-

---

1. इत्युक्तम्-ग.
2. वोपलक्षणपक्षे चैकतर-अ.
3. समन्वयः-ग.
4. स्मारणात्-अ.
5. योग्यतानुयायित्वात्-अ.
6. विशेषैक्यपरत्वात्-अ.
7. प्रतियोगिमात्रपराणि-अ.
8. व्यावर्ताभिधायि-अ; व्यावर्त्याभिधायि-क.
9. धर्मपद-अ.
10. तादृशे देवदत्तेऽप्यैक्यं-ग.

विरोधात् विशेषणत्यागः । प्रत्यक्षपरोक्षविभागविरहेणोभयमपि हि प्रतिपन्नम् । वाच्ये प्रधानांशेऽपि न मुख्यत्वम् द्वाराभावे द्वार्यभावात् । 'विषं भुंक्ष्व' इत्यादौ विरोधात् सर्वलक्षणा । [1] अत्र तु तदभावादयुक्तत्वम् । अतः [2] सविशेषपरमिदं वाक्यम् ॥

**यदुक्तम्— "एकमेवाद्वितीयम्" इत्यत्र 'अद्वितीय' पदं गुणतोऽपि सद्वितीयतां न सहते ... ... ... "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन सविशेषमेव प्रतिपाद्यते इति विज्ञायते ॥**

(पृ. ५२-५३)

इत्थं सामानाधिकरण्यान्वयानुपपत्तिं निरस्य, कारणवाक्यैकार्थ्यं शोधकान्तरैकार्थ्यं च निरसितुमनुवदति–**यदुक्तम्** इति । **गुणतोऽपि सद्वितीयताम्**–'सदेव' 'एकमेव' इति सजातीयविजातीयभेदव्यावृत्त्या परिशेषात् इत्यर्थः । सगुणपरकारणवाक्यैकार्थ्यं स्यादित्यत्राह–**अतः** इति । कुतस्तदैकार्थ्यापेक्षेत्यत्राह – **कारणतया** इति । ज्ञाप्यबहिर्भूतं व्यवच्छेदकमुपलक्षणम् । निगमयति–**अतः** इति । शोधकान्तरैकार्थ्यं चाह–**अन्यथा** इति । दूषयति–**तत्**–इति । कथमित्यत्राह– **जगत्** इति । 'एकमेव' इत्युपादानतोक्तिः । यथा विचित्रशक्तियोगं बोधयत्यद्वितीयपदं, तथैवोत्तरवाक्यमपि तमेवावगमयति, न निर्विशेषत्वमित्यर्थः । शङ्कते– **अविशेषेण** इति । उपादानान्तरनिषेधः किं न स्यात्? [3] प्रतिज्ञाविरोधश्चेति भावः । परिहरति — **सिसृक्षोः** इति । [4] नामरूपभेदाभाव एकत्वम् । भाव्यवस्थाविशेषस्य प्रागवस्थायोग उपादानता । अन्यथाऽनिष्टमाह— **सर्व** इति । सर्वशाखानयस्य

1. अत्र तदभावात्–**ग.**
2. सविशेषपरत्वमिति–**ग.**
3. प्रतिज्ञान–**अ.**
4. नामरूपभेदभावत्वं भाव्यवस्था–**ग**

परमतवैपरीत्यमाह — [1] **सर्वशाखा** इति । **अत्रभवतः** — पूज्यस्य इत्युपालम्भः । **अत्र**— निर्गुणवादे इति वा । निगमयति— **अतः** इति ॥

**न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात् तेषाम् ... ... ... सगुणनिर्गुणवाक्ययोर्विरोधाभावात् अन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम्** ॥ (पृ. ५३–५४)

शोधकान्तरैकार्थ्यं व्युदस्यति — **न च** इति । विषयविभागादविरोधमाह — **प्राकृत** इति । ज्ञानस्वरूपतोक्तिरूपमार्थगुणनिषेधं परिहर्तुमाह— **ज्ञान** इति । ततः किमित्यत्राह— **न तावता** [2] इति । किं ज्ञानत्वान्नियतधर्मधर्मिभावायोगः, उत [3] एकजातीयवस्तुत्वात् इति विकल्पे, प्रथमं व्युदस्यति— **ज्ञातुः** इति । नियतधर्मधर्मिभावायोगो व्याप्त्या चेत् धर्मता स्यात् । श्रुतिबलात् स्वातन्त्र्यं [4] चेत् तत एव धर्मधर्मिता च स्वीकार्या । ज्ञानानाश्रयत्वव्याप्तिश्च धर्मविषय इति न विरोध इति भावः । द्वितीयं व्युदस्यति— **ज्ञानस्वरूपस्य** इति । उक्तार्थस्थेम्ने ज्ञातृत्वे मानमाह — **ज्ञातृत्वम्** इति । येन ज्ञातृत्वं फलितं [5] तादृगर्थपराः कण्ठोक्तिपराश्च **सर्व** शब्दोक्ताः । [6] ईश्वरत्वसत्यसङ्कल्पत्वाभ्यां फलितं तत् । स्वाभाविकत्वहेयाभावाभ्यामाविद्यकत्वव्युदासः । **कल्याणगुणान्** इति [7] उत्सर्गापवादनयोऽभिप्रेतः । स उपात्तविशेषादन्यत्र विरोधपरिहाराय सामान्यशब्दसङ्कोचः । **समस्तहेयरहिततां च** इति सामान्यविशेषनयोऽभिप्रेतः ।

---

1. सर्वशाखा इति । निगमयति–**अ.**
2. इति । ज्ञानत्वात्–**अ.**
3. एकजातिवस्तु–**ग.**
4. चेत् धर्मधर्मिता -**अ.**
5. तादृगर्थपराश्च सर्वशब्द–**अ.**
6. ईश्वरत्वपरत्वाभ्यां–**ग.**
7. गोबलीवर्दनयो-**क.**

स उपास्यविशेषे, सामान्यशब्दसङ्कोचः । [1] न्यायद्वयफलमेकस्मिन् वाक्ये सार्थोपन्यासं दर्शयति — **निर्गुण** इति । [2] एवमविरोधादपच्छेदनयाविषयत्व-माह— **इति** इति । **अन्यतरस्य** इति — अनियतविरोधपौर्वापर्ये एव स्थले अपच्छेदनयः, अन्यथा वैधहिंसानिवृत्तिप्रसङ्गात् । तयोर्नियमे तु विरोध-नयात् परानुत्पत्तिरिति भावः ॥

**" भीषाऽस्माद्वातः पवते " इत्यादिना ... ... ... कल्याण-गुणानन्त्यमत्यादरेण वदतीयं श्रुतिः ॥** (पृ. ५४)

अध्यात्मप्रकरणेषु गुणशब्दप्रसिद्धिश्च सत्त्वादिगुणत्रये " गुणा गुणेषु वर्तन्ते " इत्यादिषु । अथ सत्यादिवाक्यवत् [3] प्रकरणोपसंहारगतं वाङ्मनसनिवृत्त्युक्तिरूपमार्थगुणनिषेधं परिहरति — **भीषास्मात्** इत्यादिना । अत्र [4] आनन्दाधिक्यात् गुणविभूत्यतिशयसिद्धिः । " युवा स्यात् ", " तस्येयं पृथिवी " इत्यादिश्रवणात् ; क्रमात् [5] गुणप्रकर्षमुक्त्वा वाङ्मनस-निवृत्त्युक्तिः गुणानन्त्यात् । अन्यथा [6] अपकर्षो हि वक्तव्य इति भावः । **अत्यादरेण** – [7] " आनन्दं ब्रह्मणो विद्वान् " इति ह्युक्तिरिति भावः । **इयम्** — एतत्प्रकरणस्था निर्गुणार्थत्वेन परोक्तेति भावः ॥

**" सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता "**

---

1. न्यायशब्दफलम्–अ.
2. एवमपि विरोधात्–अ.
3. प्रकरणोपसंहारगतवाङ्मनस–ग.
4. आनन्दाधिकरणत्वात्–अ.
5. गुणप्रकर्षत्वावच्छिन्ना वाङ्मनस–ग.
6. अपकर्षो वक्तव्यः–अ.
7. ब्रह्मण आनन्दं विद्वान्–अ.

**इति ... ... ... "यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति श्रुत्यैव सिद्धम् ॥** (पृ. ५४)

अथ स्ववाक्यैकदेशानुगुण्यमाह— **सोऽश्नुते** इति । ब्राह्मणवाक्ये [1] 'पर' शब्दविवरणरूपत्वमभिप्रेत्य **परस्य विपश्चितः** इत्युक्तम् । अर्थं वक्तुमन्वयमाह— **विपश्चिता** इति । किमत्र [2] गुणवाचिपदमित्यत्राह — **काम्यन्त इति** इति । अनेन "यदा सर्वे प्रमुच्यन्ते कामाः" इत्युक्त-कामपरत्वव्युदासः । ब्रह्मवेदनफलत्वात् परशब्दविवरणत्वात् अवयवशक्त्यानुगुण्याच्च "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इतिवत् अस्यार्थः । वाक्यार्थमाह — **ब्रह्मणा** इति । कस्य [3] गुणा इत्यत्राह — **तद्गुणान्** इति । तद्धि संनिहितमिति भावः । **सह** शब्दः 'क्षीरेण सह ओदनं [4] भुंक्ष्व' इतिवत् भोग्यसाहित्ये, न तु [5] भोक्तृसाहित्ये । **सह**शब्देनाप्राधान्यम् आशङ्क्याह -- **दहर** इति । "यो वेद" इति विहित उपासने गुणप्राधान्यं वक्तुमित्यर्थः । फलदशायां गुणप्राधान्योक्त्या कथमुपास्तौ तत्प्राधान्यमित्यत्राह — **फल** इति । एवकारो न्यायानपेक्षत्व-द्योतकः ॥

**"यस्यामतं तस्य मतम्", "अविज्ञातं विजानताम्" इति ब्रह्मणो ... ... ... "विज्ञातमविजानताम्" इति मतत्वविज्ञातत्व-वचनं तत्रैव विरुध्यते ॥** (पृ. ५४-५५)

---

1. परशब्दविवरणस्वरूपम्-अ.
2. गुणपदम्-अ.
3. गुणान्-अ.
4. भुंक्ते-**क**; भुज्यते-**अ**.
5. भोक्तृसाहित्ये । अप्राधान्यमाशङ्क्याह—दहरेति । उपास्तौ गुण-प्राधान्यं वक्तुमित्यर्थः-अ.

ज्ञेयत्वं सगुणस्येति ज्ञेयत्वव्युदासो निर्गुणत्वपर इति परोक्तं [1] निरसितुमाह — **यस्य** इति । ज्ञानमालाविषयत्वे दूषणमाह — **ब्रह्म** इति । [2] तात्पर्यद्योतनायाह — **असन्** इति । "विद्ययाऽमृतम्", "ततो ज्ञानं प्रवर्तते", "ज्ञानाग्निः" [3] इत्यश्रुतविषयज्ञानपरवाक्यसमुत्थबन्धमिथ्यात्वधिया मोक्ष इति पक्षमाशङ्क्याह — **अतः** इति । [4] बहुषु वाक्येषु [5] धियो ब्रह्मविषयत्वश्रवणादित्यर्थः । उपासनात्मकज्ञानाविषयत्वं व्युदस्यति— **ज्ञानं च** इति । [6] सगुणोपास्त्यविषयत्वं व्युदस्यति— **उपास्यं च** इति । निर्गुणपरतया पराभिमतसद्विद्यादेरपि सगुणपरत्वोपपादनादिति भावः । तर्हि "यस्यामतम्" इत्यस्य कोऽर्थ इत्यत्राह — **यतः** इति । **अनन्तस्य** इति— [7] स्वरूपतः । **अपरिच्छिन्नगुणस्य** इत्यत्र, "वर्षायुतैः", "नान्तं गुणानाम्, "मतिक्षयात्" इत्याद्यनुसन्धेयम् । कथं [8] परिच्छेदधीमताम् अमतत्वमित्यत्राह— **अपरि** इति । विपक्षेऽनिष्टमाह — [9] **अन्यथा** इति ; न परं श्रुत्यन्तरविरोध इत्यर्थः ॥

**यत्तु — "न दृष्टेर्द्रष्टारं ... न मतेर्मन्तारम्" इति श्रुतिः ... ... ... अन्यथा "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिविरोधश्च ॥** (पृ. ५५)

ज्ञातृत्वनिषेधपरतया परोदाहृतश्रुतेरर्थान्तरपरत्वं विवक्षन् 'दृष्टेः' इति पञ्चमीपक्षेऽर्थमाह — [10] **यत् तु** इति । धीविशेषविवक्षितत्वं परमतेऽपि

---

1. निरस्तुम्-**अ.** 2. तात्पर्यद्योतनार्थम्-**क.**
3. इत्याश्रितविषयज्ञानपर-**ग.** 4. बहुवाक्येषु-**ग.**
5. धीब्रह्मविषयत्व-**अ.** 6. सगुणोपास्तिविषय-**क.**
7. स्वरूपतः । "वर्षायुतैः"-अ.
8. परिच्छेदधीमतत्वम्-**क.** 9. अन्यथा इति । परं श्रुत्यन्तर-**अ**
10. यत् तु इति । निषेध्यप्रसञ्जकमाह-**ग.**

तुल्यम् । स्वसिद्धित्वमेव विवक्षितम् । निषेध्यप्रसञ्जकमाह — **कुतर्क** इति । तमाह — **आगन्तुक** इति । नित्यत्वात् द्रव्यत्वाच्च आत्मनः [1]तादृक् धीर्न स्वरूपमिति भावः । षष्ठ्यन्तपक्षेऽर्थमाह — **अथवा** इति । "यः प्राणेन" इत्याद्युक्तप्राणितृत्वादिभिः [2]कृता जीवस्योपास्यत्वशङ्का ह्यत्र व्युदस्यते । विपक्षे [3]बाधकमाह — **अन्यथा** इति ॥

**"आनन्दो ब्रह्म" इत्यानन्दमात्रमेव ... ... अपि त्वानन्दि, ज्ञातृत्वमेव ह्यानन्दित्वम् ॥ (पृ. ५५–५६)**

आर्थगुणनिषेधविशेषं व्युदस्यति — **आनन्द** इति । प्रागुक्तमतिदिशति — **तत्** इति । कथमित्यत्राह — **ज्ञानम्** इति । विज्ञानानन्दशब्दयोरैकार्थ्ये सहप्रयोगः कथमित्यत्राह — **विज्ञानम्** इति ; प्रवृत्तिनिमित्त[4]भेदादित्यर्थः । **आनन्दम्**–अनुकूलम् । **विज्ञानम्**– स्वयंप्रकाशम् । परोपगममाह — **अत एव** इति । व्याप्तिविरोधपरिहारः पूर्ववत् । माने सति हि न्यायसञ्चार इत्यत्राह–**अस्य** इति । आनन्दित्वे मानमाह–**स एकः** इति । ज्ञातृत्वश्रुतिरप्यानन्दित्वे मानमित्याह— [5]**ज्ञातृत्वम्** इति । **एव** इति– ज्ञात्रतिरिक्तानन्दित्वव्युदासः । **हिः** उपपादनसूचकः ॥

**यदिदमुक्तम्— "यत्र हि द्वैतमिव भवति ... ... नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम् ॥ (पृ. ५६)**

अथ [6]भेदनिषेधमनुवदति— **यत्** इति । परिहरति— **तत्** इति

---

1. तादृशं स्वरूपमिति–अ. 2. प्रकृता–**क.**
3. बाधमाह–**अ.**
4. भेदादित्यर्थः । परोपगममाह–अ.
5. ज्ञातृत्वम् इति । ज्ञात्रतिरिक्त–**ग.**
6. भेदनिषेधमाह–**ग**

तज्जत्वतल्लत्वाभिप्रायेणाह — **ब्रह्मकार्यतया** इति । तदनत्वाभिप्रायेणाह— **तदन्तर्** इति । [1] **तदन्तर्यामिक**शब्देन **तदात्मकत्व**विवरणम् । 'तदात्मकत्वाच्च' [2] इति चान्वयः । हेतुत्रयशङ्काव्युदासाय [3] प्राक् निर्देशः । व्यतिरेकस्यान्वयशेषत्वात् [4] ऐक्यविधिशेषो भेदनिषेधो मृद्घटैक्यवत् नीलोत्पलैक्यवच्च कार्यकारणैक्यं प्रकार्यैक्यं च विहितमिति तद्विरोधिभेदविषय इत्यर्थः । गोबलीवर्दनयमभिप्रयन्नाह— **न पुनः** इति । सामान्यनिषेधस्य विहितविशेषातिरिक्तविषयत्वादित्यर्थः । [5] सामान्यविशेषनयश्च "न तत्समश्च" इत्यादिना स्वतन्त्रस्वरूपभेदविशेषनिषेधादिति भावः । "एकः सन् बहुधा", "बहु स्यां प्रजायेय" इत्यादिषु लोकसिद्धो भेदोऽनूद्यत इति शङ्कते— **नानात्व** इति । परिहरति— **न** इति । अप्राप्तत्वादित्यर्थः । घटादौ स दृष्टश्चेदभेदोऽपि दृष्टः । [6] जीवपरैक्यं न चेत् [7] धार्यत्वधारकत्वादिरपि तथेति भावः ॥

**"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य ……**
**…… जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति ॥**
(पृ. ५६–५७)

"यदा ह्येव" इति श्रुतेरर्थं वक्तुं परोक्तमनुवदति– **यदा** इति । दूषयति— **तत्** इति । कुत इत्यत्राह— **सर्वं खलु** इति । **शान्तिहेतुत्वं** पराभ्युपगमेनोक्तम् । अस्मिन् वाक्ये कथं नानात्वधीः? तस्याश्च [8] कथं भयविरोधित्वमित्यत्राह — **तथा हि** इति । [9] **तदुत्पत्ति** इत्यत्र **उत्पत्ति**

1. तदन्तर्यामित्वशब्देन–ग.
2. इति तदन्वयः-ग.
3. पूर्वनिर्देशः–अ.
4. ऐक्यविधिशेषभेदविशेषो–अ.
5. सामान्यविशेषनिश्चयश्च–ग.
6. जीवपरैक्यं चेत्–ग.
7. धार्यत्वादिरपि–क.
8. कथमभयविरोधित्वम्–ग.
9. तदुत्पत्ति इत्यादौ–ग.

आदिशब्दाः [1] अन्तर्भावितणिजर्थत्वेनोत्पादनादिप्रयोजकव्यापारपराः । [2]अतः सर्वस्य कर्मत्वम् । उत्पत्त्यादिः क्रिया यस्य इति बहुव्रीहिर्वा । ततः किमित्यत्राह– **अतः** इति । सद्वारकमभयहेतुत्वमित्यर्थः । "यदा ह्येव" इति । वाक्यस्यार्थं परः पृच्छति– **एवं तर्हि** इति । स्वयं प्रतिवक्ति– **इदम्** इति । **दृश्यम्**– अचेतनम् ; **आत्म्यम्**–शरीरम् , व्याप्यत्वात् । **मुक्तोऽपि** [3] बद्धदशायां देवादिशब्दनिरुक्तः । नित्याश्च भगवद्धार्याः । उपबृंहणमाह — [4] **यथा** इति । **हानिः** – इष्टहानिः । **छिद्रम्** – अनिष्टप्राप्तिरन्ध्रम् । **भ्रान्तिः** —चित्तविकारः । **विक्रिया**—देहविकारः । **विच्छेद**वाचिपदं किमित्यत्राह– **ब्रह्मणि** इति ; 'निरन्तर' शब्दस्याविच्छेदपरत्वप्रसिद्धेरिति भावः ॥

चिद्ब्रह्मनिर्विशेषत्वान्यमिथ्यात्वपरत्वेन परोदाहृतयोः सूत्रयोः तद्विपरीतार्थत्वमाह — [5] **यदुक्तम्** इति ॥

इति श्रुतिघट्टः ।

---

## ॥ स्मृतिपुराणघट्टः ॥

**स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थः ... .... परं ब्रह्म सविशेषं, तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ॥**

(पृ. ५७–६१)

---

1. अन्तर्भावितण्यर्थतया-अ, क.
2. अतः सकर्मकत्वम् । उत्पत्त्यादि क्रिया-अ.
3. बन्धदशायां देवादिशब्दनिरुक्तिः-अ ; देवादिशब्दे निरुक्तिः-क.
4. यथा इति । विच्छेदवाचिपदम्-अ.
5. यत् इति-अ.

श्रुतेः [1] सविशेषपरत्वेन स्मृत्यादेस्तदनुरोधित्वेन सविशेषार्थत्वे बलादभ्युपेयेऽपि स्मृतिपुराणपूर्वापरालोचनयाऽपि [2] तादर्थ्यं विवक्षन् आह — **स्मृति** इति । स्वतो वक्तृवैलक्षण्योपगमात् स्मृतेः प्रागुपादानम् । [3] तद्धि परस्य अविद्यानिर्विशेषपरत्वभ्रमास्पदवचसामर्थं वक्तुं सविशेषपरवचांसि दर्शयति — **यो माम्** इत्यादिना । अचित्तत्संसृष्टमुक्तनित्यव्युदासः **अजम्** इत्यादिपदैः । [4] एवंविदोऽसंमूढत्वम् उत्तरार्धोक्तमप्यभिप्रेतम् । धारकत्वेन व्यावृत्तिं विशदयति — **मत्स्थानि** इति । निषेधस्य विहितान्यविषयत्वात् **न च** इति लोकवत् धारणनिषेधः । लौकिकं हि धारणमायासात्, ऐश्वरं तु सङ्कल्पमात्रात् । **योगम्**— शक्तियोगम् । तत् स्फुटयति— **भूतभृत्** इति । **आत्मा** – सङ्कल्परूपज्ञानम् । गुणास्तु अविद्योपहितस्येश्वरस्य, न परस्य ब्रह्मणः इति शङ्कायां तस्यैव ब्रह्मलक्षणं परान्तराभावं चाह— **अहम्** इति । स्थितिरर्थसिद्धा । 'मत्तः अन्यत् परतरं नास्ति' इत्यन्वयः, समाभ्यधिकनिषेधपरश्रुतिस्मृत्यैकार्थ्यात् । स्थितिहेतुत्वमन्तःप्रविश्यैवेति दृष्टान्तेन विशिनष्टि — **मयि** इति । अनेन शरीरित्वं फलितम् । **विष्टभ्य** – अधिष्ठाय ; इति नियमनोक्तिः । **एकांशेन**— सङ्कल्पैकदेशेन । व्यापनभरणस्वाम्यैः वैलक्षण्यकण्ठोक्तिमाह— **उत्तम** इति । [5] एवंविदोऽसंमूढत्वमुत्तरत्रोक्तमनुसन्धेयम् । नारायणानुवाकार्थः स्मारितः **परमात्मा अक्षरात्** इत्युक्तेः । "उपजीवति" इति धारकतयोपजीव्यत्वम् । "विश्वमेवेदं", "स ब्रह्मा" इति सामानाधिकरण्यं पतित्वव्यापकत्वादिभिः तच्छरीरकतयेति

1. सविशेषविषयत्वेन-ग.

2. तादात्म्यं-ग.

3. तद्धि परस्याविद्यन् निर्विशेष – अ. निर्विशेषपरत्वभ्रमास्पदवचः-सामर्थ्यं-ग.

4. एवंविधमसंमूढत्वं-ग.

5. एवंविधासमूढत्वं-ग.

स्फुटम् । "क्षेत्रज्ञं चापि माम्" इत्यत्राप्येवमेव । "न तदस्ति" इति अतदात्मकत्वनिषेधः । **विनाशब्दः** संबन्धाभावे, अविनाभावशब्दस्य संबन्धे प्रयोगात् ॥

वैष्णवे पुराणे "प्रत्यस्तमित" इति श्लोको यत्प्रकरणस्थः तस्योपक्रमे [1] उभयलिङ्गकत्वं दर्शयति — **स सर्व** इति । [2] **दोषाः** — क्लेशादयः । **सर्वावरणम्** — सर्वविषयज्ञानसङ्कोचः । अविद्याकर्मवासनादिधीसङ्कोचहेतवो वा । अखिलात्मत्वं विवृणोति— **तेन** इति । **समस्त** इति [3] विशेष्यपरः । कल्याणत्वस्वभाव आत्मा स्वरूपं यस्य सः तथोक्तः "द्वयेकयोः" इतिवत् । स्वरूपं स्तौति-- **स्वशक्ति** इति । **भूतसर्गः** — भूतजातम् । **इच्छा संसाधित** इति पदद्वयेन [4] हेतुफलभेदोक्तिः । **अभिमतत्वम्**— अभिमत्यर्हत्वम्; स्वानुरूपत्वमिति यावत् । **तेजः** इति । '**महत्**' '**सु**' शब्दौ [5] अपरिच्छेदानन्दत्वपरौ साधारणौ । [6] **परः** — विलक्षणः । गुणादिदोषात्ययं विवृणोति — **न यत्र** इति । **आदि** शब्दात् कर्मादयः । अनेन "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" [7] इति योगसूत्रस्मारणम् ॥

ततो वेदान्तसिद्धान्तवैषम्यमाह— **व्यष्टि** इति । व्यष्टिसमष्टिकार्यकारण [8] चिद्वर्गौ । रूपशब्दोपपादनम् **सर्वेश्वर** इति । स्वरूपतः प्रकारतश्च वेत्ति इति [9] **सर्वदृक् सर्ववेत्ता** । समस्तं शक्तिः अयुतधर्मो यस्य स तादृक् ।

---

1. उभयलिङ्गत्वं—अ. 2. गुणादिदोषाः-ग.
3. विशेष्यपरं, समस्तस्वरूपम्—ग.
4. विग्रहभेदप्रयोजनोक्तिः—ग.
5. अपरिच्छेदानन्तत्वपरौ—ग. 6. एवं परः—अ.
7. इति योगसूत्रं स्मारयति । ईश्वर इति-योगसूत्रस्मरणम्—ग.
8. चिदचिद्वर्गौ । रूपत्वोप—अ 9. सर्ववित् सर्ववेत्ता—अ.

**परम** इति । [1]परान्तरनिषेधः । '**स ज्ञायते**' इति पाठे विषयद्वारा ज्ञानविशेषणम्— **अस्तदोषत्वादि** । अर्थेन हि धीविशेषः । तेन अचिद्बद्धमुक्तनित्यधीव्युदासः । **गम्यते** इति — निवृत्ते प्रतिबन्धेऽनुभवः । **अज्ञानम्** — उपादेयज्ञानादन्यत् । '**संज्ञायते**' इति तु पाठे **तदस्तदोषम्** इत्यादीनि ज्ञेयविशेषणानि । "प्रत्यस्तमितभेदं" "सत्तामात्रम्" इति पदद्वयस्य ब्रह्मणि गुणविभूतिरूपार्थानन्वयपरत्वव्युदासाय तदन्वयपराः श्लोकाः प्रथममुदाहृताः । "अगोचरं वचसाम्" इत्यस्य ब्रह्मणि सर्वशब्दानन्वयपरत्वव्युदासाय भगवच्छब्दवाच्यत्वपराः पश्चादुदाह्रियन्ते **शुद्धे** इत्यादयः । "अशब्दगोचरस्य" इति पूर्वश्लोकोक्तमुक्तात् व्यावर्तकानि शुद्धत्वादीनि विशेषणानि । **शुद्धे** – नित्यशुद्धे । 'भृञ्गमवस' इति धातुषु 'ड' प्रत्ययान्तेषु भश्च गश्च वश्चेति रूपाणि स्युः । **संभरणं**– प्रकृत्यादीनां सर्गोन्मुख्यकरणम् । **भर्ता**–स्वामी । **इति** शब्देन प्रवृत्तिनिमित्तनिष्कर्षात् द्वित्वोक्तिः । उत्तरत्र धर्म्यैक्यविवक्षया तदभावात् त्रित्वानुक्तिः । **नेतृत्वम्** – स्थापकत्वम् । **गमयिता**– सङ्गमयितेत्यर्थः । उपसर्गव्यङ्ग्योऽर्थो धातुलीन इति भावः । संहर्तृत्वम्—"सं च वि चैति" इतिवत् । कारणावस्थं स्वात्मानमिति वा । **स्रष्टा** इति उत्पूर्वस्यार्थः । वर्णद्वयसङ्घातार्थमाह— **ऐश्वर्यस्य** इति । **वैराग्यम्**– अनादरः । वकारार्थमाह— **वसन्ति** इति । अधिकरणे कर्तरि च [2]डो विवक्षितः प्रवृत्तिनिमित्तवाचित्वसङ्गतिवशात् । व्यवहितमपि [3]ग्रन्थमलादत्ते— [4]**ज्ञान** इति । उपादानत्वधारकत्वविरोधिनिराससंहारैः शक्तिबलतेजांस्यार्थानि । 'अन्' इत्यस्यार्थमाह— **विना** इति । "कश्यपः पश्यकः" इतिवत् । विभक्त्यन्तरसमासयोरपि [5]तकारः

---

1. परान्तरनिषेधः । संज्ञायते इति तु पाठे–अ.
2. यो-अ.
3. ग्रन्थमादत्ते-ग.
4. ज्ञान इति । 'अन्' इत्यस्य–ग.
5. नकारः–अ.

स्यकदोषत्वपरः । "तानि वा एतानि त्रीण्यक्षराणि" इत्यत्र तकारस्य स्थच्यमानावस्थवस्तुवाचित्वदर्शनात् । **परम** इत्युत्तीर्णव्युदासः । अन्यत्रापि प्रयुज्यत इत्यत्राह— [1] **तत्र** इति । **पूज्यपदार्थोक्तिः**— अवयवार्थोक्तिः । **परिभाषा** — रूढिः ॥

अथ तदुपसंहारेऽपि विग्रहमुखेन सविशेषत्वमाह—**समस्ताः** इति । **समस्तशक्ति** [2] **तत् चेष्टावन्ति रूपाणि करोति** इत्यन्वयः । [3] परविषयत्वोपगमेन सविशेषपरता दर्शिता; अथ जीवस्वरूपपरत्वे [4] निषेधानां संकुचितविषयत्वं तादृगर्थपरविषयवचनैः उपपादयिष्यन् तदुभयघटनाय परस्मिन्नतिदिष्टजीवगुणग्रन्थम् उदाहरति — **एवंप्रकारम्** इति । अमलत्वादयः [5] मुक्तेऽप्यसंभाविनः । **अमलम्**—मलविरोधि । [6] **समस्त** इति । स्वतः इति भावः । पूर्वं परमपदशब्दोक्तमुक्तव्यावृत्त्यर्थमाह— **विष्णवाख्यम्** इति । अनेन "ज्ञानस्वरूपम्" इत्यादेः परोक्तार्थपरत्वव्युदासाय बुद्धिस्थक्रमेण प्रथमांशोपसंहारेऽपि तत्प्रतिकूलार्थो दर्शितो भवति । अथ तदर्थनिष्कर्षाय [7] प्रथमांशोपक्रमस्थम् अर्थात् शास्त्रोपक्रमस्थं च वचनमुदाहरति—**पर** इति । पूर्वार्धेन त्रिविधानन्त्यसंग्रहः । पूर्वपादेन [8] कालानन्त्यसिद्धिः, अस्मदादेः परेषां देवादीनां [9] कालाधिक्यात् । **आत्मसंस्थितः**—स्वनिष्ठः । कालपरिच्छेद-

1. तत्र इति । परिभाषा-**अ.**
2. तत् ब्रह्म चेष्टावन्ति-**ग.**
3. परविषयत्वोपगमे विशेषपरता-**अ.**
4. निषिद्धानां संकुचितविषयं तादृगर्थपरविषयान्यवचनैः-**ग.**
5. मुक्तेऽप्यसंभविनः-**ग.**
6. समस्तैः स्वतः-**ग.**
7. प्रथमांशोपक्रमसमर्थनात् शास्त्रो-**ग.**
8. कालात्यन्तसिद्धिः-**ग.**
9. चानन्त्यात्-**ग.**

व्यापकनिवृत्तिपूर्वकं तन्निवृत्तिमाह—**रूप** इत्यादिना । कर्मकृता जातिगुणक्रियावयवतन्निर्देशा एव **विशेषणानि** । **केवलम्**; न तु 'जायते वर्धते' इत्यादिशब्दैः । 'सर्वत्र' इत्यादिश्लोकत्रयेण नामनिर्वचनमुखेन देशानवच्छेदप्रसङ्गात् तन्नामवत एव ब्रह्मत्वं वस्त्वनवच्छेदं चाह—**सर्वत्र** इति ॥

शास्त्रोपसंहारेऽपि प्रासङ्गिकोक्तदेवताविशेषपरमात्मत्वपरश्लोकावुदाहरति—**प्रकृतिः** इति । अथाविद्याद्यन्वयस्य सद्वारकत्वज्ञापनाय द्वारभूतयोः शरीरत्वं तत्र तदन्वयं च दर्शयति—**द्वे रूपे** इत्यादिना । **स्थिते**—स्थितत्वर्हे । जगद्ब्रह्मणोः स्वभावासङ्कर[1] ज्ञापनायाह—**एकदेशस्थितस्य, विस्तारिणी** इति पदाभ्याम् । **शक्तिः**—अयुतधर्मः । अनेन [2]**रूपत्वं** विवृतम् । **सर्वगा**—सर्वशरीरगा । धर्मद्वारा सर्वव्यापनार्हा इति वा । चिदचितोः [3]मानान्तरानवगतपरमात्मनियाम्यत्वधार्यत्वनित्यत्वविधानेन तत्पारमार्थ्यनिश्चायकेन भ्रमविषयत्वासंभवं दर्शयन् **प्रधानं च** इत्यादिसार्धश्लोकत्रयमुदाहरति । परमात्मनियाम्यत्वादिवचनेन पूर्वोक्तं रूपत्वं चोपपादितम् । नियाम्यत्वमाह—**प्रधानं च** इति । **आत्मभूतया**—व्यापिन्या । **शक्तिः**—नियमनशक्तिः । **संश्रयधर्मिणौ**—पराश्रयत्वस्वभावौ । **तयोः** इति—बन्धमोक्षहेतुत्वम् । असङ्कीर्णधारणे दृष्टान्तमाह—**यथा** इति । **असक्तम्**—स्वेन मिथश्चासङ्कीर्णम् । **प्रधान** इत्यादि—द्वितीयाबहुवचनम्; षष्ठ्येकवचनं वा । अबाध्यत्वमाह—**तदेतत्** इति । एषामर्थं संगृह्णाति—**इत्यादिना** इति । **इत्यादिना** इति आदिशब्देन परोदाहृताः श्लोकाः विवक्षिताः ॥

स्वोदाहृतान् परोदाहृतांश्च श्लोकान् समाहृत्य पर्यालोचनायामयमर्थोऽवगम्यत इत्याह—**इत्यादिना** इत्यारभ्य [4]**प्रतीयते** इत्यन्तेन । "स सर्वं"

---

1. ज्ञापनायाह — तत्परमिति.......पदाभ्यामसङ्कीर्णस्वभावत्वमुक्तम्-ग.
2. रूपवत्त्वं-क. 3. मानान्तरावगत-ग.
4. मूले सर्वत्र 'ज्ञायते' इत्येव पाठः ।

इत्याद्यर्थमाह— **निरस्त** इति । “ संभर्ता ” इत्याद्यर्थमाह— **जगत्** इति । आदिशब्दादध्यक्षत्वादिः । “ द्वे रूपे ” इत्याद्यर्थमाह— **कृत्स्नस्य** इति । “ अविद्या कर्मसंज्ञाऽन्या ” इत्याद्यर्थमाह — **क्षेत्रज्ञ** इति । पारमार्थिकं विभूतित्वम् ; विहितत्वान्न [1] निषेध्यमिति भावः ॥

**“ प्रत्यस्तमितभेदम् ” इत्यत्र देवमनुष्यादिप्रकृतिपरिणाम .... .... विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम् । अतोऽत्र न भेदापलापः प्रतीयते ॥** ( ६१–६३ )

अथ “ प्रत्यस्तमित ” इत्यादेरर्थमाह — **प्रत्यस्तमित** इति । “ प्रकृतेस्ते ” “ शरीराकृतिभेदास्तु ” इत्यनयोरैकार्थ्यं दर्शितम्— **देव** इति । भेदं विशिंषन् “ वचसामगोचरम् ” इत्यस्यार्थमाह — **तद्भेद** इति । केन रूपेण सत्ता इत्यपेक्षायां **ज्ञान**शब्दः । **एक**शब्देन विकारव्युदासः । **ज्ञान**शब्दः [2] तद्गुणकवाची । स्वरूपाजडत्वमुक्तम् — “आत्मसंवेद्यम् ” इति । कल्पनाविकाराभावात् प्रक्रान्तयोगचित्तागोचरत्वम् । [3] जीवविषयत्वं कथम् ? न चात्र योगयुक्प्रसङ्ग इत्यभिप्रयन्नाह — **कथम्** इति । नायं मुक्तकग्रन्थ इत्यभिप्रयन् परिहरति — **तदुच्यते** इत्यादिना । “ क्लेशानां च क्षयकरम् ”, “ प्राणायामेन पवने ” इत्यनयोरर्थमाह — **संसार** इति । **विष्णोः** इति — विष्णुशक्तिरिति षष्ठीसमासः । अन्यथा “ ततः स वासुदेवेति ,” “ तद्ब्रह्म ,” “ परमात्मा च ,” “ विष्णुनामा ,” “ परब्रह्मस्वरूपस्य विष्णोः ,” “ परमब्रह्मभूतस्य वासुदेवस्य ,” “ तच्च विष्णोः परं रूपम ” इत्यादिविरोधः । “ विष्णुस्तदासीत ,” “ एको ह

---

1. मिथ्या-**ग**.

2. तद्गुणवाची-**ग**.

3. ‘ तद्गतभेदः रूपवर्णादिः ’ इति **ग** पाठे अधिकः ।

वै" इत्यादिश्रुतिविरोधः । विष्णोः विष्णुविग्रहाश्रयत्वविरोधश्च इति भावः । "द्वे रूपे ब्रह्मणस्तस्य," "अविद्या कर्मसंज्ञान्या," "यया क्षेत्रज्ञ" इत्याद्यर्थमाह — **रूपद्वयम्** इत्यादिना । **ध्येयतया** — ध्यातुं शक्यतया इत्यर्थः । "योगिध्येयम्" इत्यत्राप्येवमेव । **स्वतः** इति — औपाधिकाशुद्धिनिरासस्य [1] परसापेक्षताऽभिप्रेता । विशेषणद्वयेनाश्रयत्वशुभत्वे भग्ने । "समस्ताः" इत्याद्यर्थमाह — **पर** इति । **असाधारण्यम्** — चेतनान्तराभिमानाभावात् । **आदित्य** इति मानसूचनम् । उक्तार्थेषु किमर्थोऽयं श्लोक इत्यत्राह — **अत्र** इति । [2] तर्हि अस्य शुभाश्रयतानर्हत्वं, परस्य तदर्हत्वं च कुतो ज्ञायते इत्यत्राह — **तथा हि** इति । "अन्ये तु" इत्यादिना स्वतः शुद्ध्यभावश्च सिद्धः । [3] मुक्तानामप्यध्येयत्वं विशदयितुमाह — **तथा** इति । **स्वस्वरूपापन्नाः** — मुक्ताः । परोक्तार्थपरत्वाभावं निगमयति — **अतः** इति ॥

**"ज्ञानस्वरूपम्" इत्यत्रापि ज्ञानव्यतिरिक्तस्य अर्थजातस्य ... ... ... वाक्यार्थस्याल्पभागश्रवणात् दुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेव ॥**　　(पृ. ६३-६४)

"ज्ञानस्वरूपम्" इति श्लोकस्य पराभिमतार्थानानुगुण्यं दर्शयति— **ज्ञान** इति । कुत इत्यत्राह— **ज्ञानस्वरूपस्य** इति । तदेव दृष्टान्तेनोपपादयति —**न हि** इति । दृष्टान्तात् वैषम्यं शङ्कते—**जगत्** इति । कृत्स्नसामानाधिकरण्यतदभावाभ्यां भेदः । तथा सति ज्ञानार्थाकारयोर्विरोधात् अन्यतरमिथ्यात्वमित्यर्थः । परिहरति —**तत्** इति । कुत इत्यत्राह—**अस्मिन्** इति । उभयलिङ्गकतया परस्य भ्रमो विभूतित्वविधानाज्जगतो मृषात्वं चायुक्ते इत्यर्थः ।

1. परापेक्षता-**ग.**
2. तर्ह्यशुभाश्रयानर्हत्वं परस्य तदनर्हत्वं-**ग.**
3. मुक्तावपि-**क.**

तर्हि कथं विरुद्धयोः सामानाधिकरण्यमित्यत्राह —**सामानाधिकरण्येन** इति। **बाधासहम्** इति । अन्यथा तल्लक्षणानुपपत्तेरिति भावः । **अविरुद्धम्** — सद्वारकत्वादिति भावः । **अनन्तरम्** — न त्वधिकरणान्तरे । अतदर्थत्वं निगमयति—**अतः** इति ॥

अथ श्लोकं व्याख्यातुमुपक्रमते — **तथा हि** इति । द्वितीयान्तपद-विशेष्यं, क्रियान्वयं विशिष्टपरप्रकरणस्थतां च श्लोकस्य ज्ञापयितुं नमस्या-ग्रन्थेषु व्याख्येयेषु सा प्रथमाध्याये किं न कृतेति शङ्कायां, पृष्टेऽर्थे संक्षेपतः प्रत्युक्ते, विस्तरविवक्षया द्वितीये सा कृतेति तत्सङ्गतिं शास्त्रोपक्रम-भूतैतच्छ्लोकोपक्रमप्रश्नोत्तरवरलाभववसां सविशेषपरत्वं 'यन्मय 'शब्देन सामानाधिकरण्यस्य आत्मशरीरतानिबन्धनत्वं च ज्ञापयितुं प्रश्नश्लोका [1] व्याख्येयाः । तत्र श्रुतवेदान्तस्य न ज्ञातव्यम्, इतरस्य तु विशेषप्रश्नायोग इति शङ्कायां पूर्वस्यैव प्रश्न इति वदन् उपबृंहणविधिं दर्शयति— **तथा हि** इति । **वेद**शब्दो वेदान्तपरः, [2] मानवादिभिः पूर्वभागस्योपबृंहितत्वात् । उपबृंहणशब्दार्थमाह— **उपबृंहणम्** इति । षष्ठयन्तपदद्वयेन परोक्षापरोक्ष-ज्ञानद्वयोक्तिः । बहुवचनं कापिलादिभ्यः प्राबल्यार्थम् । **व्यक्तीकरणम्** — अनधीतशाखार्थैः सहाधीतार्थनिष्कर्षः । उत्तरार्धं विवृण्वन् कर्तव्यतामुप-पादयति— **सकल** इति ॥

**तत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतः ... ... परमात्मनः स्वभावमाह । तस्मान्नात्र निर्विशेषवस्तु-प्रतीतिः ॥** (६४-६५)

प्रबन्धान्तरेभ्योऽस्य वैषम्यं वदन् प्रश्नमवतारयति— **तत्र** इति । **भगवतः** इति— स्वतो ज्ञानवत्त्वम् । तदतिशयो वरलाभात् । **पारमार्थ्य-**

1. व्याख्याताः-क. 2. मन्वादिभिः-क.

**ज्ञानवतः** — प्राशस्त्ये मतुप् । तच्च रजःकार्यनिवृत्तिरूपम् । पारमार्थ्यधी-स्तमोनिवृत्तिफलम् । रजस्तमसी हि धर्मधर्मिविपर्यासधीहेतू । अत्र " देवता-पारमार्थ्यं च यथावत् " इत्यस्यार्थोऽभिप्रेत. । [1] आराध्यवस्तुवाचि ' देवता ' शब्दात् ' यथावत् ' शब्दाच्च सविशेषत्वसिद्धिरिति भावः । **सोऽहम्** इत्यादि । [2] शाखान्तरेषु कल्पभेदेन [3] सृष्टिस्थितिहेतुलयस्थान [4] कर्तृतत्प्रकार-भेदोक्तिशङ्कया प्रश्नः ; प्रकारश्च भ्रमाधिष्ठानतादि । **यन्मयं च यत्र च** इति **च**शब्दाभ्यां बाह्यस्थितिसंहारयोः कर्ता समुच्चितः । श्लोकानामर्थं संक्षेपेणाह— **अत्र** इति । **तद्विभूति** इत्यादिना **आदि** शब्दोपात्तश्लोकानामर्थ उक्तः । फलप्रश्नस्तु फलितः । " धर्मांश्च " इति ' च ' शब्दसूचितो वा, प्रतिवचनप्रकारादिति भावः । ततः किं प्रस्तुतस्येत्यत्राह— **ब्रह्म** इति । **निमित्तोपादानयोः** इति । [5] श्रुत्यनुरोधादिति भावः । **किमात्मकम्** इति । स्थित्यर्थमिति भावः । अर्थान्तरपरत्वशङ्कायामाह— **इदं च** इति । **इदम्** — सामानाधिकरण्यप्रतिपन्नम् । **आत्मतया** इति– शरीरप्रतिसंबन्धित्वम् । तद्विवरणम् **अन्तर्यामि** शब्दः । व्याप्तिनियमनाभ्यां नृपनभोव्यावृत्तिः । कथं न वस्त्वैक्यकृतमित्यत्राह — **यन्मयम्** इति । ' मृन्मयम् ' इत्यादिवत् मयडत्र विकारार्थः स्यादित्याशङ्क्याह — **यन्मयम् इति मयट्** इति । कुत इत्यत्राह — **पृथक्** इति । मयटोऽर्थान्तरसंभवान्न [6] गोबलीवर्दनयात् **यतः** शब्दसङ्कोचः इति भावः । स्वार्थत्वमाशङ्क्याह — **नापि** इति । चिन्मात्रव्यतिरिक्तमृषात्ववाद्यभिमतस्वार्थत्वे दूषणमाह — **जगच्च** इति ।

---

1. आराध्यवाचि–**अ.**    2. प्रश्नप्रकारश्च शाखान्तरेषु–**ग.**

3. सृष्टिस्थितिलयस्थान–**ग.**

4. कर्तृतत्प्रकारभेदोक्तिशङ्कायाम् । न भ्रमाधिष्ठानशङ्कायां । यन्मयं **च-ग.**

5. श्रुतिच्छायानुरोधादिति भावः–**ग.**

6. गोबलीवर्दनयात् संकोचः–**ग.**

स्वरूपोपस्थापने [1] तदितराकारत्वाबे च विवक्षिते सति आकारद्वयोपस्थापक-सामानाधिकरण्येन [2] उत्तरं न घटते इत्यर्थः । तर्हि कथं तद्वाच्यमित्यत्राह — **तदा हि** इति । [3] 'जगत् यत् भवति, तत् किम्' इति पृष्टे, 'सत्यं वा अनृतं वा' इति पृष्टं स्यात् । तदा 'विष्णुरेव, नान्यत्' इति वाच्यमित्यर्थः । **विष्णु**शब्दः स्वरूपोपस्थापकः; **एव**कारस्तदितराकार-निषेधपरः । बाधायां सामानाधिकरण्यमनुपपन्नमिति भावः । परिशेषादपेक्षित-त्वाच्च प्राचुर्यार्थत्वमाह— **अतः** इति । अनुशासनं दर्शितं— **तत्प्रकृत** इति । तच्चात्र संभवतीत्याह— **कृत्स्नं च** इति । तत्फलितार्थमाह— **तस्मात्** इति । अनेवमर्थत्वेऽनिष्टमाह— **अन्यथा** इति । [4] कथं प्रश्नप्रति-वचने स्यातामित्यत्राह— **तथा हि सति** इति । स्वरूपपरिणामपक्षेऽनिष्ट-माह— **जगत्** इति । उभयलिङ्गत्वबाधः तद्विरोध्याकारत्वं च प्रसजेदित्यर्थः । यद्वा **निखिल** [5] इत्यादिपदद्वयेन चिदचिद्गतदोषसंबन्ध उक्तः । मयड्वैयर्थ्यं तु स्पष्टतया नोक्तम्, यत [6] इत्युपादानस्य पृष्टत्वात् । त्वन्मते मुख्यत्वं नेत्यत्राह— **आत्मा** इति । आसत्त्या वर्तमानत्वोक्तिः ॥

ततः किं प्रकृतव्याख्येयश्लोकस्येत्यत्राह— **अतः** इति । **अतः** — प्रश्नादिभिः शास्त्रस्य सविशेषार्थत्वात् शरीरशरीरिभावेन [7] सामानाधिकरण्यस्य मुख्यत्वाच्च इत्यर्थः । **विष्णु**शब्दस्यावयवशक्त्या [8] प्रकारप्रश्नोत्तरत्वम्, रूढ्या कारणप्रश्नोत्तरत्वम् । **सकाश** शब्दः पञ्चम्यनतिरिक्तार्थः; ससङ्कल्पा-दिति वा । **स्थितम्**— लीनम्, "यत्र लीनम्" इत्यस्योत्तरत्वात् । **च**

---

1. तदितरबाधे-अ.
2. उक्तं न घटते-क.
3. जगत् भवति-ग.
4. तदा कथं-ग.
5. इत्यादिवचनद्वयेन-ग.
6. इत्युभयोः-अ
7. सामानाधिकरण्यमुख्यत्वाच्च अ.
8. प्रकारप्रश्नोतरं ...... कारणप्रश्नोतरम्-अ.

शब्दद्वयसूचितप्रश्नद्वयोत्तरमाह — **स्थिति** इति । परस्य हि दोषानन्वय इत्यत्राह— **परब्रह्मभूतम्** इति । दोषानर्हत्वाय **भगवत्** शब्दः । [1] **अविकाराय** इति — अचिद्बद्धमुक्तनित्या [2] व्यावृत्ताः । **रूपैकरूप्यम्**— [3] उभयलिङ्गत्वोपास्यत्वप्राप्यत्वैः । [4] सर्वजिष्णवे इति व्याप्तिदोषास्पर्शः । [5] **हिरण्यगर्भ** इति— **हिरण्यगर्भशङ्कर**शब्दौ जीवद्वारा भगवत्पर्यन्तौ । ताराय— त्रिषु **अयमेव** मुक्तिद इति भावः । [6] 'एक' इत्यादिश्लोकार्थमाह — **प्रधान** इति । [7] चतुर्थार्थमाह— **काल** इति । [8] अण्डान्तर्बहिःसृष्ट्यादिपरत्वे प्राक् पश्चाच्चोक्तेः, अपेक्षितविधेरनपेक्षितविधिदौर्बल्यात्, विशिष्टपरप्रकरणात् विस्तरानुरोधात, विशेषणौचित्यात्, परिशेषात्, तत्राप्यचित्परग्रन्थसाहचर्याच्च कालविशिष्टपर इति भावः । "ब्रह्मा दक्षादयः कालः" इत्यादिना हेतुत्वावगमः । अवच्छेद्यतयाऽवच्छेदकतया च जगत्प्रचुरः । [9] पञ्चमार्थमाह— **क्षेत्रज्ञसमष्टि** इति । समष्टिजीवस्वरूपेण अचिदाधारः, "तद्यथा रथस्यारेषु

---

1. अत्र सप्त श्लोकाः अनुसन्धीयन्ते—
अविकाराय शुद्धाय नित्याय परमात्मने ।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥ (1)

2. व्यावर्त्याः-अ. 3. उभयलिङ्गत्वमुपास्यत्व-ग.

4. सर्वजिष्णुत्वं च व्याप्यदोषास्पर्शः-ग.

5. नमो हिरण्यगर्भाय हरये शङ्कराय च ।
वासुदेवाय ताराय सर्गस्थित्यन्तकर्मणे ॥ (2)

6. एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥ (3)

7. सर्गस्थितिविनाशानां जगतो यो जगन्मयः ।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥ (4)

8. अण्डात् बहिः सृष्ट्यादिव्यापारवत्त्वस्य प्राक्-ग.

9. आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ।
प्रणम्य सर्वभूतस्थमनन्तं पुरुषोत्तमम् ॥ (5)

नेमिः", "यथेदं धार्यते" इत्यादेः । प्रकृतेश्चाणीयान् । 'भूत'शब्दः समष्टिजीवपरः । [1] षष्ठार्थमाह — व्यष्टि इति । [2] उक्तार्थेषु प्रकृतश्लोकः किंपर इत्यत्राह — तत्र इति । विशेषणान्वयः सद्वारः [3] 'महोरस्कः' इत्यादिवत् ॥

**यदि निर्विशेषज्ञानरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं ... ... अग्न्यादेरौष्ण्यादिशक्तियोगवत् सर्वशक्तियोगो न विरुध्यते इति परिहारः ॥** (पृ. ६५–६६)

निर्विशेषपरत्वे बाधमाह–**यदि** इति । अयमपि प्रश्नप्रतिवचनविशेषोऽनुपपन्न इत्यर्थः । कथं स्यातामित्यत्राह— **तथा हि** इति । कीदृशौ तर्हि चोद्यपरिहारौ अत्र प्रतिपन्नावित्यत्राह — **उत्पत्त्यादि** इति । **अमलात्मत्व** विरोध्याकारोऽपि 'कर्मवश्य'शब्दगर्भितः । **अमलात्म**शब्दार्थ उक्तः — **कर्मसंबन्धानर्हस्य** इति । सर्वशक्तियोगेन परिहारो न युक्तस्तवेति भावः ॥

**"परमार्थस्त्वमेवैकः" इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति ... ... ... पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ॥** (पृ. ६६–६७)

अथ [4] चतुःश्लोकीं व्याचष्टे— **परमार्थ** इत्यादिना । सर्वशारीरकः

---

1. ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ (6)
विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे महाप्रभुम् ।
प्रणम्य जगतामीशमजमक्षरमव्ययम् ॥ (7)

2. उत्तरार्धेषु–**ग.** 3. महोदारः–**ग.**

4 परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ! ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥ (1)

**त्वमेव परमार्थः** । अत्वदात्मकं मिथ्या इत्यर्थः । उत्तरार्धं तदुपपादक-मित्याह–**तदेव** इति । तत्फलितमर्थमाह – **येन** इति । **येन** – यतः । **त्वमेवैकः** इति **एक** शब्दः प्रधानवाची, "किमेकं दैवतम्" इतिवत् । अत एव हि "एकादाकिनिचासहाये" इत्यत्र 'असहाय' शब्देन प्रधानो व्यवच्छिद्यते । उत्तरार्धैकदेशो विशेषस्तदुपपादक इत्याह — **अत इदम्** इति । **अतः** — जगद्विशिष्टस्य पारमार्थ्यात् । दूषणान्तरद्वयमाह— **जगतः** इति । 'त्वं' शब्दो हि स्वाभिमुखाहमर्थवाची । अतो **लक्षणा** ॥

[1] द्वितीयश्लोकार्थमाह— **यतः** इति । स्वनिष्ठप्रतीतेः अन्यथा-सिद्धत्वात् भगवदात्मकत्वोक्तिः न यूपादित्यैक्यवाक्यवत् इति भावः । **मूर्तम्**– मूर्तिः ॥

[2] तृतीयं व्याचष्टे —**न केवलम्** इति । पूर्वोक्तान्यथासिद्धौ अपरोक्ष–देहात्मधियो दृष्टान्तत्वमभिप्रेतम् । यद्वा [3] स्वदेहादन्यमजानतः परमात्मात्म-कत्वध्यभावः किमुतेति भावः ॥

[4] चतुर्थं व्याचष्टे — **ये पुनः** इति । "विज्ञानं चाविज्ञानं च" इतिवत् **ज्ञान**शब्दो जीवपरः । पूर्वग्रन्थद्वयस्थयोः "अयोगिनः" "अबुद्धयः" इति पदयोः विपरीतार्थपरं "शुद्धचेतसः" "ज्ञानविदः" इति पदद्वयमिति भावः । निर्विशेषपरत्वपक्षे [5] प्रथमोक्तं दूषणं साधारणयन्

---

1. यदेतत् दृश्यते मूर्तम् एतज्ज्ञानात्मनस्तव ।
 भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ (2)
2. ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
 अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ (3)
3. स्वदेहान्यमजानतः परमात्मकत्वभावः किमुत–**ग**.
4. ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
 ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥ (4)
5. प्रथमोक्तदूषणं साधारणम्, दूषणान्तरं च–**क**.

दूषणान्तरं चाह — **अन्यथा** इति । प्रपञ्चस्य धर्मिग्राहकमानविरोधः, चित्स्वरूपतिरोधानानुपपत्त्यादितर्कविरोधः, परस्योभयलिङ्गत्वबाधश्चार्थविरोधः, प्रकरणविरोधः —[1] स्तुतिपरत्वात् स्तोतॄणामद्वैतज्ञाने स्तुत्यनुपपत्तेरिति भावः— उपक्रमोपसंहारादिवचनविरोधस्तात्पर्यविरोधः ॥

**[2]"तस्यात्मपरदेहेषु सतोऽप्येकमयम्" इत्यत्र सर्वेषु आत्मसु ... ... "आत्मपरदेहेषु सतोऽपि" इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् ॥** (पृ. ६७)

अथ आदिभरतचतुःश्लोकीं व्यवहितां व्याचष्टे— **तस्य** इत्यादिना । **एकमयम्** — मयट् स्वार्थिकः । 'एको व्रीहिः' [3]इतिवत् **एक** शब्दः । अविशेषेण द्वैतनिषेधे कथं देवादिनिषेधपरत्वमित्यत्राह— **पिण्ड** इति । अविशेषेण निषेधे सति कथं न पिण्डभेदो निषिद्धः ? तस्य प्रामाणिकत्वात् चेत्, तुल्यमिति भावः । एकवचनादैक्यसिद्धिः तज्जातौ चेत्, देहेऽपि तथा स्यादित्यत्राह—**देवमनुष्यादि** इति । अवान्तरजातिभेदभावाभावाभ्यां बहुवचनैकवचने इत्यर्थः । साम्ये मानमाह — **यथा** इति । अन्यथा स्वव्याहतिमाह — **तस्य** इति ॥

**[4]"यद्यन्योऽस्ति परः कोऽपि" इत्यत्रापि नात्मैक्यं प्रतीयते ... ... न चैवमस्ति, सर्वेषां ज्ञानैकाकारत्वेन समानत्वादेवेति ॥** (पृ. ६७)

---

1. स्तुतिपरत्वात् । उपक्रमोपसंहार–अ.
2. तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
   विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥
3. इतिवत् । एकशब्देनाविशेषेण–ग.
4. यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
   तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥

स्वपरविभाग एव श्लोकान्तरे निषिध्यत इत्याशंक्य तत् व्याचष्टे — **यदि** इति । कस्तर्हि अर्थ इत्यत्राह — **तत्र** इति । पदार्थे कथिते वाक्यार्थमाह — **एतदुक्तम्** इति । प्रत्यक्त्वपराक्त्वे [1] चापेक्षिके सर्वात्मसाधारणे । अतो न ते व्यावर्तके इति हृदयम् । [2] एतच्छ्लोकार्थविपर्ययपर्यवसानपरानन्तरग्रन्थस्य "यदा समस्त" इत्यादेरर्थमाह—**न चैवम्** इति ॥

**[3] "वेणुरन्ध्रविभेदेन" इत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतम् ... ... तथा वायवीनामंशानामपि स्वरूपभेदोऽवर्जनीयः ॥**
(पृ. ६७–६८)

[4] उक्तनिर्वाहागोचरदृष्टान्तग्रन्थं [5] व्याचष्टे– **वेणु** इति । **नात्मैक्यम्** [6] इत्यनेन फलितं तात्पर्यं दर्शितम् । स्वत एकाकाराणामवान्तरभेदस्यौपाधिकत्वं दृष्टान्ते दर्शयति— **दृष्टान्ते च** इति । **तेषाम्** इत्यादिना श्लोकस्य वाक्यार्थमाह । दार्ष्टान्तिके षड्जादिसंज्ञाव्युदासाय **देवादि** शब्दः । अंशभेदं तर्केणोपपादयति— **तैजस** इति ॥

**"सोऽहं स च त्वम्" इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं ... ... तच्च "पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्रक्रमात् ॥** (पृ. ६८)

[7] "**सोऽहम्**" इत्यादि । **पूर्वोक्तम्** इति । "तदच्युतो नास्ति

1. चानपेक्षिते–**ग**. 2. एतच्छ्लोकार्थविपर्यवसानपर–**अ**,
3. वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोः तथाऽसौ परमात्मनः ॥
4. उक्तिनिर्वाह–**अ**. 5. दृष्टान्तान्तरग्रन्थं–**ग**.
6. इत्यन्तेन फलिततात्पर्यमिदम्–**क**.
7. सोऽहं स च त्वं स च सर्वमेतत् आत्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यः तत्याज भेदं परमार्थदृष्टिः ॥

परं ततोऽन्यत् ” इति पूर्वार्धोक्तं परमात्मात्मकत्वं सर्वप्रकरणसाधारणम्। इदं तु प्रकरणासाधारणार्थोपसंहारपरमित्यर्थः। विपक्षे [1] बाधकमाह — **अन्यथा** इति। **अहम्**— आदिशब्दा उपलक्षणपरा इत्यत्राह- **अहं त्वम्** इति। **अनेन उपलक्ष्येण** इत्यन्वयः। यद्वा **अनेन** निर्देशेन फलितात् सामानाधिकरण्यादित्यर्थः। **आत्मस्वरूप** समानाधिकरण[2]सर्व शब्दसजातीयत्वात् **अहंत्वमोश्च** 'आत्मस्वरूप 'शब्दसामानाधिकरण्यं फलितम्। तच्च त्वन्मते न युक्तम्। न हि 'शाखाचन्द्र' शब्दयोः सामानाधिकरण्यमित्यर्थः। **तत्याज** इत्यस्यार्थमाह— **सोऽपि** इति। जीवस्वरूपविषयत्वं तत्प्राप्याकारैक्यपरत्वं च कुतो निर्णीयते इति पृच्छति — **कुतः** इति। उत्तरमाह—**देह** इति। तच्च कुत इत्यत्राह — **तच्च** इति। नित्यानामात्मनां बहुत्वश्रुतेः, बद्धमुक्तशिष्याचार्यसुखादिव्यवस्थाभिः, [3]देवत्वादिनिषेधकण्ठोक्त्या, **मुक्तौ** साम्यवचनात्, [4]उदाहृतवचनसामञ्जस्यात्, 'एको व्रीहिः' इत्यादिप्रयोगाच्च जीवप्रकरणं प्रकाराद्वैतपरम्। सुखादिव्यवस्थानां न सुखादिस्वरूपभेदः। नापि [5] आश्रयभेदः, देहविगमाद्यभावेऽपि [6] तदेकाश्रयत्वप्रतिसन्धानात्। ब्रह्मप्रकरणेषु तु सामानाधिकरण्येनैक्यप्रतिपादनात् तस्य प्रकारभेदेनैकप्रकारिनिष्ठत्वात् “एकः सन् बहुधा” इति प्रकार्येकत्वकण्ठोक्तेः ऐक्यविधिशेषस्य भेदनिषेधस्य प्रकारिभेदविषयत्वात् गोबलीवर्दनयाच्च प्रकार्यद्वैतमेवेति [7] भावः॥

**“विभेदजनके ज्ञाने” इति च नात्मस्वरूपैक्यपरम्।....... “प्राज्ञेनाऽऽत्मनाऽन्वारूढः” इत्यादिभिः उभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात्॥** (पृ. ६८–६९)

---

1. बाधमाह-अ. 2. सर्वसजातीयत्वात्–अ. 3. देवभेदनिषेध–अ.
4. उदाहृतवचःसामञ्जस्यात्–ग. 5. आगमभेदः–अ.
6. तदेकाश्रयत्वप्रतिसन्धानाभावः–अ. 7. विभागः–अ.

**विभेद** इत्यादि । अथ शास्त्रोपसंहारग्रन्थं व्याचिख्यासुः किमयम् आत्मस्वरूपैक्यपरः उत जीवैक्यपरः ? इति विकल्पे 'च' शब्दाभावात् सामानाधिकरण्यशङ्कयोदितं प्रथमं शिरः प्रतिवक्ति — **आत्म** इति । **उक्तरीत्या** — [1] श्रुतिश्रुत्यर्थापत्त्यादिभिः । द्वितीयं दूषयति — **जीव** इति । **देहात्मनोरिव** इति । नियन्तृत्वनियाम्यत्वादिविरुद्धधर्मैरिति भावः । तत्र मानमाह—**तथा** इति । **चो** ह्यर्थः, पञ्चमीस्थाने ॥

ननु "द्वा सुपर्णा" इति मन्त्रोऽन्तःकरणं जीवं च वदति । "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति सत्त्वम्; "अनश्नन्नन्योऽभिचाकशीति" इति अनश्नन्नन्योऽभिपश्यति ज्ञः । "तावेतौ सत्त्वक्षेत्रज्ञौ" इति पैङ्गी-श्रुत्या अस्य मन्त्रस्य तत्परत्वेन व्याख्यातत्वात् । न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरविषयौ, तद्विषयत्वाप्रसिद्धेः । तत्रैव "तदेतत् सत्त्वं येन स्वप्नं पश्यति; अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः; तावेतौ सत्त्वक्षेत्रज्ञौ" इति व्याख्यातत्वाच्च । नैवम् — "समाने वृक्षे" इत्यनन्तरमन्त्रेण "द्वा सुपर्णा" इति मन्त्रस्यैकार्थतया 'समानवृक्ष' शब्देन प्रत्यभिज्ञातत्वात् । स हि मन्त्रो जीवपरविषयः । अन्यथा "पुरुषः शोचति मुह्यमानः, पश्यतीशं वीतशोकः" इति पदविरोधात् । इहापि 'अत्ति' 'अनश्नन्' इत्युक्तम् । न हि चक्षुरादेः करणस्य द्रष्टृत्वादिवदन्तःकरणस्य [2] अत्तृत्वं युक्तम् । पैङ्गीश्रुतौ तु 'सत्त्व'शब्दो जीवपरः, "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति जन्तुवाचित्वोक्तेः । जन्तुः व्यष्टिजीवः, "प्राणी तु चेतनो जन्मी [3] जन्तुजन्यशरीरिणः" इत्युक्तेः । 'क्षेत्रज्ञ' शब्दः परवाची, अवयवार्थयोगात् — "क्षेत्रज्ञोऽक्षर एव च" इति श्रीमन्नामसहस्र-प्रयोगाच्च । "येन स्वप्नं पश्यति"—'येन' इति इत्थंभूते तृतीया । 'परः

1. श्रुत्यर्थापत्त्यादिभिः-ग. श्रुतिश्रुत्यर्थानुपपत्त्यादिभिः—अ.

2. आत्मत्वं-क. 3. जन्तुजन्यु-ग.

स्वप्नं पश्यति ' इत्यर्थः । [1] भूम्यात्मनः परस्य काठिन्यवत् जीवविशिष्टस्य सद्वारकं स्वप्नद्रष्टृत्वम् । " शारीरः "— जगच्छरीरः परमात्मैव शारीरः, " तस्यैष एव शारीर आत्मा " इति श्रुतेः । अतो " द्वा सुपर्णा " इति मन्त्रो जीवपरविषयः । **पिबन्तौ** इति परमात्मनः प्रयोजकतया कर्तृत्वम् । **छायातपौ** — अज्ञसर्वज्ञौ । **ब्रह्म** इत्यादि— उभयभागनिष्ठा इति भावः । " ये च वेदविदः " इत्यादिवत् । प्रयोजककर्तृत्ववैशद्यायाह — **अन्तः** इति । न परं श्रुतिविरोधादतदर्थत्वं ; [2] एतत्प्रबन्धपौर्वापर्यविरोधाच्चेत्याह — **अस्मिन्** इति । ब्रह्मण उभयलिङ्गत्वाय उपात्तं " **स सर्वे** " इत्यादि । जीवे हेयान्वयं दर्शयति — " **अविद्या** " इति । **इति भेदव्यपदेशात्** इति पूर्वेणान्वयः । विषयवाक्यानुपादानान्न [3] सूत्रत्वशङ्का, हेतुत्वनिर्देशस्यापेक्षितत्वाच्च । **निर्णयात्** इति हि वक्ष्यते । " **उभय** " इत्यादिसूत्रद्वयविषयवाक्यम् — " **य आत्मनि** " इति । " **अधिकं तु** " इत्यस्य विषयः — **प्राज्ञेन** इति । एषु सूत्रेषु एभिः वाक्यैरेव **निर्णयात्** इत्यर्थः ॥

**नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः ... ... ... " तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति " इत्याद्याः ॥** ( पृ. ६९–७० )

परोक्तान्यथासिद्धिमाशंक्याह — **नापि** इति । न हि [4] कारागृहगतस्ततो निर्गतः स्वनिग्राहकानुग्राहकात् नृपतेरनन्य इत्यर्थः । असंभवविषयमेतत्प्रबन्धस्थं ग्रन्थमाह — **यथा** इति । " ब्रह्म वेद " इत्यादिभिरैक्यमाशंक्याह — **मुक्तस्य तु** इति । सोपबृंहणश्रुत्यन्तराविरोधं

---

1. भूतात्मनः-**ग.**
2. एतत्प्रचण्डपौर्वापर्य—प्रबलपौर्वापर्य-**ग.**
3. सूत्रत्वम् । शङ्काहेतुत्व-**ग.**
4. कारागतस्ततो निर्गतः स्वनिग्राहकानुग्राहकनृपतेः-**ग.**

दर्शयितुमुपात्तम् **इदं ज्ञानम्** इति । मुक्तविषयत्वं स्फुटयति — **सर्गेऽपि** इति । **इहापि** इति– योगप्रकरणोपक्रमे । **आकर्षकः** — वह्निः, दोषाकर्षणात् । "यथाऽग्निसङ्गात् कनकमपदोषं प्रजायते" इति हि शौनकः । अत्र च "यथाऽग्निरुद्धतशिखः"[1] इति वक्ष्यते । अत्र भेदसिद्धिं दर्शयति — **न हि** इति । इदमर्थान्तरेष्वपि तुल्यम् । [2]सौत्रतामाह — **वक्ष्यति च** इति । वृत्तौ **ज्योतिः** — परमात्मा । द्रमिडभाष्ये **अशरीरः**– मुक्तः ; **सिद्धिः** — अनुभवः । **श्रुतयश्च** इति । **तेषाम्** इति मुक्तबहुत्वम् । **आप्नोति** इति — जीवपरयोर्भेदः । साम्यं [3]केनाकारेणेत्यत्राह– **रसः** इति । कर्मकृतनामरूपहानिपूर्वकसाम्यं दर्शयति — **यथा** इति, **तथा** इति च ॥

**परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम् ; फलं चैकरूपमेव ...... प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव, यथा 'सेयं गौः' इति ॥**　　(७०-७१)

उक्तवाक्यानि सगुणविषयाणि इत्यत्राह— **पर** इति । **सर्वासु** — त्वया निर्गुणविषयतयोक्तसद्विद्यादिष्विति भावः । उपासनप्राप्त्योः सगुणविषयतैकरूप्यज्ञापनाय सूत्रद्वयम् । फलवैषम्ये सति हि विकल्पोऽनुपपन्न इति भावः । **वाक्य** इति । गुणयुक्तं प्राप्यम्, तथोपासनादित्यर्थः । विकल्पोऽपि द्रष्टव्यः । **सच्चित्तः** — सद्विद्यानिष्ठः । तर्हि "ब्रह्मैव भवति" इत्यस्य कोऽर्थ इत्यत्राह — **ब्रह्म** इति । [4]तर्हि अमुख्यत्वमित्यत्राह — **प्रकारैक्ये च** इति । "यथर्तुषु ऋतुलिङ्गानि"[5] इत्यादि च द्रष्टव्यम्[6] ॥

---

1. 'कक्षं दहति सानिलः' इति –**ग.** पाठे अधिकः ।
2. सौत्रमाह–**ग.**　　3. उक्ताकारेण–**अ.**
4. तस्य मुख्यत्वम्–**अ.**　　5. इतिवत् द्रष्टव्यम्–**ग.**
6. न च सगुणविद्यापरत्वात् तच्छ्रुतीनां क्रममुक्तिपरतेति वाच्यम् ।

**अत्रापि "विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव । ……… आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । "अविद्या कर्मसंज्ञाऽन्या" इति ह्यत्रैव उक्तम् ॥** (पृ. ७१-७२)

न परमुपक्रमे, अव्यवहितपूर्वश्लोकेषु च भेदं दर्शयति — **अत्रापि** इति । "**तथैव**" इत्यादेः व्याख्यानं **परब्रह्मवत्** इत्यादि । "कर्मभावनः" इति पाठे कर्मशब्दः कर्मज्ञानभक्तिरूपानुष्ठेयसाधारणः । शुद्धस्वरूपस्यापि [1] प्राप्यान्तर्भावात्, तथा स्वयं च [2] ध्येय इत्यर्थः ॥

[3] अव्यवहितत्वज्ञापनाय अनन्तरग्रन्थं व्याचष्टे — **क्षेत्रज्ञ** इति । **यावत्** इति । न हि मुक्तस्योपायनिवृत्तिर्विधेया इति भावः । [4] साम्यप्रतिपत्त्यर्थमनन्तरश्लोकं व्याचष्टे — **तद्भाव** इति । **ब्रह्मण** इति ।

सर्वविद्यानां सगुणनिष्ठत्वात्, मोक्षभेदतत्क्रमे च प्रमाणाभावाच्च । "आनन्दादयः प्रधानस्य" इत्यत्र सूत्रकारैरेव सर्वविद्यास्वानन्दादिगुणोपसंहारस्य प्रसाधितत्वात् तासां गुणनिष्ठत्वम् । "विकल्पोऽविशिष्टफलत्वात्" इति परविद्यानामविशिष्टफलत्वेन विकल्पस्य प्रसाधितत्वाच्च; न हि मुक्तिभेदे विकल्पोक्त्युपपत्तिः, तथात्वे विद्यानां व्यवस्थैव स्यात्, न विकल्पः । न च सगुणविद्यानामेव विकल्पपरत्वं तत्सूत्रस्येति वाच्यम्, तत्र विशेषाप्रतीतेः । तच्च तत्रैव साधितम् । न च "ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मवेदनेन ब्रह्मभावश्रवणात् ब्रह्मभेदो नाङ्गीकार्य इति अन्यस्यान्यभावत्वं नेत्युक्तत्वात् । अतः सर्ववेदान्तप्रत्ययन्यायेन तच्छ्रुतेरपि ब्रह्मसाम्यापत्तिपरत्वमेव । न च साम्यापत्तिपरत्वे "ब्रह्म भवति" इत्यस्य मुख्यत्वहानिः इति वाच्यम्, एकजातियोगे गोव्यक्त्यन्तरे 'सोऽयं गौः' इत्यादौ प्रकारैक्यप्रयोगस्य मुख्यत्वदर्शनात्; 'सोऽयं देवदत्तः' इत्यादौ देहस्य सततविकारित्वेन व्यक्त्यन्यत्वसिद्धावपि जात्याकारैक्यमुख्यतादर्शनाच्च । 'सोऽयं देवदत्तः' इत्यत्र सामानाधिकरण्यस्य मुख्यत्वं वक्ष्यते । इति —ग. पाठे आधिकः ॥

1. प्राप्त्यन्तर्भावात्—ग. 2. ज्ञेयमित्यर्थः—अ.
3. अव्यवधिज्ञापनाय—अ. 4. साम्यसंप्रतिपत्त्यर्थम्—ग.

"**परमात्मना**" इति प्रकृतब्रह्मपरस्तच्छब्द इति भावः। [1]**पूर्वोक्तार्थ**-विरोध उभयलिङ्गत्वादिस्वभावश्च पूर्वश्लोकोक्त इत्याह — **यत्** इति। तद्वृत्तवशात् यद्वृत्तम् आक्षिप्य व्याचष्टे — **यदैवम्** इति। **भेद**शब्दं पृथक् व्याख्यातुं विविच्य निर्दिशति — **भेदरहित** इति। तत्स्वभावापत्तौ कथं भेदविरह इति शङ्कायां "**भेदश्च**" [2]इत्यादिकं व्याचष्टे — **तदन्वय** इति। तेन फलितमुत्तरश्लोके कण्ठोक्तमर्थमाह — **स तु** इति। अज्ञान-भेदयोः [3]कर्मदेवादिरूपत्वं कथमित्यत्राह—**यथा** इति। एकस्वरूपस्यान्तर-बुद्धिसुखादिभेदः संसारहेतुकर्मरूपवृतिजन्यः, स देवादिभेदे नष्टे नास्ति। कथं कर्मरूपवृत्तिजन्यसुखादिभेदो देवादिभेदे ध्वस्ते न स्यात् इत्यत्राह — **अनावरणो हि सः** इति। **सः**— अपध्वस्तदेवादिभेद आत्मा कर्मरूप-वृतिहीनो हि इत्यर्थः। [4]कर्मजन्यवृतिः इति अस्ति देवादिभेद आवरण इत्यर्थः। "**भेदश्च तस्य**" इत्याद्यंशविवरणमुत्तरश्लोक इत्याह — **एतत्** इति। "देवतिर्यङ्मनुष्याख्यस्तथैव नृप नारकः" इति शौनकग्रन्थो-त्तरार्धम्। [5]वाक्यार्थं योजयति — **आत्मनि** इति। पञ्चमीं स्फुटयति—**परस्मात्** इति। उभयोः षष्ठ्यन्तत्वे 'च'शब्दोऽपेक्षितः। षष्ठी-पञ्चम्यन्तत्वविपर्यये ब्रह्मण उभयलिङ्गत्वमौपाधिकं स्यात्। अतो '**ब्रह्मणः**' इति पञ्चमीति भावः। [6]'अज्ञान'शब्दस्य कर्मपरत्वं न परं "**भेदश्च तस्याज्ञानकृतो भवेत्**", "**बाह्यकर्मवृतिप्रजः**" इति प्रयोगान्नि-रणायि, कण्ठोक्त्या चेत्याह — **अविद्या** इति॥

1. अर्थविरोध उभयलिङ्गत्वादिः स्वभावश्च-अ.
2. इत्यादि वाक्यं-ग.
3. कर्मदेवत्वादि-अ.
4. कर्मजन्यवृतिरित्यर्थे सति स देवादिभेदः-क.
5. अस्य वाक्यार्थं-ग.
6. अज्ञानस्य कर्मरूपत्वं-अ.

**" क्षेत्रज्ञं चापि मां विद्धि " इत्यादिनाऽन्तर्यामिरूपेण...... ...नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्। नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः ॥** (पृ. ७२)

अथ 'क्षेत्रज्ञं च' इत्यादेरर्थमाह — **क्षेत्रज्ञम्** इति। विपक्षे बाधमाह — [1] **अन्यथा** इति। न केवलं भेदोक्तेः स्वरूपैक्यपरत्वाभावः, सामानाधिकरण्योपपादकान्तर्यामित्वकण्ठोक्त्या चेत्याह—**अन्तर्यामि** इति। [2] **सर्वभूत** शब्दयोः चेतनपर्यन्तत्वं [3] तदुत्तरार्धोत्तरपादाभ्यां सिद्धम्। " न हिंस्यात् सर्वा भूतानि " इति प्रयोगाच्च। " अहमात्मा " इत्यादेरुक्तार्थपरत्वमाह — **अहम्** इति। [4] पूर्वग्रन्थैकार्थ्यात् इति भावः। **'न तदस्ति'** इत्यादेरर्थमाह — **यत** इति। निषेधस्य [5] विहिततादात्म्यशेषत्वादिति भावः। उक्तार्थपरत्वे हेतुमाह — **भगवत्** इति। विहितं विभूतित्वं न निषेध्यमिति भावः। अन्यथा " एतां विभूतिं योगं च " इत्युपक्रमविरोधश्चेति भावः। उपसंहारपरत्वं दर्शयति — **ततः** इति। शास्त्रस्य निर्विशेषपरत्वाभावं निगमयति — **अतः** इति। **अतः** — [6] सद्विद्यायोजनाप्रभृत्युक्तन्यायैः। जगन्मिथ्यात्वपरत्वाभावमाह — **नापि** इति। **नापि चिदचित्** इत्यचिदुपादानं दृष्टान्ततया। [7] चेतने तु अचिद्धर्मधीः, परतन्त्रे स्वतन्त्रधीश्च भ्रम इति स एव निषिद्धः, न स्वरूपम् इति [8] **स्वरूप** शब्दभावः ॥

---

1. अन्यथा इति। कण्ठोक्त्या चेत्याह–**अ.** (मध्ये ग्रन्थपातः इव)
2. सर्वसर्वभूतयोः–**अ.** 3. तदुत्तरार्धेन–**ग.**
4. पूर्वार्धैकार्थ्यात्–**अ.**
5. विहिततादर्थ्यपरत्वं दर्शयति–**क.**
6. सद्विद्यायोजनप्रभृति–**ग.** 7. चेतनेषु–**क.**
8. स्वरूपशब्दस्य भावः–**अ.**

## अविद्यायां सप्तविधा अनुपपत्तयः ।

यदप्युच्यते—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पितम् ... ... ... अविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति ॥ (पृ. ७३)

अथाविद्याविषयत्वे परोक्तं दूषयितुमनुवदति—**यदपि** इति । ब्रह्मणोऽन्यो दोषोऽस्ति चेत् अद्वैतहानिः इत्यत्राह—**दोषश्च** इति । [1]श्रुतिश्रुत्यर्थापत्ती दर्शयति — **अनृतेन** इति । अनिर्वाच्यत्वमुपपादयति— **सा तु** इति । [2] परपक्षत्वव्युदासाय **तत्त्वविदः** इति । दूषयति — **तत्** इति ॥

### १. आश्रयानुपपत्तिः ॥

आश्रय-तिरोधि-स्वरूप-अनिर्वाच्यत्व-मान-निवर्तक-निवृत्ति-अनुपपत्तिभिः दूषयिष्यन् आश्रयानुपपत्तिं तावदाह — **सा हि** इति । [3] **किम्** — न किंचिदिति भावः । जीवं वा ब्रह्म वा इति विकल्पं मत्वा आद्ये अन्योन्याश्रयमाह — **न तावत्** इति । द्वितीयं दूषयति — **नापि** इति । कथं विरोध इत्यत्राह — **सा हि** इति । अत्र प्राचां ग्रन्थमह — **ज्ञानरूपम्** इति । **ज्ञानरूपम्** — [4] स्वसिद्धम् । **मृषात्मकम्** इति हेतुगर्भम् । स्वरूपधीर्न [5] निवर्तिका , अपि तु मानधीः इत्येतदनूद्य व्युदस्यति — **ज्ञानम्** इति । **तत्प्रकाशत्वात्** — स्वरूपानतिरिक्त[6] प्रकाशत्वात् । न हि [7] शुक्लभास्वरमात्रविषयधीशतैरपि [8] रूप्यभ्रमनिवृत्तिरित्यर्थः ।

---

1. श्रुत्यर्थापत्तिं-क ; श्रुत्यर्थापत्ती-ग.
2. परपक्षत्वव्युदासायाह-अ.
3. किमाश्रित्य, न-अ.
4. स्वसिद्धि-ग.
5. निवर्तका-क.
6. प्रकाशकत्वात्-ग.
7. शुक्तिभास्वर-अ. शुक्तौ भास्वर-क.
8. रूप्यनिवृत्तिः-अ. रूप्यधीनिवृत्तिः-क.

दूषणान्तरं तत्फलं चाह — **ज्ञानम्** इति । प्रथमश्लोकार्थस्य पूर्वं 'ज्ञानबाध्याभिमता' इत्यन्तेन भाष्येणोक्तत्वात् द्वितीयं विवृणोति — **ज्ञानस्वरूपम्** इति । **ब्रह्मस्वरूपप्रकाशत्वे सति** — स्वरूपविषयज्ञानत्वे सति । **विशेषानवगमात्** — विषयवैषम्याभावात् । मानधीत्वस्याप्रयोजकत्वं शुक्ल-भास्वरज्ञाने दृष्टमिति भावः । अभिज्ञाप्रत्यभिज्ञयोर्विषयानतिरेकेऽपि [1] उत्तरस्येव निवर्तकत्वं मानधिय इत्यत्राह — **एतत्** इति । सत्यत्वादिकमपि स्वरूपानतिरिक्तमिति **स्वभाव**शब्दस्य भावः । एवमेकस्य देशद्वयकालद्वयसंबन्धरूप-विषयवैषम्यात् [2] 'सोऽयम्' इति धीः [3] द्वित्वविरोधिनी ; तदभावात् 'अयम्' इति धीः न विरोधिनीति फलितम् ॥

**किं च अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयं ज्ञानमस्ति । ... ... अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ॥** (७३-७४)

तृतीयश्लोकस्य विपर्यये पर्यवसानमाह — **किं च** इति । व्यापक-मानधीत्वनिवृत्त्या निवर्तकत्वनिवृत्तिरिति नाधिष्ठानभूतं स्वरूपं निवर्तकम् ; मानजा शुक्तिधीर्हि [4] निवर्तिका इत्यत्राह — **शुक्त्यादयस्तु** इति । तर्हि तद्वदेवाधिष्ठानस्वरूपस्फुरणेऽपि मानान्तरमपेक्ष्येत ; न चेत् व्यापकवेद्यत्व-निवृत्त्या अधिष्ठानत्वमपि निवर्तेत । तदपेक्षा नाधिष्ठानत्वप्रयुक्ता, किं तु जडत्वप्रयुक्ता इति चेत्, तर्हि भ्रमनिवृत्तावपि मानान्तरापेक्षा जडत्वनिबन्धना, न त्वधिष्ठानत्वप्रयुक्तेति न मानधीत्वनिवृत्त्या निवर्तकत्वनिवृत्तिः । अतः स्वयाथात्म्यभानरूपं स्वयमेव विरोधीति [5] नाज्ञानाश्रयत्वमित्यर्थः । प्रक्रियान्तरं

---

1. उत्तरस्यैव-अ. 2. संबन्धस्वरूपविषयवैषम्यात्-अ.
3. द्वित्वभ्रमविरोधिनी-अ. 4. निवर्तका-अ.
5. नाज्ञानाश्रयम्-अ.

शङ्कते— **अथ** इति । दूषयति— **न** इति । विकल्पशिरसोः प्रथमं दूषयति — **न तावत्** इति । कथमतद्विषयत्वे तद्विरोधित्वमित्यत्राह — **ज्ञान** इति । द्वितीयं दूषयति — **प्रपञ्च** इति । प्रपञ्चसत्यत्वधी-निवृत्त्या स्वरूपाज्ञाननिवृत्तिं शङ्कते — **ब्रह्म** इति । सद्वितीयत्वनिवृत्तौ स्वरूपसिद्धिः कथमित्यत्राह — **स्वरूपं तु** इति । दूषयति — **न** इति । कथमित्यपेक्षायाम् अद्वितीयत्वं स्वरूपं वा धर्मो वा इति विकल्पं मत्वा प्रथमं दूषयति —**ब्रह्मणः** इति । धर्मपक्षमनुभाष्य दूषयति—**अद्वितीयत्वम्** इति । आश्रयानुपपत्तिं निगमयति — **अतः** इति ॥

## २. तिरोधानुपपत्तिः ॥

**किं च — अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितम् ... ... ... प्रकाशस्य अनुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाश-नाश एव ॥** (पृ. ७४)

तिरोधिं दूषयति— **किं च** इति । नाशस्योक्तत्वमुपपादयति — **प्रकाश** इति । प्रागभावः, प्रध्वंसो वेत्यर्थः । अस्मन्मते तु स्वरूपाति-रिक्ताणुत्वनित्यत्वादितिरोध्यभ्युपगमान्न [1] दूषणसाम्यमिति ; तिरोधिश्च धी-सङ्कोच इति तन्नित्यत्वाविरोधः, धीस्तु शुक्तित्ववत् देहादन्यस्यासाधारणतया न क्वचित् दृष्टेति न सा भ्रमविरोधिनी ॥

## ३. स्वरूपानुपपत्तिः ॥

**अपि च निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रय-दोषवशात् ... ... ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावत् भ्रान्तिरुपपादिता भवति ॥** (पृ. ७४-७५)

---

1 दूषणसाह्यम्-क.

अथ स्वरूपानुपपत्तिमाह — अपि च इति । वक्ष्यमाणानवस्थित्युपयोगितया तत्परिपाटीकथनम् ; 'दोषवशात्' इति च्छेद्यते । प्रथमे शिरसि अद्वैतहानिप्रसङ्गात् अनभ्युपगम उक्तः । द्वितीयं दूषयति — नापि इति । दृशित्वपक्षे च अनवच्छिन्नदृशिपक्षे स्वरूपातिरिक्तपक्षं दूषयति — दृशिस्वरूप इति । न ह्यनवच्छिन्नदृग्द्वयमित्यर्थः । अनतिरिक्तपक्षं दूषयति — अस्य इति । [1] अवच्छिन्नदृशिद्रष्टृदृश्यपक्षान् दूषयति — [2] द्रष्टृ इति । काल्पनिकत्वेन — अपरमार्थत्वेन । अनवस्था, पूर्वोक्ते शिरस्यपि साधारणी। दूषणान्तरोक्त्यै विकल्पः । [3] मुखान्तरं शङ्कते — अथ इति । अनतिरेकात् [4] नाद्वैतहानिः ; [5] सत्यत्वान्न अनवस्थितिरित्यर्थः । दूषयति — ब्रह्मैव इति । [6] मृषात्वेन दोषसापेक्षत्वं प्रपञ्चतुल्यता वैयर्थ्यमुक्तम् । अनिर्मोक्षं चाह — ब्रह्मणः इति । अतः इत्यादि । [7] अनिर्मोक्षानवस्थितिपरिहाराय व्यतिरिक्तपारमार्थिक शब्दौ । जीवाज्ञानवाचुक्त [8] प्रवाहानादित्वेन अनवस्थितिपरिहारोऽकृताभ्यागमकृतनाशादिहतः । स्वरूपानादित्वेऽपि जीववत् दोषान्तरापेक्षा स्यात् । उभयथाऽप्यधिष्ठानमिथ्यात्वं [9] सुवचम् । दुर्घटत्वेऽपि तथा [10] दुर्घटत्वात् दोषस्यैवाधिष्ठानस्याप्यनपेक्षा स्यात् । [11] सत्यत्वप्रयुक्तोपपत्तिरेव दौर्घट्यनिवार्या अधिष्ठानापेक्षा [12] त्वसत्यत्वप्रयुक्तेति तन्मिथ्यात्वेऽधिष्ठानान्तरापेक्षेति [13] अनवस्थितिरिति चेत्, [14] दोषापेक्षाऽपि तत्प्रयुक्तेति [15] अनवस्थितिः;

---

1. अवच्छिन्नद्रष्टृदृश्यपक्षं-ग.
2. द्रष्टृदृश्ययोः-ग
3. मुख्यान्तरं-अ.
4. नार्थे द्वैतहानिः-अ.
5. नित्यत्वात्-ग.
6. मृषार्थत्वेन-ग.
7. अनिर्मोक्षास्थिति-अ.
8. प्रवाहनित्यत्वेन-अ.
9. स्ववचम्-अ.
10. दुर्घटता स्यात् । दोषस्य-ग
11. सत्यत्वप्रयुक्तदोषोपपत्तिरेव ग.
12. असत्यत्व-अ.
13. अस्थितिः-अ.
14. दोषोपेक्षापि-ग.
15. अस्थितिः-अ

न चेत् जगदपि [1] दोषानपेक्षं स्यात् । अतोऽसत्यत्वप्रयुक्ता तदपेक्षा चेत्, दोषेऽपि तथेति [2] अनवस्थितिः । स्वपरनिर्वाहकत्वं चाधिष्ठानेऽपि [3] सुवचम् ॥

## ४. अनिर्वचनीयत्वानुपपत्तिः ॥

**अनिर्वचनीयत्वं च किमभिप्रेतम्? सदसद्विलक्षणत्वम् ... ... ... सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेः विषयः स्यात् इति ॥** (पृ. ७५)

अथ अनिर्वचनीयत्वं व्युदस्यति — **अनिर्वचनीयत्वम्** इति । **अनिर्वचनीयता** — विद्वत्सन्निधौ अवाच्यता । कथं सामान्यत्वमित्यत्राह– **एतत्** इति । **सर्वं सर्वप्रतीतेः** इति । सदसद्विलक्षणत्वबुद्धेः सदसदेव विषयः स्यात् । प्रतीतिद्वयविरोधो वैलक्षण्यस्य साधकश्चेत् सर्वत्र पूर्वपक्षित-सिद्धान्तिताकारादन्यदेव सिध्येदिति भावः । उभयरूपत्वं विरुद्धं चेत्, उभय-वैलक्षण्यमपि विरुद्धम्, तयोरेव अन्यतरवैलक्षण्यस्यान्यतरात्मकत्वदर्शनात् । विरुद्धत्वे तुल्येऽपि सदसदात्मकत्वं तु दृष्टमिति भिदा । वस्तुतस्तु अन्यतरदेवास्तु, एवमन्यतरेणैव ख्यातिबाधोपपत्तेः न [4] विलक्षणक्लृप्तिः इति भावः । तदुपपत्तिश्च सत्त्वे सति भेदाग्रहान्यथाभानादिभिः ॥

## ५. प्रमाणानुपपत्तिः ॥

**अथ स्यात् — वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधा-ध्यासोपादानम् ... ... अनुभवो भावरूपाज्ञानविषय एवाभ्युप-गन्तव्य इति ॥** (पृ. –७५–७६)

---

1. दोषापेक्षं–ग. 2. अस्थितिः–अ 3. स्ववचम–अ.

4. विलक्षणत्वक्लृप्तिः–अ

अथ मानसिद्धोऽर्थो न तर्कबाध्य इति तत्सिद्धिं शङ्कते— **अथ स्यात्** इत्यादिना, **निरवद्यम्** इत्यन्तेन। **वस्तु** इत्यादिना दूषिताकार उक्तः। **आन्तर** इति स्वरूपोक्तिः। अविद्योपादानं चेत् कथं ब्रह्म कारणमित्यत्राह— **तदुपहित** इति। अनेन आश्रयोक्तिः। स्वसिद्धौ कथमध्यास इत्यत्राह — **तेनैव** इति। निष्कृष्टस्य कारणत्वानुपपत्त्यर्थम् [1] **अविकार**आदिशब्दः। **तस्यैव**—दोषस्यैव। **अध्यासरूपे**—अध्यस्तरूपे। जगद्धि विकारात्मकं जडम्, पराक्। कार्यकारणसाजात्यदृष्टं हेतुमाह — **कृत्स्नस्य** इति। प्रत्यक्षं दर्शयति— **कारण** इति। 'निर्विकल्पकसिद्धमिदं सौषुप्तिकमनवच्छिन्नमज्ञानम्' इति केचिदाचार्याः। जागरादौ [2] सिद्धमिति संप्रदायः, **अन्यं च** इत्युक्तेः। [3] **अज्ञ** शब्दविवरणं **माम्** इत्यादि। मानान्तरव्युदासाय **अपरोक्ष** शब्दः। प्रागभावविषयत्वमाशङ्क्याह — **अयं तु** इति। भावग्राहिमानवेद्यत्वमभावस्याशङ्क्याह— **अभावस्य** इति। ज्ञानं विद्यते चेत् ग्राह्याभावः, न चेत् ग्राहकाभाव इत्यर्थः। अर्थान्तरधीः अभावप्रतियोगिनी, अभावधीस्त्वस्तीति नानुपपत्तिरित्यत्राह — **एतदुक्तम्** इति। [4] नार्थान्तरज्ञानम् अभावप्रतियोगीति वाच्यम्, [5] धर्मिप्रतियोगि-सिद्ध्यभावे अभावस्य दुर्ग्रहत्वात्। तर्हि धर्मिप्रतियोगीतरधीः अभावप्रति-योगिनी चेत् अभावप्रतियोगिधीश्च स्वविषयावच्छिन्ना [6] भाता इति घटादिज्ञाने सति न तदभाव [7] इति भावः। ग्राह्यस्य ज्ञानाभावस्याभावे समकालविषयत्वनियमवदैन्द्रियिकप्रत्यक्षमात्रानुभाव्यत्वविरोधः। ग्राहकसाम-ग्रयन्तर्भूतधर्मिप्रतियोगिज्ञानाभावे सर्वैः प्रमाणैः अनुभाव्यत्वविरोध इत्यभिप्रायेण

---

1. अविकारादिशब्दः। जगत् विकारात्मकं-**अ.**

2. सिद्धमिति तु-**ग.** 3. अज्ञानशब्द-**ग.**

4. नार्थान्तरज्ञानाभावप्रतियोगीति-**क**

5. धर्मप्रतियोगिन्यभावे तु-**अ**; धर्मिप्रतियोग्यभावे तु-**क.**

6. जाता-**ग.** 7. इत्यर्थः-**क.**

**सुतराम्** इत्युक्तम् । उक्तदोषं मानान्तरवेद्यत्वेऽप्यतिदिशति — **ज्ञानाभावस्य** इति । मानान्तरेणापि ज्ञानाभावस्य विद्यमानतया ज्ञापनमयुक्तमित्यर्थः । तथा हि प्रतीयते — ‘अहमज्ञः’ इति । भावरूपत्वे सत्यविरोधमाह — **अस्य** इति ॥

**ननु च भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते ... ... ... बहुलत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेः द्रव्यान्तरमेव तम इति निरवद्यमिति ॥**

( पृ. ७६–७७ )

विरोधं दर्शयंश्चोदयति — **ननु** इति । परिहरति — **मैवम्** इति । दृश्यमिथ्यात्वमुपजीव्याह — **अन्यथा** इति । अज्ञानविषयत्वमस्तु ; ततः किमित्यत्राह – **न हि** इति । न हि रूप्यधिया रूप्यनिवृत्तिरित्यर्थः । [1] दृश्यावच्छेदकं रूपं दृश्यम् ; न तथाऽस्मदर्थ इति कथं तदवच्छिन्नत्वमज्ञानस्येति चोदयति — **ननु** इति । **विषयविशेषः** — अवच्छेदकविशेषः । **सः** इति । स एवोक्तः । [2] रूपादिदृश्यत्वं न [3] दृश्यावच्छेदकत्वप्रयुक्तं, किं तु जडत्वप्रयुक्तमिति परिहरति — **नैष** इत्यादिना । प्रत्यक्षतः सिद्धिं निगमयति — **तस्मात्** इति । **तस्मात्** — पक्षद्वयेऽपि विरोधाविरोधाभ्याम् । [4] स्वनिवर्त्यत्वस्वविषयावरणाभ्यां [5] सहकारान्तरान्वितत्वं च [6] अनुमया साधयति — **तदिदम्** इति । धारावाहिकेषूत्तरज्ञानव्युदासाय **विवाद**इत्यादिपदम् । **स्वप्रागभाव** इति साध्यधर्मः । घटादिविषयधर्माधर्मभयप्रागभावाः प्रतिलोमव्यावर्त्याः । अनुलोमतस्तु प्रागभावघटादि-

1. दृश्यावच्छेदकारकं रूपवदहश्यं–अ
2. रूपदृश्यत्वं–क　　3. दृश्यत्वावच्छेदक–अ.
4. निवर्त्यस्वविषया–क.　　5. सहकरणत्वाभ्यां–अ.
6. अनुमाय–ग.

विषयकुड्यादिव्यवधानवेद्यगतवित्त्यभिव्यक्तिप्रागभावाः ; धारावाहिकद्वितीयादिज्ञानेषु अनैकान्त्यव्युदासाय अप्रकाशितार्थ शब्दः । दिवा दीपे द्वितीयादिप्रभासु च साध्यवैकल्यव्युदासाय अन्धकार-प्रथम शब्दौ । साध्यवैकल्यमाशङ्कते — आलोक इति । उलूकादेर्दिवान्धकार इति तदनुगमायाह— रूप इति । परिहरति — उच्यते इति । आदिशब्दात् चलत्वम् [1] अबाधः । प्रकाशात् वैषम्यं रूपानुपलब्धिवेलायां भानात् । बाध्यत्वशङ्का तु आगमस्वारस्यादपोदिता । सृष्टिप्रलयवपुष्ट्वोक्तेः कार्ये सिद्धे कारणं कल्प्यमिति नोत्पादकानुपपत्तिः, [2] नापि ज्ञापकानुपपत्तिः । [3] उलूकालोकयोः अनालोकापेक्षत्वदर्शनात् एतद्ग्राह्यविशेषेऽपि तत्संभवात् । [4] द्रव्यत्वं सिद्धान्तेऽप्यनुमतम्, अदूषितत्वात् [5] आगमवशाच्चेति ॥

**अत्रोच्यते — 'अहमज्ञः, मामन्यं च न जानामि' इत्यत्रोपपत्तिसहितेन ... ... ... ज्ञानप्रागभाव एव 'अहमज्ञः मामन्यं च न जानामि' इत्यनुभूयत इत्यभ्युपगन्तव्यम् ॥** ( ७७–७८ )

परिहरति — **अत्र** इति । **केवल**–उक्तिः दृष्टान्ततया । कथमिति शङ्कायामविरोधं वक्तुं विरोधसाम्यमाह — **यस्तु** इति । कथं साम्यमित्यत्राह — **विषयत्वेन** इति । **स्वरूपज्ञान[6]निवर्त्यम्** — स्वरूपावभास[7]निवर्त्यम् । मानधीत्वमप्रयोजकं, विषयवैषम्याभावादिति हृदयम् । अविरोधं शङ्कते — **अथ** इति । प्रमाणेन भानं — **विशदावभासः** । [8] अविरोधे साम्यमाह — **हन्त** इति । विशद[9]**स्वरूपं** विषयः अवच्छेदकं

---

1. बाधः । कोशोऽन्धकाद्वैषम्यम्–अ.
2. न ज्ञापकानुप्रपत्तिर्वा । द्रव्यत्वं सिद्धान्ते–ग,
3. उलूकालोकालोकनयोः–क. 4. दृश्यत्वं–अ.
5. आगमाच्च–ग. 6–7. निवर्त्यत्वम्–ग. 8. विरोधे· क.
9. स्वरूपमवच्छेदकं यस्य सः । यत् त्वन्मते निवर्तकतयाऽभिमतं विशदस्वरूपविषयं मानज्ञानं तदभावः (विशदस्वरूपविषयः)–ग.

यस्य सः — **विशदस्वरूपविषयः** । विशदस्वरूपस्य प्रागभावावच्छेदकत्वं स्वविषयधीद्वारेण । **आश्रयप्रतियोगि** इति । आश्रयज्ञानस्य **अविशद-स्वरूपविषयत्वम्** अविशदप्रत्यगर्थविषयत्वम् । प्रतियोगिज्ञानस्य **अविशद स्वरूपविषयत्वम्** अभावप्रतियोगिभूताविद्यमानज्ञानविषयत्वम् । तद्धि स्मर्यते । यत् त्वन्मते निवर्तकतयाऽभिमतं विशदस्वरूपविषयं मानज्ञानं तदभाव-प्रतियोगि । विद्यमानं चाविशदं धर्मिप्रतियोगिज्ञानमित्यर्थः । 'घटज्ञानं न' इति वदता घटज्ञानं स्वविषयेण सह [1] स्मर्यते । घटतज्ज्ञानविषयं स्मृतिरूपं विद्यते । प्रत्यक्षज्ञानं [2] तु अभावप्रतियोगि । न च स्मर्यमाणस्य तस्य विद्यमानत्वनियम इत्युक्तं भवति ॥

एवं निवर्त्यनिवर्तकविरोधः प्रतिबन्दीकृतः । अथ नञर्थप्रतियोग्यव-च्छिन्नतयैव अज्ञानसिद्धौ हि प्रतियोगिन्या धियः [3] साश्रयविषयतया भानात् तन्निवर्त्याज्ञानस्थितिविरोधः **परिहारसाम्यं** च स्यात् । न च [4] नञर्थो-ल्लेखेनैव अज्ञानस्य सिद्धिः, स्वरूपेण सिद्धेः इत्याशङ्क्याह— **भावरूपस्य** इति । उक्तं विवृणोति— **तथा हि** इति । न हि तमःप्रतिपत्तौ आलोक-ज्ञानापेक्षा इत्यत्राह— **यद्यपि** इति । अज्ञानमपि **स्वरूपेण** सिध्यती-त्यत्राह— **भवतु** इति । 'मुग्धोऽस्मि' इत्यादेः 'कस्य कं प्रति' [5] इति कर्तृकर्मप्रतीतिः न परिहार्या । कस्यचित् [6] दिगादौ हि मोहः । ततः किमित्यत्राह —**तथा** इति । विरोधाविरोधौ समौ चेत् मदुक्तं स्वीक्रियताम् इत्यत्राह – **ज्ञान** इति । लाघवात् इति भावः ॥

**नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च ...**

---

1. श्रूयते-अ.  2. च भावप्रतियोगि-अ.
3. स्वाश्रयविषयाभानात् ग.  4. नञर्थोल्लेखेनैव सिद्धिः-ग.
5. इति परिहारः-अ.  6. दिगादौ मोहः-ग.

**… … प्रकाशस्यैव स्वरूपत्वात् अन्यतः स्वरूपनाश एव स्यात् इति पूर्वमेवोक्तम् ॥** (पृ. ७८)

अनुकूलतर्काभाव उक्तः । प्रतिकूलतर्कमाह — **नित्य** इति । हेतुमाह — **स्व** इति । हेतुं विवरीतुं शङ्कते — **स्वानुभव** इति । 'तिरोधान' शब्दस्य अर्थान्तरपरत्वव्युदासाय पृच्छति — **किमिदम्** इति । उत्तरं शङ्कते — **अप्रकाशित** इति । स्वानुभवस्वरूपं चेत् स्वस्मै प्रकाशत एवेति अप्रकाशितस्वरूपत्वं न घटत इत्याशयेनाह — **स्वानुभव** इति । **अन्यत** इति शङ्कते — **स्वानुभव** इति । दूषयति — **एवम्** इति ॥

**किं च — ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति … … अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् ॥** (पृ. ७८–७९)

दूषणान्तरमाह — **किं च** इत्यादिना । मिथ्याभूतस्य सत्तया कार्यकरत्वाभावात् अनुभवपूर्वकत्वम्; स्वानुभवस्वरूपत्वात् अन्यानुभवस्य तिरस्कारपूर्वकत्वम । अनुभवपूर्वकत्वं शङ्कते — **अनुभूतम्** इति । दूषयति — **यदि** इति । तिरोधानकल्पना तदर्थम् [1]आच्छादिकाविद्याकल्पना च निष्फलेत्यर्थः । तदुपपादयति — **ब्रह्मणः** इति । मुखान्तरेण दूषयति — **किं च** इति । स्वतः पक्षे [2]अनिर्मोक्षः स्वरूपनिवृत्तिश्च । अन्यतः पक्षे अनवस्था । तिरस्कारपूर्वकत्वं शङ्कते — **ब्रह्म** इति । दूषयति — **तथा सति** इति । यौगपद्यं शङ्कते — **अथ** इति । दूषयति — **नैतत्** इति । यौगपद्ये तिरोधेरनुभवं प्रति [3]पूर्वभावाभावान्न हेतुत्वमिति परानुभवस्याहेतुकतया स्वरूपप्रयुक्तत्वे स्वानुभवस्वरूपत्वं च न स्यादिति साक्षित्वापादना-

1. आच्छादका-ग. 2. अनिर्मोक्षस्वरूपनिवृत्ती-अ.
3. पूर्वभावान्न-क.

नुपपत्तिः । शङ्कते — **हेत्वन्तरेण** इति । दूषयति — **तर्हि** इति । [1]तिरोधिपूर्वकानुभवात् पूर्वं स्वरूपेण सत्त्वाभावादनादित्वहानिः । अनवस्थोक्तिः ज्ञानानिवर्त्यत्वस्याप्युपलक्षणम्, अनन्तरपूर्वोक्तेः । तिरस्कृतिं विना [2] अविद्या-साक्षित्वोपपादने अनिष्टमाह— **अतिरस्कृत** इति ॥

**अपि च–अविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते? ......... नो चेत् मोक्षस्य कार्यतया अनित्यता स्यात् ॥**
(७९–८०)

अथ वैशद्यावैशद्ये दूषयितुमुपक्रमते — **अपि च** इति । किंशब्दः क्षेपे । **प्रकाशमात्र** इति । **मात्रचा** विषयत्वव्यावृत्तिः । अवैशद्यं शङ्कते — **अथ** इति । **किंरूपा** – दुर्निरूपा । वैशद्यावैशद्यं च [3] किंरूपम्? कथं प्रकाशे तदनुपपत्तिः? इत्यत्राह — **एतदुक्तम्** इति । तयोः स्वरूपं शिक्षयति — **यः** इति । तदनुपपत्तिमाह — **तत्र** इति । **प्रकाशाभावादेव** इति । धर्म्यभावात् धर्माभावः । [4] उक्तरीत्या ज्ञेयेऽपि वैशद्यावैशद्यसंभव [5] इत्याह — **विषयेऽपि** इति । परपक्षे तदनुपपत्तिमाह — **तस्मात्** इति । मुखान्तरेण दूषयति — **अपि च** इति । **न स्याताम्** इति । विशदस्वरूपस्य अविद्याविरोधित्वादिति भावः । **अनित्यता**– भावरूपकार्यत्वादिति भावः । सा मानबाधिता चेत् सविशेषता ॥

**अस्याज्ञानस्य आश्रयानिरूपणादेवासंभवः पूर्वमेवोक्तः ... ... ... अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तेः । ततश्च सर्वशून्यत्वमेव स्यात् ॥**　　(८०)

---

1 तिरोधानपूर्वक–ग.

2. अविद्यासाक्षित्वापादने निष्कर्षमाह–अ

3. किम्? कथं–अ　4. उक्तनीत्या–अ　5. इत्यत्राह–अ

[1] पूर्वोक्तामाश्रयानुपपत्तिं प्रतिकूलतर्कत्वेनाह — **अस्य** इति । मुखान्तरेण दूषयति – **अपि च** इति । स्वरूपानादितया प्रवाहानादितया दुर्घटतया स्वपरनिर्वाहकतया वा अनवस्थापरिहारोऽधिष्ठानेऽपि तुल्यः । अधिष्ठानापारमार्थ्यं न दृष्टं चेत् दोषमृषात्वमपि न दृष्टमिति भावः । ततः किमित्यत्राह— **ततश्च** इति ॥

**यदुक्तम् – अनुमानेनापि भावरूपमज्ञानं सिध्यतीति, तदयुक्तम् ......... तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात् हेतोरनैकान्त्यम् इत्यलमनेन ॥** (८०)

अथानुमानं दूषयति – **यदुक्तम्** इत्यादिना । कथं [2] दुरुक्तत्वमित्यत्राह – **अज्ञानेऽपि** इति । कथमज्ञानान्तरसाधनावश्यंभाव इत्यत्राह – **तत** इति । ज्ञानस्याप्रकाशितार्थविषयसम्यङ् [3] निश्चयरूपत्वमावहत्यनैकान्त्यम् । तत्परिहारे ज्ञानस्य न सम्यङ्निश्चयरूपत्वम् मिथः [4] प्रतिक्षेपकत्वात् । अतो हेतुनैर्दोष्यं ज्ञानसम्यक्त्वं च न समुच्चित्य सिध्यतीति अन्यतराभावेऽपि न साध्यसिद्धिरित्यर्थः । कथं तस्यानभिमतत्वमित्यत्राह – **साधने च** इति । स्वविषयावरणत्वादिति भावः । ततः किमित्यत्राह— **ततश्च** इति । मृषार्थो न सत्तया कार्यकृदिति तिरोधानरूपकार्यकरत्वाभावान्नैष्फल्यमित्यर्थः । अथ किं साक्षात् भासकत्वं हेतुः, उत प्रणाड्या, उत साक्षात् प्रणाड्या वा, उत विषयावरणनिरासकत्वमिति हेतुं [5] चतुर्धा बुद्ध्या विकल्प्य प्रथमं दूषयति – **दृष्टान्त** इति । उपपादयति— **सर्वत्र** इति । ज्ञानस्यैव साक्षात् भासकत्वमित्यर्थः । कुत इत्यत्राह – **सत्यपि** इति । ज्ञानस्यैव साक्षात् प्रकाशकत्वोक्त्या द्वितीयशिरस्यसिद्धिश्च

1. पूर्वोक्ताश्रयानुपपत्तिमत्र-**अ.** 2. दुरुक्तम्-**क.**
3. निश्चयरूपत्वान्नैकान्त्यम्-**ग.** 4. प्रतिपक्षत्वात्-**ग.**
5. चतुर्धा विकल्प्य-**ग.**

फलिता । तृतीयं शिरः इन्द्रियेष्वनैकान्त्येन दूषयति — **इन्द्रियाणामपि** इति । प्रभाया इन्द्रियेभ्योऽप्यतीव व्यवधिमाह — **प्रदीप** इति । प्रकाशकत्वव्यवहारः कथमित्यत्राह — **प्रकाशक** इति । चतुर्थं शङ्कते — **नास्माभिः** इति । साध्याविशिष्टत्वमाह — **न हि** इति । [1] विरोधिनिरासकत्वात्मकं प्रकाशकत्वं न ह्यस्ति; तद्धि साध्यमित्यर्थः । तत्र संप्रतिपन्नं प्रकाशकत्वमाह — **अपि तु** इति । **परिच्छेदशब्दस्य** परिमितिपरत्वव्युदासायाह — **व्यवहार** इति ॥

**प्रतिप्रयोगाश्च–१. विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्माश्रयम् ... ... ... ९. भावरूपमज्ञानं न ज्ञानविनाश्यम्, भावरूपत्वात्, घटादिवदिति ॥** (८०–८१)

प्रतिकूलतर्कानाह — **प्रति** इति । व्याप्तिमूलत्वात् — **प्रयोगाः** इत्युक्तम् । अज्ञानं पक्षीकृत्य प्रसङ्गत्रयम् उच्यते — **विवाद** इति । ब्रह्माश्रयम् अतदाश्रयमिति [2] **विवादाध्यासितम्** । ततः शुक्त्याद्यज्ञानव्यावृत्तिः, तद्धि जीवाश्रयम् भावरूपमज्ञानम् । शुक्तिकाद्यज्ञानस्य च तथात्वं ज्ञप्तिमात्रं ब्रह्म चाभ्युपगम्य प्रतितर्कोक्तिः । शुक्त्यज्ञानस्य ज्ञानानाश्रयत्वं कथमित्यत्राह— **ज्ञात्राश्रयम्** इति । अज्ञानत्वे ज्ञानानाश्रयत्वप्रसङ्गः, ज्ञानानावरणत्वप्रसङ्गः च । ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः । ब्रह्म पक्षीकृत्य प्रसङ्गत्रयमाह — **ब्रह्म** इति । अज्ञानाश्रयत्वे ज्ञातृत्वप्रसङ्गः । अज्ञानावरणत्वे ज्ञेयत्वप्रसङ्गः । ज्ञाननिवर्त्याज्ञानत्वेऽपि ज्ञेयत्वप्रसङ्ग इत्यर्थः । मानज्ञानं पक्षीकृत्य प्रागभावातिरिक्तत्वस्य प्रतिकूलतर्कमाह — **विवाद** इति । व्यतिरेकिणमाह — **ज्ञानम्** इति । [3] विशिष्टस्य हेतुत्वात् तदभाव उभयत्र दर्शितः । **भावरूपम्** इत्यादिना च प्रसङ्गः ॥

---

1. विरोधिनिरासात्मकं–ग.
2. विवादः । अज्ञानत्वे ज्ञानानाश्रयत्व–ग.
3. विशिष्टहेतुत्वात्–क.

**अथोच्येत-बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यते ... ... ... ज्ञानानां भयाद्युत्पत्तिहेतुत्वेन अनेकभयोपलब्धि-प्रसङ्गाच्च ॥** (८१)

व्यभिचारं शङ्कते — **अथ** इति । परिहरति — **नैवम्** इति । स्वयमेव विनाशात् इति । [1] आश्रयविनाशाधीनस्वनाशदीपादीतरक्षणिकानि फलनाश्यानीति भावः । भयादेश्चिरोपलंभस्तु कारणानुवृत्त्या । भयादेः पश्चान्निवृत्तिः कथमित्यत्राह — [2] **कारण** इति । [3] सर्पादिज्ञानानुवृत्तिः कारणानुवृत्तिः । क्षणिकत्वं कथमित्यत्राह — **क्षणिकत्वं च** इति । अन्यथाऽनिष्टमाह — **अक्षणिकत्वे च** इति । स्थिरत्वे [4] घटा इव युगपत् बहूनि भयानि दृश्येरन्नित्यर्थः ॥

**स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन ... ... ...आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम् ॥** (८१-८२)

शाब्ददोषमाह — **स्व** इति । **वस्तुशब्दो** भावे प्रचुरसिद्धिरिति भावः । **अन्तरशब्दश्च व्यर्थः** । अनुमानदूषणं निगमयति — **अतः** इति । **श्रुति** इत्यादि स्फुटम् । अनिर्वाच्यासिद्धिं निगमयति — **अतः** इति । ख्यातिबाधान्यथानुपपत्तिमाशङ्क्याह — **प्रतीति** इति । **प्रतीतिः** — [5] भ्रान्त्यभ्रान्तिसाधारणरूपा । उपपादयति — **प्रतीयमानम्** इति । ततः किमित्यत्राह — **आभिः** इति । पूर्वज्ञानेन बाधकज्ञानेन चेत्यर्थः । पूर्वं 'सत्' इति, उत्तरम् 'असत्' इति हि गोचरयति ॥

---

1. आश्रयनाशनश्वरदीपादीतर-अ.
2. कारणेत्ति । क्षणिकत्वं-ग
3. सर्पादिज्ञाननिवृत्तिः-(कारणनिवृत्तिः ?) क्षणिकत्वं-क.
4. घट इव-ग.
5. भ्रान्त्यभ्रान्तिसाधारणं रूपम्-ग.

**शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्ति ...... शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यम् ॥**

[1] अथ परमतं विस्तरेण शङ्कते — **शुक्त्यादिषु** इति । [2] **अन्यथाभानायोगाच्च** इति ॥

" परस्मिन् भासमाने तु न परं भासते यतः ।
तेनान्यस्यान्यथा भानं प्रतीत्यैव पराहतम् ॥ "

[3] इत्यादिकमनुसन्धेयम् । दूषयति — **न** इति । कथम् अन्यथाभानावर्जनीयत्वमित्यत्राह — **कल्प्यमानम्** इति । अलौकिकसदुपगमेऽपि [4] दोषस्तुल्यः, तस्य लौकिकसता भेदाग्रहे संप्रतिपन्नस्यैव तदग्रहक्लृप्तिः वरं, लाघवात् ॥

**ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथाऽवभासोऽवश्याश्रयणीयः .... .... .... ज्ञानद्वयमेकत्वेन च, विषयासद्भावपक्षेऽपि विद्यमानत्वेन ॥** (८२)

यथार्थख्यातिव्यतिरिक्तेषु अन्यथाख्यातेः प्राबल्यमभिप्रयन्नाह — **ख्यात्यन्तर** इति । उक्तं विवृणोति — **असत्** इति । 'असत्' इति प्रतीतं चेत्, प्रतीतिबाधभ्रमत्वायोगः । 'सत्' इति चेत् अन्यथाभानम् । एवं सर्वत्र । **आत्मशब्दो** ज्ञानपरः । **अख्याति** इति । ज्ञानमेकं वा अनेकं वा इति विकल्पं मत्वा प्रथमं दूषयति — **अन्यविशेषणम्** इति । समानाधिकरणधीबलादापादितम्, न तु तदुपगतम् ॥

**किं च — अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता ... ... अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ॥** (८२-८३)

---

1. परमतं-ग. 2. अन्यथाभानायोगोऽपि-अ.
3. इत्यादिष्वनुसन्धेयः-अ. 4. स दोषः-अ.

अथ पूर्वोक्तमकारणकत्वं विवृणोति — **किं च** इति। **तस्या** इति। [1] नियतपूर्वकालवर्ति हि कारणमिति भावः। इन्द्रियदोषस्य इन्द्रियस्य दुष्टेन्द्रियस्य चाकारणत्वमाह — **अथ** इत्यादिना। **अनादि** इति। अनिर्वाच्यस्याप्रामाणिकत्वादित्यर्थः ॥

**किं च— अपूर्वमनिर्वचनीयमिदं वस्तु जातं रजतादिबुद्धि-शब्दाभ्यां ... ... ... अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वा-योगाच्च इत्यलम् अपरिणतकुतर्कनिरसनेन ॥** (८२)

बुद्धिशब्दान्वयानुपपत्तिमाह — **किं च** इति। **सा किम्** इति। परमार्थजातेः अपरमार्थव्यक्तौ अपरमार्थजातेः परमार्थव्यक्तौ चान्वयो व्याप्ति-विरुद्ध इत्यर्थः। अपरमार्थपक्षे दूषणान्तरमाह — **अपरमार्थ** इति। असत्यात् सत्योत्पत्तिनिरासमुपजीव्येदमुक्तम् ॥

**अथवा —**

**यथार्थं सर्वविज्ञानमिति वेदविदां मतम्।**

... ... ... ... ... ...

**एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥** (८३–८४)

स्वसिद्धान्तमाह — **अथवा** इति। यथार्थख्यातिं प्रतिजानीते — **यथा** इति। कुत इत्यत्राह — **श्रुति** इति। श्रुतिं दर्शयति — **बहु स्याम्** [2] इति। **सृष्ट्यादि** इति आदिशब्देन "सन्मूलाः" इत्याद्युक्तस्थिति-प्रलयौ नामरूपव्याक्रिया च गृह्यन्ते। सृष्ट्यादिः उपक्रमो यस्य प्रकरणस्य तस्मिन्। उत्पत्तौ फलस्य पश्चाद्भावेऽपि [3] सङ्कल्पे फलपूर्वभावित्वज्ञापनाय **बहु स्याम्** इत्याद्युपात्तम्। उत्पन्नावस्था हि अस्तित्वम्। उत्पद्यमानावस्था हि

1. नियतपूर्ववर्ति-**ग**. 2. इत्यादि-**अ**.
3. सङ्कल्पे पूर्वभावित्व-**ग**.

जायमानता । ते हि "स्याम् प्रजायेय" इत्युक्ते । तेन सङ्कल्पे पश्चाद्भाविनः त्रिवृत्करणस्य नामरूपव्याकरणात् प्राग्भावसिद्धिः । उत्पत्तौ त्रिवृत्करण-पश्चाद्भावपाठोऽर्थक्रमबाध्य इति भावः । **यदग्नेः रोहितं रूपं तेजसस्तत्** इत्यादिना अण्डान्तर्भूतेषु तत्प्रदर्शनात्, नाण्डसृष्ट्यर्थत्वमित्यत्राह — **एवं हि** इति । त्रिवृत्करणस्याण्डसृष्ट्यर्थत्वं तत्त्वान्तरमिश्रणप्रदर्शनार्थत्वं च [1] ज्ञापयितु-माह — **पुराण** इति । पृथग्विभागानर्हसंश्लेषः **कृत्स्नशः समागमनम्** । 'सम्' इत्येकीकारे, "संप्राप्यैक्यमशेषतः" इति विवृतत्वात् । आश्रया-श्रयिभावो न्यूनाधिकभावात् । ततश्च शब्दव्यवस्था । सूत्रमाह — **सूत्र-** इति । **तेन** — भूयस्त्वेन । सदृशे सदृशान्तरैकदेशसद्भावं दर्शयति — **सोम** इति । तत्तुल्यन्यायत्वादाह — **व्रीहि** इति । ततः किं सादृश्यस्य इत्यत्राह —**तदेव** इति । ततः किमित्यत्राह — **शुक्त्यादौ** इति । **श्रुत्यैव** — त्रिवृत्करणश्रुत्या, प्रतिनिधिश्रुत्या वा । **बोधितः** — बोधः फलितः । शब्दव्यवस्थापकमाह — **रूप्य** इति । शुक्त्यंशोऽस्ति चेत्, सदा [2] गृह्येत, प्रवृत्तिबाधौ न स्यातामित्यत्राह — **कदाचित्** इति । शुक्तिभूयस्त्ववैकल्यग्रहो भ्रमः । तत्साकल्यग्रहो बाधः । **नातः** इति । [3] **मिथ्यार्थसत्यार्थशब्दौ** पराभिमतमिथ्यात्वसत्यत्वपरौ ॥

**स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानु-भाव्याः ... ... ... पुण्यपापफलभूताः शयानदेहसरूपसंस्थान-देहान्तरसृष्ट्योपपद्यन्ते** ॥ (८४-८५)

उक्तनिर्वाहद्वयागोचरः स्वाप्नार्थः कथं निरुह्यते इत्यत्राह — **स्वप्ने च** इति । [4] सुखदुःखरूपत्वे हेतुमाह— **पुण्य** इति । **तत्तत्** इत्यादि । सुखादि-

1. ज्ञापयितुं नानावीर्यत्वमाह-**ग.**
2. गृह्येतेति **प्रवृत्ति-ग**; गृह्येत । प्रवृत्तिः स्यात्, बाधश्च न स्यादित्यत्राह-**क.**
3. मिथ्यासत्यशब्दौ-**अ.** 4. सुखदुःखरूपत्वहेतुमाह-**अ.**

वदिति भावः। **स्वप्नविषया**— "स्वप्नं पश्यति" इति प्रकृतस्वप्नविषयैषा श्रुतिरिति भावः। **रथयोगाः**— अश्वादयः। [1] स्वभोग्यमात्रदृष्टिस्वीयत्वधीविनियोगजाः प्रीतयः **आनन्दाद्याः**। तैर्विषया लक्ष्यन्ते। व्याघातपुनरुक्तिपरिहारार्थमाह— **सकल** इति। **सृजते** इति श्रवणात् [2] उत्सर्गापवादनयगोबलीवर्दनयक्रमः संचारितः। स्पष्टवाक्यान्तरमाह— **य एषु** इति। सौत्रतामाह— **सूत्र** इति। तदर्थमाह— **स्वाप्नेषु** इति। [3] कल्पकसृष्टिवचनान्यथासिद्धेर्न जीवगुणाविर्भावक्लृप्तिरिति भावः। कथं जीवतः शिरश्छेदादिसत्यतेत्यत्राह [4] — **अपवरक** इति॥

**पीतशंखादौ तु नयनवर्तिपित्तद्रव्यसंभिन्ना नायनरश्मयः ... ... तद्ग्रहणजनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते॥ (८५)**

पीतशंखादौ नेश्वरसृष्टत्वश्रुतिरित्यत्राह—**पीत** इति। अन्यैरपि गृह्येतेत्यत्राह— **पित्तद्रव्यम्** इति। स्वेनापि न गृह्येतेत्यत्राह- **पित्तोपहतेन तु** इति। दूरस्थशंखभ्रमो [5] न स्यादित्यत्राह— **तद्ग्रहण** इति। यथा [6] नेदिष्ठदशागृहीतगृध्रस्य दविष्ठदशायामपि [7] पूर्वग्रहणजसंस्कारसचिवचक्षुषा ग्रहणं तथाऽत्रापि इत्यर्थः। रूपिणि चक्षुःसामर्थ्यात् **पित्तद्रव्यम्** इत्युक्तम्। इदं गुरुमताद्वैषम्यम्॥

**जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। ... .... ... तत्रापि अतिशैघ्र्यादन्तरालाग्रहणात् तथा प्रतीतिः॥ (८५-८६)**

1. भोग्यमात्रदृष्टिः स्वीयत्वधीः विनियोगजाः-अ.
2. अजो बलीवर्दनयः-अ; उत्सर्गापवादनयः संचारितः-क.
3. सृष्टिवचन-ग.
4. इत्यत्राह—तद्ग्रहणेति-अ.
5. शंखे भ्रमो-क.
6. नेदिष्ठदशागृहीतस्य दविष्ठ-ग.
7. पूर्ववदित्यत्राह—स्वच्छ इति। -अ. (अत्र ग्रन्थपातः इव).

न चाक्षुषतेजःसंसर्गात् स्फटिकराग इत्यत्राह — **जपा** इति । अश्ममात्रेऽपि स्यादित्यत्राह — **स्वच्छ** इति । [1] मरीचिकाजलधियो याथार्थ्यमाह — **मरीचिका** इति । अदृष्टस्य नियामकत्वं साधारणाकारग्रहोऽसाधारणाकाराग्रहश्च [2] सर्वैरुपेत्यः । [3] मान्त्रिकार्थवादिकार्थस्वीकारो गुरुमतात् भिदा । **अलात** इति । **अन्तरालाग्रहणात्** — अलातस्य तत्तत्प्रदेशेन पूर्वापरसंयोगयोः मध्यकालाग्रहणात्; [4] क्रमाग्रहणादित्यर्थः । **दर्पण** इति । विपर्यस्तसव्यदक्षिण[5]भावस्य दर्पणस्य मुखस्य च निरन्तरभानात् तथा प्रतीतिः ॥

**दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वात् अदृष्टवशेन ... ... ... दोषकृतं तु सामग्रीद्वित्वं, तत्कृतं ग्रहणद्वित्वं, तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम् ॥** (८६–८७)

**दिङ्मोह** इति । दिगन्तरोपाधेर्दिगन्तरस्य च नीरन्ध्रधीः । पीतशङ्खादिषु दिङ्मोहपर्यन्तेषु प्रतिबिम्बं विना द्रव्यान्तरसंसर्गान्निर्वाहः । **द्विचन्द्र** इति । अविशेषणस्य विशेषणत्वं मृषेत्यत्राह — **देशान्तरस्य** इति । निरन्तरभातत्वनेव सर्वत्र विशेषणत्वमित्यर्थः । ततः किं याथार्थ्यस्येत्यत्राह — **तत्र** इति । **ग्राह्याकारद्वित्वम्**–निरन्तरभातदेशद्वित्वम् । एकत्वाग्रहः कथमित्यत्राह — [6]**तत्र** इति । **सामर्थ्याभावात्**; अतिशैघ्र्यात् विलम्बितभाविसंस्कारादित्यर्थः । सामग्रीद्वित्वं कथमित्यत्राह — **द्वयोः** इति । कार्यकल्प्यम्; दोषवदिति भावः । सदा द्वित्वधीः स्यादित्यत्राह — **अपगते तु** इति । दोषापगमे कथमैक्यधीरित्यत्राह — दोष इति ॥

---

1. मरीचिकजलधीयाथार्थ्यम् –ग.
2. सर्वैरुपेत्यम् –ग.　　3. मन्त्रिक–अ.
4. क्रमात् ग्रहणादित्यर्थः । स्फुटम् –अ.
5. भागस्य–अ.
6. तत्र इति । अतिशैघ्र्यात् विलम्बितभाविसंस्काराभावात्-अ.

**अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम्। ख्यात्यन्तराणां दूषणानि ... ... तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहितया चोपपद्यते इति सर्वं समञ्जसम्॥** (८७)

ख्यातीनां याथार्थ्यं निगमयति — **अतः** इति। ख्यात्यन्तराणि किं न [1] निराक्रियन्त इत्यत्राह — **ख्यात्यन्तर** इति। अथ सर्वत्रैकनिर्वाहिण [2] परिहारमाह — **अथवा** इति। **सेत्स्यति** — उपपद्यते [3] इति। मानतर्कसिद्धिः उक्ता। उक्तं विवृणोति — **भगवता हि** इति। **अखिलं जगत् सृजता** इत्यनेन 'इदं सर्वमसृजत' [4] इति श्रुतिः सूचिता। उपपत्तिमाह— **सर्वं** इति। बाध्यबाधकभावः कथमित्यत्राह — **तत्र** इति॥

**यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति, तदसत् ... ... "एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः" इति वचनात्॥** (८७)

अथ श्रुतिभिः अनिर्वचनीयाज्ञानोक्तिं व्युदस्यति —**यत्पुनः** इत्यादिना। **अनभिधायित्वात्** — अप्रामाणिकत्वेन व्युत्पत्त्यभावादिति भावः। **अनृत**— [5] शब्दार्थमाह — **ऋतम्** इति। अभावविरोधिनोः तदाश्रयत्वायोगादिति भावः। ऋतशब्दार्थमाह — **ऋतम्** इति। **कर्मवाचि** — पुण्यकर्मवाचि। **अनृतम्** इति तदन्यपापकर्मवाचि। हेतुमाह — **ऋतं पिबन्तौ** इति। 'सुकृतस्य लोके' इति ह्युच्यते। 'एवं पुण्यस्य कर्मणः' इत्यत्र 'एवमनृतात्' इति पुण्यप्रतियोगि पापं हि **अनृत**-शब्देनोक्तमिति द्रष्टव्यम्। पुण्यमपि हि मोक्षविरोधीत्यत्राह — **ऋतम्** इति। [6] इष्टानिष्टफलदत्वयोः

1. स्वीक्रियन्ते-अ. 2. परिहरति-क.
3. इत्यर्थः-ग. 4. इत्यादिश्रुतिः स्मारिता-ग.
5. शब्दार्थः ऋतम्-क. 6. इष्टानिष्टफलत्वयोः-ग.

पुण्यपापशब्दप्रवृत्तिनिमित्तत्वात् मुमुक्षून् प्रति नरकादिवत् स्वर्गादेरपि मोक्षविरोधित्वेनानिष्टत्वात **ऋत**शब्देन मोक्षैकसाधनं 'स्वकर्मणा तमभ्यर्च्य' इत्याद्युक्तं कर्माभिधीयते। **अनृत**शब्देन तद्व्यतिरिक्तसांसारिकफलं [1] सर्वं कर्म उच्यत इत्यर्थः । अनृतशब्दस्य मोक्षविरोधिकर्मपरत्वं कुत इत्यत्राह — **एतम्** इति ॥

**"नासदासीन्नो सदासीत्" इत्यत्रापि सदसच्छब्दौ चिदचित्समष्टिविषयौ । ... ... न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ॥** (८७–८८)

**नासदासीत्** इत्यादि । "अनादि मत्परं ब्रह्म न सत् तन्नासत्" इति वचनं यथा परस्य ब्रह्मणो न [2] अनिर्वचनीयत्वपरं, तथा इहापि इत्यभिप्रायः । **उत्पत्ति** इति । कार्यावस्थजीवे सच्छब्दश्रुतेः असच्छब्दोऽपि तदन्यकार्याचित्परः इत्यर्थः । **तमःशब्द** इति — 'तम आसीत्' इति हि अनन्तरोक्तिः । हेत्वन्तरमाह — **सदसतोः** इति । न हि अनिर्वाच्यत्वं कदाचिदिति भावः । तमसोऽचित्समष्टित्वमुपपादयति — **अत्र** इति । चोदयति— **सत्यम्** इति । परिहरति — **नैतत्** इति । **इतिर्हेतौ** । शङ्कते — **मायः** इति । प्रत्याह — **तदपि** इति । मिथ्यार्थत्वमेव नास्ति, तथोपगमेऽपि भेदाग्रहादिनोपपत्तेः न [3] अनिर्वाच्यत्वमर्थ इति भावः। सर्वत्रातद्विषयत्वे हेतुमाह — **आसुर** इति । **यथा** इति । न हि रज्जुसर्पः शस्त्रच्छेद्य इति भावः । तस्यार्थमाह — **अतः** [4] इति । तं स्फुटयति — **अस्मात्** इति । **विचित्रः**—नानाविधः । तादृगर्थसर्गकरत्वम् आश्चर्यत्वं, विस्मयनीयत्वम्, 'मायाशब्दो हि आश्चर्यवाची' इति वक्ष्यमाणत्वात् । **मायित्वम्** शेषितयेत्याह — **परम** इति । व्यावर्त्यं विवृणोति — **जीवस्यैव** इति । '**मायाभिः**'

1. सर्वकर्म-ग. 2. अनिर्वचनीयत्वपरः-ग.
3. अनिर्वचनीयमर्थः-अ. 4. इति । स्फुटयति-अ.

इति बहुवचनस्वारस्यमभिप्रेत्याह — **विचित्राः शक्तयः** इति । '**मम**' इति; स्फुटम् ॥

**नाप्यैक्योपदेशानुपपत्त्या ; न हि 'तत्त्वमसि' इति ... .. परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् । अतो न ब्रह्माज्ञानपरिकल्पनम् ॥** (८९)

श्रुत्यर्थापत्तिं व्युदस्यति — **नापि** इति । उपपादयति — **न हि** इति । अक्लृप्तौ नानुपपत्तिः, क्लृप्तावेवानुपपत्तिः इत्यभिप्रायेण **तच्छब्दा-वगत**विशेषणान्युक्तानि । कथं निर्वाह इत्यत्राह — **ऐक्य** इति । मुख्यत्वं तत्र - अर्थः । कथं तदित्यत्राह — **अनेन** इति ॥

**इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते । ... ... भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टमिति ह्युपदेशो दृश्यते ॥** (८९)

उपबृंहणयोस्तदप्रतीतिमाह — **इति** इति । चोदयति — **ननु** इति । **प्रतिज्ञाय** इति — बाधे सामानाधिकरण्यम्, उपरि मिथ्यात्वोक्तेरिति भावः । विविधं ज्ञायतेऽनेन इति विज्ञानम् **अविद्या** । न सप्तमीसमासः, 'अपास्तदोषम्' इति वक्ष्यमाणत्वात्, [1] लिङ्गभेदाद्ययोगाच्च; तदा 'विजृम्भितान्' इति हि निर्देष्टव्यम् । **यदा** इति व्यतिरेकमुखेन विवरण-मित्यर्थः । **शुद्धं निजरूपि** — अविद्यातत्कृतभेदरहितम्[2] । [3] अपास्त-रागादिदोषम् । समन्तात् [4] कल्प्यन्ते भेदा अनेन इति **सङ्कल्पः** अविद्या । 'अविद्यातरुसंभूतिबीजम्' [5] इति हि योगाध्यायेऽभिहितम् । **वस्तुभेदाः**

---

1. लिङ्गभेदादियोगाच्च-अ. 2. भेददृष्टिरहितम् अ.
3. अपास्तदोषं–रागादिदोषरहितम्–ग.
4. कल्प्यते भेदः-क. 5. इति योगाध्यायेऽभ्युक्तम्-अ.

आकारभेदाः । **वस्त्वस्ति** इत्यर्थस्वरूपोक्तिः । **मही** इत्युदाहरणम् । 'स्वकर्म' इति —[1] न परं तत्त्वज्ञैः, अज्ञैरपीति भावः । **तस्मात्** इति — [2] विजातीयभेदनिषेधोपसंहारः । सजातीयाभावमाह —**विज्ञानम्** इति । स्वगतं निषेधति — **ज्ञानम्** इति । "विशुद्धं विमलम्" — [3]अविद्याभेदद्वयरहितम् । "एकं सदैकम्" इति सजातीय[4]विजातीयभेदविरहानुवादः । "परम" इत्यादि—परेशादिशब्दाः चिन्मात्रपरा इत्यर्थः । **सद्भाव** इति । न परमतमिति भावः । "संव्यवहारभूतम्" — समन्तात् व्यवहारार्हमेदम्; भुवनेनाधिष्ठानतयाऽऽश्रितम् । तत्र हेतुः अविद्या इत्युक्तमित्यर्थः ॥

**नैतदेवम्; अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा... ... परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितम् ॥ (८९–९०)**

परिहरति — **नैतत्** इति । अर्थप्रकरणशास्त्र[5]तात्पर्यविरोधाः प्रपञ्चस्य धर्मिग्राहकविरोधः श्रुतिविरोधो विशेषाः । 'अशेषमूर्तिर्भगवान्' इत्यादिपदलक्षणा चानुसन्धेया । अत्र ज्ञानतदन्यशब्दयोः आत्मानात्मविषयत्वम्, 'अस्ति नास्ति' 'सत्यासत्यादि' शब्दानां च [6]तद्गोचरत्वमपि न विगीतम् । अत्र नास्त्यसत्यादिशब्दानां परिणामित्वापरिणामित्वे निमित्ते, न तु ज्ञानबाध्यत्वाबाध्यत्वे इति 'मही घटत्वम्' इत्यादिभिरवगम्यते । परिणामित्वस्य नास्त्यसत्यादिशब्दप्रवृत्तिनिमित्तत्वेन कथनं श्रुतिषु [7]एतद्विषयेदृशशब्दानामैतदर्थ्यज्ञापनार्थम् । अज्ञानादिशब्दश्च नानिर्वाच्यपरः, अपि तु कर्मपरः; 'सर्वकर्मक्षये' 'निजकर्मभेद' इत्यादिभिरैकार्थ्यात् । अत्र

---

1. न परतत्त्वज्ञैः अ.   2. सजातीयभेद- अ.
3. अविद्याभेदरहितम्–ग.   4. विजातीयविरहानुवादः–अ.
5. तात्पर्यविरोधः-ग.   6. तद्गोचरत्वम् अविमतम्–अ.
7. एतद्विषयेऽनृतादिशब्दानामैदमर्थ्यं–ग.

इति । **अत्र** – द्वितीयांशे । **विस्तीर्णम्** इति – मिथ्यात्वविवक्षायां विस्तरोक्तिरयुक्तेति भावः । **अनुक्तम्** इति उक्तसंक्षेपव्युदासः । वक्ष्यमाणमादिभरतचरितं हि अस्य विस्तरः । **रूपान्तरम्** — [1] वियुक्तरूपम् ,संसृष्टरूपं हि उक्तम् । संक्षेप्यार्थशरीरमाह– **चिदचित्** इत्यादिना । 'प्रत्यस्तमित' इत्यादिग्रन्थमभिप्रयन्नाह — **वाङ्मनस** इति । भेदनिषेधार्थमाह — [2] **अस्पृष्ट** इति । मनुष्यत्वादिपिण्डो भस्माद्यवस्थासु न पूर्वशरीरिणो जीवस्य देहः; न तथा इदम्, सर्वावस्थमपि परदेह इत्यभिप्रायेणाह — **उभयं तु** इति । **एतद्रूपम्** – अर्थरूपम् ॥

**तथा हि...**

**" यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा । ... ... देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्था वस्तुषु वस्तुभेदा न भवन्ति ॥** (९०–९१)

उक्तमुपपादयति — **तथा हि** इति । सामानाधिकरण्यनिबन्धनज्ञापनाय समष्टिविषयं पूर्वश्लोकमुपादत्ते — **यदम्बु** इति । **ब्रह्माण्डमपि** इति । न हि बालदशायां शरीरस्य युवत्वे चेतनैक्यमिति भावः । अत्र सामानाधिकरण्योक्तिप्रयोजनमाह — **सकल** इति । न परं समष्टिविषयग्रन्थे व्यष्टेः परदेहत्वावगमः, व्यष्टिविषयग्रन्थेऽपीत्याह [3] — **पूर्वम्** इति । श्लोकार्थमाह — **तदिदम्** इति । सङ्गत्यर्थं चतुर्थपादार्थमाह– **अत्र** इति । **ज्ञान** इत्यादि — "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इतिवत् विशेषणविशेषणे तात्पर्यम्, "नृसिंहमूर्तिर्भगवान् श्वेतः" इतिवत् । [4] सद्वारकं ज्ञानस्वरूपत्वम् । **देवमनुष्य** इति । **शैल** आदिशब्दः प्रदर्शनार्थः इति भावः । कथं [5] वैविध्यधीमूलत्वम् ? 'सर्वकर्मक्षये' 'निजकर्मभेद' इति द्युच्यते

1. वियुक्तं रूपम्-अ.
2. अस्पृष्ट इति । इदं सर्वावस्थमपि ईश्वरदेहभूतम्-ग.
3. ग्रन्थेनापि तत्राह-अ. 4. सद्वारं-ग. 5. वैचित्र्यधी-अ.

इत्यत्राह — **देवादि** इति। प्रणाड्या इत्यर्थः। विज्ञानविजृम्भितत्वफलितार्थमाह — **यतश्च** इति। **तदेव विवृणोति** इति–[1] व्यतिरेकमुखेनेत्यर्थः। पूर्वपक्षयोजनायामुपजीवनीयं **निर्दोषम्**–शरीररहितम्। **परिशुद्धं**–रागादिरहितम्। **निजरूपि**–आविर्भूतस्वरूपम्। 'सङ्कल्प' शब्दार्थमाह— [2] **तदा देव** इति। कथं वस्तुभेदः, [3] कर्मफलं सुखादि हि तत्फलमित्यत्राह— **तद्भोगार्थाः** इति। द्वारभूतत्वादिति भावः॥

**ये देवादिषु वस्तुष्वात्मतयाऽभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धि ... ... तद्भेदानुसन्धानं नात्मस्वरूपप्रयुक्तमित्याह — "विज्ञानमेकम्" इति॥** (९१–९२)

एवमन्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह — **ये देवादिषु** इति। सप्तम्यन्तवस्तुशब्दो देहविशिष्टात्मपर इति भावः। द्वितीयवस्तुशब्दो विशेषण [4] भूतदेहपरः। **भोग्य** इति – 'भोगार्थ' पदव्याख्येयत्वसूचनम् [5]। 'भोक्ता भोग्यम्' इत्यादौ 'भोग्य' शब्दो भोगार्थपर इति भावः। व्यतिरेकं स्पष्टयति — **ते तन्मूल** इति। स हि कारणाभावे कार्याभावः। फलितार्थमाह — **इत्यचित्** इति। आत्मनोऽस्तिशब्दवाच्यत्वहेतोरपि फलितत्वमाह – **इतरस्य** इति। अनन्तरग्रन्थस्य वाक्यार्थमाह — **प्रति** इति। [6] शब्दयोजनौपयिकमर्थमाह — **अस्तिशब्द** इति। शब्दार्थमाह – **अचिद्वस्तु** इति। उत्तरार्धस्य शङ्कामाह — **ततः** इति। वर्तमाननिर्देशस्य फलमाह — **प्रतिक्षणम्** इति। 'भूयः' शब्दार्थमाह — **उत्तर** इति। 'तत्र' इत्यस्यार्थमाह — **पूर्व** इति। "कुतो हि तत्त्वम्" इत्यस्यार्थमाह — **न**

---

1. व्यतिरेकमुखेनेति–अ. 2. देव इति–अ.
3. कर्मफलसुखादिस्तत्फलम्–ग. 4. भूतपरः–ग.
5. व्याख्येयसूचनम्–अ. 6. शब्दयोजन–अ.

**प्रतिसन्धानम्** इति । **तत्त्वं** – तस्य भावः । 'कुतः' शब्दः प्रमाणप्रतिक्षेपक इति भावः । **मही** इत्यादि – **मही घटत्वं** याति इत्यनुषङ्गः । कर्मणः प्रणाड्या स्तैमित्यहेतुत्वमाह – **देव** इति । **स्तिमितः** – प्रतिबद्धः । चाक्षुषज्ञानमात्रव्युदासायाह — **अनुभूयते** इति । 'अत्र' शब्दार्थमाह – **एवं सति** इति । फलितमाह — **न हि** इति । 'वस्तु' 'मही' इति श्लोकद्वयस्य एकवाक्यत्वं पूर्वपक्षयोजनायामुक्तम् । अनन्तरश्लोकपूर्वार्धं व्याचष्टे – **यस्मात्** इति । **तस्मात्** इति । **तस्मात्** — परिणामित्वान्न मिथ्यात्वादिति भावः । उत्तरार्धं व्याचष्टे — **आत्मा तु** इति । **बुद्धि**शब्देन 'चित्त' शब्दो व्याख्यातः ॥

**आत्मस्वरूपं तु कर्मरहितम् । तत एव मलरूपप्रकृतिस्पर्शरहितम् । ...... जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह– "यच्चैतत्" इति ॥** (९२)

उपाधिविगमे कीदृगात्मस्वरूपमिति शङ्कायाम् अनन्तरश्लोकं व्याचष्टे– **आत्म** इति । 'विशुद्ध' शब्दार्थमाह — **कर्म** इति । 'विमल' शब्दव्याख्यानम् — **मलरूप** इति । 'विधूय पापम्' 'धूत्वा शरीरम्' इति श्रवणादिति भावः । **उपचयापचयार्हत्वम्** सावयवत्वम् । [1] तदभावात् 'एकं' निरवयवम् । ततो [2] वृद्ध्यादिरहितमित्यर्थः । सामानाधिकरण्यार्थमाह — **तच्च** इति । नेत्यादिकं व्याचष्टे — **अतत्** इति । हेतुत्वं गम्यम् । 'यतः' शब्दस्य हेतुपरत्वे 'वासुदेवात्' इत्यध्याहारः । 'ज्ञानस्वरूपं' 'यदा तु' इति श्लोकौ चिदचित्साधारणौ । 'वस्त्वस्ति' इत्यादिसार्धश्लोकद्वयम् अचिदसाधारणम् । 'विज्ञानम्' इति सार्धश्लोकः चिदसाधारणः इति विभागः । न परमतम् इत्यनन्तरश्लोकार्थः । तत्र 'यथा' शब्दार्थमाह — **चिदंश** इत्यादिना । अन्यदुपक्रान्तम् अन्यदुपसंहृतम् इत्यत्राह—**अत्र** इति ।

1. तदभावादिकं–**क**. 2. व्याद्यादिरहितम्–**ग**.

[1] भुवनाश्रितत्वघटकम् अचिन्मिश्रपदम् । किं तत्कर्मेत्यपेक्षायामनन्तरश्लोकार्थमाह—तदेव इति । तदनन्तरस्यार्थमाह— जगत् इति ॥

**अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने ... ... कालान्तरे परिणामादिना नास्तीत्युपलब्धिः, कालभेदेन विरोधाभावात् । अतो न मिथ्यात्वम् ॥　　(९२–९३)**

अथ परोक्तार्थपरत्वाननुगुणत्वमाह — **अत्र** इति । सामानाधिकरण्यं नास्त्यादिपदं चानुगुणमित्यत्राह — **अस्तिनास्तिशब्दाभिधेयम्** इति । हेत्वन्तरं चाह— **अस्ति** इति । आद्यः **चः** त्वर्थः । कथमप्रामर्थ्यम् इत्यत्राह— **नास्ति** इति । [2] सत्त्वाभावात् तुच्छत्वं मिथ्यात्वं वाऽ [3] स्त्येवेत्यत्राह— **अत्र** इति । विनाशित्वमेव मिथ्यात्वमिति शङ्कायां [4] शोधयति — **एकेन** इत्यादिना । **परिणामादिना** इति परिणामविशेषो विवक्षितः । वक्ष्यमाणवचनेऽपि तथा, 'वाद' शब्दवत् । **काल** इति । विरोधे बाधः; तदहेत्वं हि मिथ्यात्वमित्यर्थः ॥

**एतदुक्तं भवति — ज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं ... ... अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेन अप्राधान्यमिति प्रतीयते ॥　　(९३–९४)**

नास्त्यादिशब्दाः किं परिणामिनि पारिभाषिकाः? परिणामिनोऽपि स्वरूपेण नित्यत्वान्न [5] नास्त्यादिशब्दार्थता इत्यत्राह — **एतदुक्तम्** इति । विनाशरूपावस्थागर्भत्वं निमित्तमित्यर्थः । [6] 'अस्ति' शब्दोऽवधारणगर्भः, 'अब्भक्षः' इतिवत् । अत्र मानमाह — **यथा** इति । असत्यादिपदानां

1. भुवनाश्रयत्वघटकं-ग　　2. सत्याभावात्-क
3. नेत्यत्राह-क.　　4. तानि शोधयति-अ.
5. नास्तीति शब्दार्थता-ग.　　6. अस्तिशब्दस्तु-अ.

मिथ्यात्वे [1]प्रसिद्धत्वात् मिथ्यागर्भतामपि दर्शयति—**देश** इति । [2]वचनाद्यपेक्षवाचकत्वादिकं कर्मापेक्षम् । औपाधिकास्तित्वयोगिनि स्वतोऽस्तिताधीविषयत्वमपरमार्थः । स्वतोऽस्तित्वयोगिनि तु तद्धीविषयत्वं परमार्थः इत्यर्थः । अनुवादेनाऽपि द्रढयति — **श्रोतुः** इति । अनुवादफलितमाह — **ज्योतींषि** इति । नियमेन [3]धार्यद्रव्यं हि शरीरम् । **प्राधान्याप्राधान्ये** च अविकारित्वविकारित्वे ॥

## ६. निवर्तकानुपपत्तिः ॥

**यदुक्तम् — 'निर्विशेषब्रह्मविज्ञानादेव अविद्यानिवृत्तिं वदन्ति श्रुतयः' इति ... ... शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम् ॥** (९४)

अथ निर्विशेषब्रह्मात्मैक्यधियो निवर्तकत्वे परोक्तश्रुतीनामतदर्थत्वमाह— **यदुक्तम्** इत्यादिना । [4]तद्विपरीतार्थपराः श्रुतीः दर्शयति — **वेद** इति । **न तस्य** इति — अधिकज्ञेयाभावात् तत्त्वान्तरज्ञानोपायत्वव्युदासः फलितः । कारणवाक्यैः निर्विशेषत्वोक्तेः तद्धीरुपाय इत्यत्राह — **ब्रह्मणः** इति । सद्विद्यादिष्वपि सगुणविषयत्वोपपादनादित्यर्थः । शोधकान्याशंक्याह — **शोधक** इति ॥

**'तत्त्वमसि' इत्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम् ... ... त्वंतत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणादयस्त एव दोषाः ॥** (९४)

---

1. प्रसिद्धत्वमिति शङ्कायां मिथ्यागर्भत्वमपि **ग.**
2. पचनाद्यपेक्षपाचकत्वादिकं–**ग.**
3. साध्यद्रव्यं–**अ.**
4. तद्विपरीतार्थपरश्रुतिं–**ग.**

अथ सामानाधिकरण्यान्यथानुपपत्त्या परोक्तं निर्विशेषत्वधिय उपायत्वं व्युदस्यति — **तत् त्वम्** इत्यादिना । हेतुमाह — **तत् त्वम्** इति । [1] तत्पदस्य सविशेषार्थत्वमाह — **तत्** इति । तच्च कथमित्यत्राह — **तदैक्षत** इति । 'तत् त्वं' पदोक्तसार्वज्ञ्याज्ञत्वादिविरोधात् स्वरूपमात्रपरत्वमित्यत्राह — **तत्समानाधिकरणम्** इति । अनेन असमानविभक्तिकनिष्कर्षकपदव्यावृत्तिः । सद्वारकत्वात् अविरोध इत्यर्थः । कुत इत्यत्राह — **प्रकारद्वयावस्थित** इति । स्वरूपमात्रपरत्वे दूषणद्वयमाह—**प्रकारद्वयपरित्याग** इति । लक्षणा न दोषः, '**सोयम्**' इत्यादौ दर्शनात् इत्यत्राह — **सोयम्** इति । किं कालद्वयसंबन्धो विरुद्धः, उत देशद्वयसंबन्धः? प्रथमं परिहरति — **भूत** इति । द्वितीयं परिहरति — **देश** इति । विरोधाल्लक्षणा चेत् अन्यतरपद[2] लक्षणयैवाल्म । तथा च सविशेषत्वमिति भावः । दूषणान्तरमाह — **तत्** इति । [3] उपक्रमोपक्रमोऽस्मदनुगुण इत्यत्राह — **एक** इति । [4] सार्वज्ञ्यसर्वेशक्तित्वसिद्धेरिति भावः । श्रुत्यन्तरविरोधमाह — **ज्ञान** इति । 'तत् त्वं' पदप्रवृत्तिनिमित्तयोः स्वरूपोपलक्षणत्वं दूषितम् । अथ बाधार्थत्वं दूषयति — **बाध** इति । अन्यतरपदेनाधिष्ठाने लक्षिते, तत्र पदान्तरेण धर्मान्तरनिवृत्तिर्लक्ष्या इति पदद्वयलक्षणा । **आदि**शब्दात् सामानाधिकरण्यहानितच्छब्दास्वारस्योपक्रमतदुपक्रमश्रुत्यन्तरविरोधा उक्ताः ॥

**इयांस्तु विशेषः – 'नेदं रजतम्' इतिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम् । ... .... ... नाधिष्ठानमात्रोपदेशेन, तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् भ्रमानुपमर्दित्वाच्च ॥** (९४-९५)

अधिकं दूषणद्वयं विवक्षन्नाह — **इयान्** इति । मानान्तरेण

---

1. तत्पदस्य विशेषार्थ-ग. 2. लक्षणैवाऌम्-अ.

3. उपक्रमस्तदनुगुण इत्याह-ग. 4. सर्वज्ञसर्वशक्तत्व-अ.

बाधदर्शनं, शब्देन विरुद्धधर्मोपस्थापनं च 'शुक्तिरेव [1] रजतम्' इत्यादिषु दृष्टम् । इह तु तदभावो वैषम्यम् । धर्म एव [2] उपस्थापनम् इति न नियमः, विरुद्धार्थोपस्थापनमेव बाधकल्पकमिति शङ्कते — **अधिष्ठानम्** इति । दूषयति — **न** इति । स्वरूपं किं प्रकाशते, न वा इति विकल्पं मत्वा द्वितीयं दूषयति — **अधिष्ठान** इति । प्रथमे च तद्भ्रमविरुद्धं न वा इति विकल्पमभिप्रेत्य प्रथमं दूषयति—**तदेव** इति । द्वितीये [3] भ्रमानुच्छित्ति-बाधाक्लृप्तिश्च स्पष्टतया नोक्ते । **अतः** इति । शुक्तित्वमिथ्यात्वे [4] रूप्यस्य सत्यत्वम् इत्यभिप्रायेणोक्तम् — **पारमार्थिक** इति । वृन्ते भृङ्गभ्रमात् दावभ्रमनिवृत्तिश्च [5] भृङ्गसत्यत्वधीजन्या । वस्तुनिवृत्तिस्तु सत्यपलाशत्वेन । ब्रह्मण्यपि तथा चेत् सर्पभूदलनादाविव भ्रमपरंपरयाऽनवस्थां [6] दर्शयति — **अधिष्ठान** इति ॥

**जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । ...... सदायतनाः सत्प्रतिष्ठाः इति "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः" इतिवत् ॥ (९५)**

उक्तदूषणाभावं स्वपक्षे दर्शयति — **जीव** इति । **निरस्त** इत्यादिना तच्छब्दावगतगुणाविरोध उक्तः । अन्यत् स्पष्टम् । 'तत्' पदं नोद्देश्यपरं, ब्रह्मणो मानान्तरावेद्यत्वात् । न च 'त्वं' पदं जीवशरीरकब्रह्मपरं, ब्रह्मणो जीवशरीरकत्वाज्ञानात् । अतः 'त्वम्' इति जीवमात्रमुद्दिश्य 'तत्' इति स्वरूपैक्यविधानमिति शङ्कते — **'तत् त्वम्'** इति । परिहरति — **नात्र** इति । ततः किमित्यत्राह — **अप्राप्ते हि** इति । प्राप्तत्वं दर्शयति—

1. न रजतम्-अ  2. उपस्थाप्यः-अ.
3. भ्रमानुच्छेदोऽनुपपन्ना बाधक्लृप्तिश्च-ग.
4. रूप्यसत्यत्वं-अ.
5. भृङ्गसत्यत्वधीसाध्या-अ. ... ... धीबाध्या-क.
6. निदर्शयति-अ.

**इदम्** इति । **ऐतदात्म्यम्** इति [1]अचित्तादात्म्योक्तिः, **अतो जीव**-तादात्म्यमप्राप्तम् इत्यत्राह — **सजीवम्** इति । 'सर्व' शब्दस्वारस्यात्, 'सर्वाः प्रजाः' इति पूर्ववाक्यानुगुण्यात्, 'इदं सर्वमसृजत', 'सच्च त्यच्च', 'विज्ञानं चाविज्ञानं च' इति श्रुत्यन्तरानुरोधाच्च 'सर्व' शब्दः चिदचित्परः इति भावः । 'मृदात्मको घटः' इतिवत् स्यादित्यत्राह — **तत्र च** इति । सदायतनत्वात् शरीरशरीरिभावः । हेतुत्वस्पाष्टयायाह — **सर्वम्** इति । **सदायतनत्वस्थाने** तदनत्वम् । अनुप्रविश्य प्रशासनेन धृत्या हि स्थितिः ॥

**तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च … … प्रतिज्ञातार्थस्य "तत्त्वमसि" इति सामानाधिकरण्येन विशेषे उपसंहारः ॥** (९६)

[2]शरीरशब्दनियन्तृनियाम्यत्वादिभिः स्फुटयितुमाह **तथा** इति । **अन्तर्** — इति । **सर्वात्मत्वव्याख्या**[3] । तच्च विशदयति — **य** इति । [4]**न वेद** इति, '**यमात्मा**' इत्यस्य दृष्टान्ततया । देवताविशेषस्य कारण-दशायामपि [5]चिदचिच्छरीरत्वायाह — **यः पृथिवीम्** इति । अनुप्रवेशस्य नामभाक्त्वहेतुतां दर्शयति — **तत्सृष्ट्वा** इति । स्वप्रकरणेऽपि दर्शयति — **अत्रापि** इति । '**जीवेन आत्मना**' इति जीवस्य ब्रह्मात्मकत्वं व्यासिकृत-मिति स्फुटयति — **तदनुप्रविश्य** इति । 'सिंहेन भूत्वा बहवो मयात्ताः' इतिवदित्यर्थः । '[6]ऐतदात्म्यम्' इत्यस्य देहात्मनिबन्धनतां निगमयति — **अतः** इति । [7]देहवाचिशब्दानां देहिनि मुख्यत्वं निगमयति — **तस्मात्** इति । **तस्मात्** [8]शरीरत्वतन्नामभाक्त्वहेतुत्वश्रुतेः । व्युत्पत्तिभङ्गः द्वित्वाद्यनुपपत्तिश्च-

1. अचिदात्मत्वोक्तिः-ग.
2. शरीरशब्दे नियन्तृनियाम्य-अ.
3. व्याख्यानम्-क
4. न वेदेति च-क
5. चिदचिच्छरीरत्वं क.
6. ऐतदात्म्यस्य-क.
7. देहशब्दानां-अ.
8. शरीरत्वनामभाक्त्व-ग.

त्यत्राह — **अतः** इति । ब्रह्मणो [1]मानान्तरावेद्यत्वात् तत्पर्यन्तव्युत्पत्त्यभावः । द्वित्वादिकं सद्वारकमित्यर्थः । उद्देश्योपादेयपरिहारं निगमयति — **इति** इति । वैयधिकरण्येन सामान्येनोक्तस्य सामानाधिकरण्येन विशेष उपसंहार इत्यर्थः ॥

**अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः केवलभेदवादिनश्च .... ... ब्रह्मात्मभावोपदेशाः न संभवन्तीति सर्ववेदान्तपरित्यागः स्यात् ॥** (९६–९७)

अथ देहिनि देहशब्दस्य मुख्यत्वमुपपादयितुं देहशब्देषु [2]आकृतिनयसञ्चारणपरस्य 'अंशो नाना' [3]इत्यधिकरणस्य पूर्वपक्षार्थदूषणमाह — **अतः** इत्यादिना । **अतः**—नामभाक्त्वनिर्वाहकशरीरत्वश्रवणात् [4] । **भेदाभेद** इति । [5]तन्वोक्तिः औपाधिकस्वाभाविकयोः । **केवल**शब्दः स्वनिष्ठपरः । **स्ववाक्यम्** — सत्यज्ञानादि । **केनापि प्रकारेण** — विशेष्यांशतोऽप्यैक्यासिद्धेरित्यर्थः ॥

**निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः ... ... ... न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम् । तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव ॥** (९७)

**निखिल** इति । **सम्यक्** शब्दो मुख्यत्वपरः । कथं [6]तदित्यत्राह— **जाति** इति । अमुख्यत्वेऽपि प्रयोगः संभवेत्, तच्च देहस्य द्रव्यत्वात् । अद्रव्यत्वे सति प्रकारत्वं हि मत्वर्थीयानपेक्षसामानाधिकरण्ये प्रयोजकमित्यत्राह — **जातिगुणयोरपि** इति । ततः किमित्यत्राह — **मनुष्यत्वादि** इति ।

---

1. मानान्तरनवद्यत्वात् तत्पर्यन्तव्युत्पत्तिभावः–**अ**.
2. आकृतिनयसञ्चारेण परस्य–**ग**.
3. इत्यधिकरणपूर्वपक्ष-**ग**.
4. शरीरत्ववशात्-**अ**.
5. तन्वोक्तिः-**अ**.
6. तदित्यत्राह–मनुष्यत्वादिति–**अ** (अत्र ग्रन्थपात इव)

'गङ्गा' पदे तु नानुगतनिमित्तदृष्टिः । अनुयायिनिमित्तेन मुख्यत्वे संभवति, क्वाचित्कनिमित्तं कल्पयित्वा क्वचिदमुख्यत्वक्लृप्तिरयुक्ता । न चेत् गुणत्वमेव प्रयोजकं स्यात् । [1]जातौ अमुख्यत्वं स्यादित्यर्थः । **परस्परव्यावृत्ताः** — [2]परस्परानुगताः इति प्रतिबन्द्यभिप्रेता । दण्डादावदर्शनात् त्वदुक्तमयुक्तमित्याशङ्कायां प्रकारतयैवेत्यभिप्रेतं विवृणोति — **स्वनिष्ठानाम्** इति ॥

**यदि 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यत्र ... .... आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति ॥　　　　(९७–९८)**

सहधीनियमनिवृत्त्या न अपृथग्विशेषणत्वमिति लक्षणेति चोदयति — **यदि** इति । **नैतत्** इत्यादि । सहधीनियमं परिहरिष्यन् [3]अयुतसिद्धविशेषणत्वे हेतुमाह — **मनुष्यादि** इति । पूर्वयोरन्यतरान्वितं प्रकारत्वमित्यर्थः । यद्वा प्रकारतयैव प्रतिपन्नत्वम् । न च साध्याविशिष्टता, दण्डकुण्डलादिवत् पृथगवस्थितत्वेनाप्रतिपन्नत्वम् इत्यर्थः, [4]तथोत्तरत्र विवरणात् । तदेकाश्रयत्वादिकमुपपादयति — **आत्मा** इत्यादिना । सपक्षे दर्शयति — **एतत्** इति । [5]विपक्षव्यावृत्तिमाह — **एतत्स्वभाव** इति । तस्यैव मत्वर्थीयानपेक्षत्वे [6]प्रयोजकत्वमाह — **देव** इति । सहधीनियमं परिहरति — **जाति** इति । चाक्षुषत्वं प्रदर्शनार्थम्, एकसामग्रीवेद्यत्वादित्यर्थः । तच्चायुतसिद्धप्रकारत्वे हेतुरित्याशङ्क्याह — **पृथक्** इति । प्रागुक्तं परिहारमाह — **जात्यादिवत्** इति । कथं तर्हि जात्यादेः सहधीनियतिरित्यत्राह — **सह**

---

1. जातेः–ग.　　2. परस्परानुगताः-क.
3. अयुतविशेषणत्वे–क　　4. तथेतरत्र–क.
5. विपक्षात् व्यावृत्ति-ग.
6. प्रयोजकत्वमाह जात्यादिवत् इति-अ. (अत्र अ पाठे ग्रन्थपात इव.)

इति । [1]प्रदर्शनार्थत्वं [2]स्फुटम् । व्यभिचारमप्याह — **यथा** इति । **नैतावता** इति । गन्धस्येवेति भावः । ततः [3]किमित्यत्राह — **तत्प्रकार** इति । तर्हि न केनापि मानेन धर्मिपर्यन्तधीः स्यादित्यत्राह— **आत्म** इति ॥

**ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति ........ "आत्मेत्येव तु गृह्णीयात्" इति च वाक्यकारः ॥ (९८-९९)**

चोदयति— **ननु** इति । जातिगुणादिशब्दं प्रतिबन्दीकृत्य परिहरति— **नैवम्** इति । देहशब्दानां देहिपर्यन्ततां निगमयति — **अतः** इति । ततः किमित्यत्राह —**एवम्** इति । सामानाधिकरण्यस्य तत्कृतत्वमाह — [4]**अतः** इति । किमनुग्राह्यं, शरीरत्वं किम् ? शरीरत्वे तत्प्रयुक्तदोषाः स्युः व्युत्पत्तिभङ्गश्च इत्यत्राह — **अयम्** इति । परेण स्वपक्षपरत्वेनोपात्तयोः सूत्रवाक्ययोरर्थमाह — **इदम्** इति ॥

**अत्रेदं तत्त्वम् — अचिद्वस्तुनः चिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन ... .... देवादिस्थावरान्तानामचिन्मिश्राणां सर्वभूतानां संभवो भवतीत्यर्थः ॥ (९९-१००)**

[5]लये चिदचिदोः परस्मिन् लयश्रुत्या देहात्मभावाभावात् ऐक्यश्रुतेः परिणामपक्षेण निर्वाहो वरम्; [6]किंच पक्षान्तरेभ्यो वैषम्यं भवत्पक्षस्येति शङ्कायां, सर्वश्रुतिमुख्यत्वं दर्शयन् विप्रकीर्णोक्तार्थान् सङ्कलय्य दर्शयति — **अत्रेदम्** इत्यादिना । ईशितव्यत्वेन एककोटित्वात् **भोक्तृत्वेन च** इति **च** शब्दः । **मायी** इत्युक्तमायां विवृणोति — **मायां तु** इति । **अन्य** शब्द-

1. प्रदर्शनार्थं स्फुटं व्यभिचार ग 2. स्पष्टम्-क.
3. किमित्यत्राह—एवमिति-अ. (अत्र अ पाठे ग्रन्थपात इव)
4. अतः इति । शरीरित्वे-ग. 5. चिदचितोः-ग.
6. किं च किं पक्षान्तरेभ्यो-ग.

वैशद्यायाह — **क्षरम्** इति । हरशब्दं व्याचष्टे — **प्रधानम्** इति । ईशत्वेशितव्यत्वपतित्वशेषत्व —[1] ज्ञत्वाज्ञत्व-कर्मवश्यत्वाकर्मवश्यत्वैः भेदो दर्शितः **स कारणम्** इत्यादिभिः । पृथक्त्वधिया मोक्षमाह — **पृथक्** इति । [2]मुक्तौ भेदमाह — **अजाम्** इति । **समाने** इत्यस्य एतदानन्तर्यं प्रकृत्युक्तिसाम्यात् । **स्मृतौ** इति — **अहङ्कार** इत्यादिवचनैः कारणावस्थायां [3]भेदः सिद्धः । व्याख्येयं व्याचष्टे — **जगत्** इति । 'त्रिगुणं तज्जगद्योनिः' [4]इति वचः स्मारितम् ॥

**'एवं भोक्तृभोग्यरूपेणावस्थितयोः सर्वावस्थावस्थितयोः चिदचितोः ... ... ... ... 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति ॥** (१०१)

तर्हि कथमैक्यमिति शङ्कायां [5]घटकश्रुतीरवतारयति — **एवम्** इति । कारणावस्थायां शरीरत्वमाह — **यः पृथिवीम्** इति । मृत्युशब्दार्थमाह — **अत्र** इति । [6]सर्वात्मत्वविवृतिः — **अन्तः** इति ॥

**एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुषः ... ... ... ... "सत्यं चानृतं च सत्यमभवत्" इत्याद्याः ॥** (१०१–१०२)

[7]भेदश्रुतिघटकश्रुत्यविरोधेन ऐक्यश्रुत्यर्थमाह — **एवम्** इति । घटकतयोपात्तम् **सन्मूलाः** इति ॥

**अत्रापि श्रुत्यन्तरसिद्धः चिदचितोः परमपुरुषस्य च स्वरूपविवेकः**

---

1. ज्ञातृत्वाज्ञत्व-ग.
2. मुक्तेन भेदं-अ.
3. भेदसिद्धिः-ग.
4. इति वचनं-ग.
5. घटकश्रुतिं-ग.
6. सर्वात्मत्वं विवृणोति-क.
7. भेदघटकश्रुत्यविरोधेन-अ.

**स्मारितः । ... ... ... ... ... कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् ॥** (१०२)

**अत्रापि** — छान्दोग्यतैत्तिरीययोः । **जीवेन** इत्येतत् व्याचष्टे — **अनेन** इति । केवलव्याकरणश्रुतेरपि सामान्यविशेषनयात् अनुप्रवेशसिद्धिमाह — **एवम्** इति । एकधिया सर्वधियः परमतेऽनुपपन्नायाः स्वमते उपपत्तिमाह — **अतः** इति । कार्यकारणैक्यं चोपपन्नमित्यर्थादुक्तं भवति । **कार्यावस्थ** इत्यादिपदैः विशिष्टं ब्रह्म हि उभयावस्थम् । मृत्पिण्डतद्गतरूपादीनामिव विशेषणविशेष्यभेदसिद्धिः । मुख्यत्वं **तदर्थः** । सामानाधिकरण्यमुख्यत्वमाह — **अहमिमाः** इति ॥

**अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति ... ... ... ... ... श्रुतिरेव अन्यत्र सामान्येनावगतं गुणनिषेधं हेयगुणविषयं व्यवस्थापयति ॥** ( १०२-१०३ )

उपादानत्वस्वभावासंकरौ [1]दर्शयति — **अतः** इत्यादिना । भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम् । अतोऽवस्थाभेदौ दर्शितौ — **स्थूलसूक्ष्म**शब्दाभ्याम् । प्रागपि बहवस्तन्तवः अतो न [2]अन्यतमात् अन्यतमोत्पत्तिः, इह तु एकत्वश्रवणात् एकस्मादितरोत्पत्तेश्च न स्वभावासङ्कर इत्यत्राह — **तन्तूनाम्** इति । मिथः प्रकारप्रकारितयाऽन्यतमशब्देनापि [3]विशिष्टोक्त्या कारणावस्थायामपि विशिष्टत्वात् [2]अन्यतमात् अन्यतमोत्पत्त्यभावात् एकत्वोक्तेर्नामरूपविभागाभावविषयत्वाच्च स्वभावासङ्कर इत्यर्थः । तर्हि केनाकारेण साधर्म्यमित्यत्राह — **स्वभाव** इति । क्रमागतपदार्थवत् संसर्गात् स्वभावसङ्करमाशंक्याह — **एवं च** इति । शरीरशरीरिणोस्तु संसर्गः न

1. संकरणाद् एकस्मात्-**अ**. ( अत्र ग्रन्थपातः इव ).
2. अन्यतमस्मात्-**अ**. 3. विशेष्योक्त्या-**ग**.

स्वभावसङ्करहेतुरिति भावः । तर्हि ब्रह्मणः कार्यत्वाभावात् [1] तत्पूर्वावस्थारूप-मुपादानत्वं तस्य न स्यादित्यत्राह — **स्थूल** इति । आत्मतया स्थित्या कार्यत्वं कथमित्यत्राह — **अवस्था** इति । [2] तत्तदवस्थानियमनमद्वारकावस्था ; विकारधी-सङ्कोचादिस्तु सद्वारकावस्था ; उभयोश्च परमात्मीयत्वं मुख्यम । व्रीह्यादेः प्रोक्षणादेश्च 'दर्शपूर्णमासाभ्याम्' इत्यादिप्रतिपन्नग्राहकापूर्वं प्रति [3]शेषत्ववत्, 'समः समविभक्ताङ्गः' 'धर्मज्ञः' इत्यादिवच्चेति भावः । निर्गुणश्रुत्यर्थमाह — **निर्गुण** इति । **श्रुतिरेव** इति । परोक्तार्थस्तु अश्रुतः श्रुतिविरुद्धश्चेति भावः ॥

**"ज्ञानस्वरूपं ब्रह्म" इति वादश्च सर्वज्ञस्य सर्वशक्तेः ... ... ... "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्यादिना ॥** (१०३–१०४)

आर्थगुणनिषेधं [4]परिहरति — **ज्ञान** इति । विशेषविधिप्राबल्यज्ञापनाय **सर्वज्ञ**त्वाद्युक्तिः । उभयार्थपराः श्रुतीर्दर्शयति — **यः सर्वज्ञः** इति । भेदनिषेधश्रुत्यर्थमाह — **सोऽकामयत** इति । प्रागुक्तगोबलीवर्दनयोऽभि-प्रेतः । **सर्वं तम्** इति ; **अन्यत्र** इति अव्ययम् [5] विनार्थकम् ; स्वनिष्ठं नास्तीत्यर्थः । [6]सामान्यविशेषनयोऽभिप्रेतः ॥

**एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां ... ... ... 'अयमात्मा सुखी' इत्यात्मशब्दाभिधान इत्यलमति-विस्तरेण ॥** (१०४-१०५)

परोक्तनिर्वाहादुक्तनिर्वाहस्य को विशेष इत्यत्राह — **एवम्** इति । अस्मदुक्तनिर्वाहः श्रुतानुगुणः श्रौतश्च ; परोक्तस्तु अश्रुतः श्रुतिविरुद्धः कुतर्क-

---

1. तत्पूर्वावस्थरूपं-अ.
2. तत्तदवस्थनियमनं-क.
3. शेषत्वम् । निर्गुणश्रुत्यर्थ-ग.
4. उपहरति-अ.
5. विनार्थम्-अ.
6. सामान्यविशेषन्यायो-ग.

मूलश्च इत्यर्थः । **अन्यस्य** इति । भेदाभेदत्वनिष्ठभेदोक्तिः । **अपन्याय-मूलस्य** इति साधारणम् । उक्तार्थं वैदिकदृष्टान्तेनोपपादयति — **चिदचित्** इति । आग्नेयादियागेषु अन्यतमत्वाचिशब्देन समुदायाभिधानं न दृष्टम्; तदत्र कथमित्यत्राह — **चिदचिद्वस्तु** इति । [1] निदर्शयति — **यथा** इति । तत्र न मिथः प्रकारप्रकारिभावः । अत्र तु तथाभावाद्युक्तम् । तच्च निष्कृष्टस्य कारणत्वानुपपत्तिरूपार्थसामर्थ्यात् । शब्दसामर्थ्यं चास्ति; विशिष्टस्य सत्त्वबृहत्त्वयोगात् आत्मशब्दस्य व्याप्यसापेक्षत्वात् सद्ब्रह्मात्म-शब्दा हि विशिष्टोपस्थापनक्षमाः ॥

## ७. निवृत्त्यनुपपत्तिः ।

**यत्पुनरिदमुक्तम् – ब्रह्मात्मैकत्वविज्ञानेनैव अविद्यानिवृत्तिर्युक्ता इति ... ... ... ... ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधन-मित्युपदेशाच्च ॥** (१०५–१०६)

अथ निवृत्त्यनुपपत्तिं वक्तुमनुवदति — **यत्पुनः** [2] इति । दूषयति — **तत्** इति । प्रथमं धीनिवर्त्यत्वं दूषयति — **बन्धस्य** इति । अर्थक्रिया-कारित्वात उत्पत्तिमत्त्वात् पापप्रायश्चित्तशास्त्राच्च न बन्धमिथ्यात्वम् [3] इतरेषा-ममिथ्यात्वं प्रामाणिकत्वात् इति भावः । असत्यस्य हेतुत्वायोगमुत्पत्त्यभावं च प्रागुक्तमुपजीव्योक्तम् । त्वयाऽपि [4] ज्ञानान्मोक्षो वाच्य इत्यत्राह — **एवम्** इति । सत्यस्य सर्पस्य तार्क्ष्योपासनादिनिवर्त्यत्ववत् अदृष्टद्वारा निवर्त्यत्वं बन्धस्य सत्यस्य [5] सहेतुकस्य अस्मन्मते युज्यते इत्यर्थः । अथ पराभिमत-बन्धनिवर्तकधियः[6] पराभिमतब्रह्मात्मैक्यविषयत्वं व्युदस्यति — **भवद्** इति ।

---

1. तन्निदर्शयति–ग. 2. इत्यादिना–ग.
3. तेषां मिथ्यात्वाप्रामाणिकत्वात्–क. तेषां प्रामाणिकत्वम्–ग.
4. ज्ञानिनां–ग. 5. सत्यहेतुकस्य–अ.
6. निवर्तकधियां–अ.

[1] अयथाविषयत्वे मानमाह — मिथ्यैतत् इति । तद्यथा फलति तथा भेदधिय उपायत्वं मानसिद्धमित्याह — उत्तम इति । [2] स्मृतित्वसङ्गत्या प्रागुक्तिः स्पष्टतरोक्त्या वा ॥

**अपि च भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात् ... ... ... निवर्तकज्ञानोत्पत्तिरेव न स्यात्, तद्विनाशे तिष्ठति तदुत्पत्त्यसंभवात् ॥ (१०६)**

मानविरोधमुक्त्वा तर्कविरोधमाह — **अपि च** इति । [3] विषनाशकविषान्तरादिवदिति शङ्कते — **निवर्तक** इति । व्युदस्यति — **न** इति । विनाशस्य ब्रह्मान्यत्वे दूषणमाह — **तत्** इति । स्वाभावार्थोत्पत्त्यादेरिवेति भावः । अनन्यत्वं शङ्कते — **तद्विनाश** इति । दूषयति — **तथा** इति ॥

**अपि च — चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता ? .... .... भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यात् इत्यलमनेन दिष्टहतमुद्गराभिघातेन ॥ (१०६–१०७)**

[4] ज्ञातृत्वदूषणमाह — **अपि च** इति । मानजा धीः साश्रयैवेति भावः । **कोऽयमिति** — [5] अतिरिक्तोऽनतिरिक्तो वेति धर्मिविकल्पः । अतिरिक्तत्वेन अध्यस्तरूपत्वं शङ्कते — **अध्यास** इति । [6] कर्मणि क्विबन्तं तद्दूषयति — **न, तस्य** इति । स्वरूपपक्षे धर्मं विकल्पयति — **किम्** इति । **स्वरूपम्** — स्वाभाविकम् । धीस्थं पाश्चात्यं दूषयति — **अध्यस्तं चेत्** इति ।

1. अथाविषयत्वे–**अ**.
2. स्मृतितः सङ्गत्या प्रागुक्तास्पष्टतरोक्त्या वा–**ग** ;
   ... स्पष्टतयोक्त्या वा–**ग**.
3. विषविनाशनविष–**अ**. 4. ज्ञातृदूषणम्–**क**.
5. अतिरिक्तो नातिरिक्तो–**ग**.
6. कर्मणि घञ् । दूषयति–तस्येति–**क**.

स्वरूपपक्षं व्युदस्यति– ब्रह्म इति। **निवर्तक** इत्यादि [1] स्फुटम्। न स्वनाश-प्रवृत्त्ययोगदोषः, ब्रह्मस्वरूपस्यैव [2] तन्नाशत्वादित्याशंक्य दूषयति — **तन्नाशस्य** इति ॥

**तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वात् बन्धस्य तन्निबर्हणम् ... ... ... कर्मविचारानन्तरं ततः एव हेतोः ब्रह्मविचारः कर्तव्य इति 'अथातः' इत्युक्तम् ॥** (१०७)

ततः किं परमप्रकृतस्य ब्रह्मविचारस्य कर्मधीसापेक्षत्वस्य इत्यत्राह — **तस्मात्** इति। **तस्मात्** — [3] अमिथ्यात्वात् बन्धस्य तन्निवर्तने धियः कर्मानपेक्षत्वरूपस्य वस्तुसामर्थ्यस्यासिद्धेः। **कर्म** इति [4] अनिर्वाच्यव्युदासः। **प्रवाह** इति + स्वरूपानादिव्युदासः। **उक्तलक्षण** इति — वाक्यार्थ-धीव्युदासः। ततः किमित्यत्राह — **केवल** इति। फलद्वारा हानार्थं स्वरूपेणोपादानार्थं चापेक्षितमित्यर्थः। [5] सूत्रस्य अक्षरयोजनां निगमयति — **इति कर्मविचार** इति ॥

इति महासिद्धान्तः।

---

## जिज्ञासाधिकरणम्।

### पूर्वपक्षः।

**तत्र पूर्वपक्षवादी मन्यते — वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्वशक्त्यवधारणासंभवात् ... .... ... कर्मफलाल्पास्थिरत्व-ब्रह्मज्ञानफलानन्तस्थिरत्वज्ञानहेतुको ब्रह्मविचारारंभो न युक्त इति ॥** (१०७-१०८)

---

1. स्पष्टम्-क  2. नाशत्वम्-अ.
3. मिथ्यात्वात्-अ.  4. अनिर्वाच्यत्व-अ.
5. सूत्राक्षरयोजनां-ग.

परोक्ताक्षरयोजनाव्युदासेन तत्कल्पिततात्पर्यार्थोऽपि व्युदस्तः [1]अतः सूत्रकृतस्तात्पर्यार्थं वदन् प्रथमं [2]तन्निरसनीयां शङ्कामुन्नयति — **तत्र** इति । विशिष्टे ब्रह्मविचारहेतौ [3]विशेष्यांशासिद्धिं शङ्कते । **तत्र** — बन्धस्य सकारणस्य सत्यत्वे स्थिते । **वृद्ध** इति । अनुवृत्तशब्दस्यानुवृत्तो व्यावृत्तशब्दस्य व्यावृत्तोऽर्थ इति पश्चात् प्रातिस्विकव्युत्पत्तिः । भाट्टोक्त-प्रकारमाशङ्क्य व्युदस्यति — **न च** इति । 'कः कूजति ?' 'पिकः कूजति' 'काष्ठैः स्थाल्याम्' [4]इत्यादि नैयायिकाद्युक्तं व्युदस्यति — **नापि** इति । **तदंशः** — कार्यांशः, पदसमुदायांशो वा । मृषावाद्युक्तं व्युदस्यति— **न च सर्वात्** इति । [5]कार्यान्वितोऽर्थश्चेत् कार्यपदेषु, कार्यरूपोऽर्थश्चेत् कारकपदेषु, कारकान्वितोऽर्थश्चेत् तेष्वननुगम इत्यन्यान्वितपदानाम् अनुगतो-ऽर्थ इति अन्यान्वितः सिद्धोऽपि पदवाच्यः इति सिद्धेऽपि [6]व्युत्पत्तिः स्यादिति वाचस्पत्युक्तमाशंक्याह — **कार्य** इति । **व्याप्तिबलेन सर्वपदानाम्** इत्यन्वयः । प्रवर्तकार्थावबोधित्वेऽवगते सति, प्रवृत्तेः [7]कार्यधीव्याप्यत्वात् सर्वपदानां कार्यपरत्वम् । तत्र विशिष्टकार्यैकदेशः [8]पदानामर्थ इत्यर्थः । [9]उक्तव्याप्तिभङ्गमाशंक्याह — **इष्ट** इति । विशिष्टस्य ब्रह्मविचारारंभहेतोः विशेषणासिद्धिमाह — [10]**परि** इति । वेदस्य कार्यार्थत्वेऽपि न विशेषणा-सिद्धिः, विधिशेषार्थवादादिषु तत्प्रतीतेरित्यत्राह — **अक्षय्यम्** इति । तर्हि विशेष्यासिद्धिः स्यादित्यर्थः । विशिष्टहेत्वभावेन पूर्वपक्षं [11]परिसमापयति — **कर्म** इति ॥

---

1. अथ-ग.    2. तन्निरसनीयांशम्-ग.
3. विशेषणांशासिद्धिः शंक्यते-अ.    4. इत्यादिकं-क.
5. कार्यान्वितार्थश्चेत् कारकपदेषु कारकान्वितार्थश्चेत् तेषु-ग.
6. शक्तिः-ग.    7. कार्यव्याप्यत्वात्-ग.
8. पदार्थः-ग.    9. उक्तव्याप्तिमाशंक्याह-ग.
10. परिनिष्पन्न इति-ग.    11. समापयति-ग.

**अत्राभिधीयते-निखिललोकविदितशब्दार्थसंबन्धावधारणप्रकार-मपनुद्य ... ... ... ... ... ... ... परं ब्रह्म तदुपासनं चापरिमितफलं बोधयन्तीति तन्निर्णयफलो ब्रह्मविचारः कर्तव्यः ॥**

**अत्र** इति। सूत्रकृता इति शेषः। **निखिल** इति। त्वयापीति भावः। कथं तदवधारणमित्यत्राह — **एवम्** इति। **माता** इति। [1] क्षमदशायामप्यनुपेक्षकाः कथमक्षमदशायामुपेक्षन्ते इति भावः। **अम्ब** इत्यादिः सप्रतियोगिकः शब्दः, अन्यस्तु अप्रतियोगिकः। अम्बादिशब्दव्युत्पत्ति-प्राथम्यं त्वन्मतेऽनुपपन्नमिति भावः। **बहुशः** — [2] यावद्वासनाभूयस्त्वम्। **सङ्केतयितृ** इति। सर्वे प्रयोगान्न मात्रादयः सङ्केतयन्ति, नाप्यन्ये, अनुपलब्धेरिति भावः। [3] बोध्यबोधकभावः एव संबन्धः। अस्यायमर्थ इति व्युत्पत्तिमाह — **पुनश्च** इति। यादृच्छिकव्युत्पत्तावपि तत्सिद्धिमाह — **प्रकारान्तरेण** इति। चेष्टाज्ञानस्य [4] शब्दानपेक्षत्वायाह — **मूकवत्** इति ॥

**कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव। कथम्? ... ... अपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः ॥**

अभ्युपगम्याह —**कार्यार्थत्वेऽपि** इति। फलतया सिद्धिरिहोच्यते। [5] तात्पर्यज्ञापनाय बहूदाहरणम्। अपूर्वकार्यं [6] विशिंषन् **विषयः** भावार्थः। **यस्य** कार्यस्य उपासनं विषयः तस्मिन् कार्ये **अधिकृतस्य** पुरुषस्य **फलत्वेन ब्रह्मप्राप्तिः श्रूयते** इत्यर्थः। [7] विधिस्थस्य फलस्यार्थवादिकविशेषणस्वीकारं

1. अक्षमदशायां...कथं क्षमदशायां-ग.
2. यावद्वासनाश्रयत्वं--अ.
3. बोध्यबोधकभावसंबन्धे-ग.
4. शब्दानपेक्षत्वम्-ग.
5. इति तात्पर्य-ग.
6. विशिक्षन्-अ. विसिन्वन्-ग.
7. विधिन्यस्तस्य-ग.

दर्शयति— **दुःख** इति । फलस्वरूपस्यैवार्थवादिकत्वमाह— **रात्रि** इति । विधेयविरोधिफलस्य तथात्वमाह— **अपगोरण** इति ॥

**'गामानय' इत्यादिष्वपि वाक्येषु न कार्यार्थे व्युत्पत्तिः ... ... ... तस्मादिष्टत्वातिरेकिकृत्युद्देश्यत्वानिरूपणात् कृतिसाध्यताकृतिप्रधानत्वरूपकार्यं दुर्निरूपमेव ॥**

प्रवर्तकवाक्येऽपि पराभिमतकार्यासिद्धिमाह— **गाम्** इति । **कार्यार्थे**— त्वदभिमते कृत्युद्देश्यत्वलक्षणे । कृतिजन्यस्वेदादिव्यावृत्त्यर्थं क्रियाकार्येऽप्युद्देश्यत्वं स्वीकार्यम् । तच्च त्वदुक्तमयुक्तमिति न [1]तल्लक्षणे व्युत्पत्तिरित्यर्थः । फलभावार्थसाधारण्यात् इष्टत्वकृतिसाध्यत्वयोः तद्व्यावर्तकं कृत्युद्देश्यत्वं तृतीयाकारं परोक्तं व्युदस्यति— **कृति** इति । [2]कर्मत्वमिष्टत्वे पर्यवसितमित्याह— **कृतिकर्मत्वम्** इति । तच्च न त्वदभिमतस्येत्याह— **इष्ट** इति । कृतिकर्मत्वं नाम प्रवर्तकत्वमित्यत्राह— **तत्र** इति । **प्रयत्नेच्छुः**— कृतीच्छुः । चिकीर्षुः कृतिमुत्पादयतीत्यर्थः । इष्टस्यैव इच्छाविषयत्वं प्रेरकत्वं चास्ति । तत्र प्रेरकत्वमुद्देश्यत्वमित्यत्राह— **इच्छा** इति । अनुकूलत्वपक्षं व्युदस्यति— **न च** इति । सुखेतरस्याप्यनुकूलत्वमस्तीत्यत्राह— **न च दुःख** इति । उपपादयति— **पुरुष** इति । तर्हीष्टत्वं कथमित्यत्राह— **दुःखस्य** इति । तदुपपादयति— **अनुकूल** इति । दुःखनिवृत्तिरनुकूला चेत् सुषुप्तावपि सुखप्रसङ्ग इति भावः । सुखार्थत्वादनुकूलत्वमित्यत्राह— **न** इति । न हि [3]घटार्थं दण्डचक्रादिकं घट इति भावः ॥

शेषित्वपक्षं दूषयति— **न च** इत्यादिना । **उद्देश्यत्वस्यैव** इति । उद्देश्यनिरूपणस्योद्देश्यसापेक्षत्वात् आत्माश्रय इत्यर्थः । अयोगव्यवच्छेदे

---

1. तल्लक्षणाद्युपपत्तिः-क; तल्लक्षणे ह्युत्पत्तिः-ग.
2. कृतिकर्मत्वम्-ग.
3. घटार्थंदण्डचक्रादिकं-ग.

अतिव्याप्तिमाह[1]— **प्रधानस्यापि** इति । अन्ययोगव्यवच्छेदे त्वव्याप्तिमाह—**भृत्योऽपि हि** इति । कार्यप्रतिसंबन्धित्वेऽप्यात्माश्रयमाह — **कार्यं** इति । प्रयोजनत्वपक्षं दूषयति — **नापि** इति । **पुरुषस्य** इति । न हि प्रयत्नश्चेतन इति भावः । **कृतिसाध्यताकृतिप्रधानत्वस्वरूपम्** — विशेष्यदुर्निरूपत्वेऽपि विशिष्टलक्षणासिद्धिरिति भावः ॥

**नियोगस्यापि साक्षादिषिविषयभूतसुखदुःखनिवृत्तिभ्यामन्यत्वात् ... ... ... ... अर्थवादादिष्वपि स्वर्गादिसुखप्रकारकीर्तनवत् नियोगरूपसुखप्रकारकीर्तनं भवताऽपि न दृष्टचरम् ॥ (११०–१११)**

अथ साक्षादिष्टत्वं तन्मूलकृति[2] साध्यत्वमपि व्युदस्यति — **नियोगस्य** इति । उपपादयति — **अत एव** इति । विपक्षे बाधमाह — **अन्यथा** इति । उक्तं विवृणोति— **स्वर्ग** इति । [3] 'आत्मसिद्ध्यनुकूलस्य' इत्यादिग्रन्थस्यार्थमाशंक्याह — **अतः** इति । **अतः** इत्यभिप्रेतं विवृणोति — **स्वर्ग** इति । एकपदश्रवणे क्रियैव प्रतीता ; समभिव्याहारे स्वर्गसाधनतयैवेत्यर्थः । व्युत्पत्तावेव साधनत्वोल्लेखः, व्युत्पन्नस्य तु अनन्यार्थतया प्रतीयत इत्यत्राह — [4] **सुख** इति । सुखदुःखनिवृत्त्यन्यतया स्वत इष्टत्वेन कृतिसाध्यत्वमयुक्तम् । [5] तत्साधनत्वाभावात् परंपरयेष्टत्वेनापि कृतिसाध्यत्वमयुक्तमित्यर्थः । उक्तदोषपरिहाराय नियोगस्य सुखरूपत्वमाशंक्य व्युदस्यति— **अपि च** इति । **सुखान्तरम्** — भौमसुखात् स्वर्गसुखवदिति भावः । स्वानुभवः, लौकिकवाक्यम्, वेदे च काम्यनित्यनैमित्तिक[6] वाक्यानि न मान-

---

1. आह–न भृत्योऽपि–अ. 2. साध्यत्वं च–ग.
3. आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये । कुर्वत् स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥ '' —पञ्चिकायाम् ।
4. सुख इति । दुःखनिवृ–अ. 5. तत्साधनत्वाभासात्–अ
6. वाक्यानि च न–ग.

मित्युक्तम् । योग्यानुपलब्धिमाह — **नियत** इति । फलस्य नियतत्वम् अप्रतिबन्धत्वम् । **नियतैहिकफलस्य** इत्यनेन अन्त्येष्टिसापेक्षयज्ञाद्यपूर्वव्युदासः । **अर्थवाद** इत्यादि स्फुटम् ॥

**अतो विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रम् … … … … ब्रह्मज्ञानस्य चानन्तस्थिरफलत्वात् तन्निर्णयफलो ब्रह्मविचारारंभो युक्त इति स्थितम् ॥** (१११–११२)

अथ कृतिसाध्यत्वमपि व्युदस्यति— **अतः** इति । किं शब्दस्वारस्यात्, उत विधेः पुरुषार्थपर्यन्तत्वाय, उत परंपरया पुरुषार्थपर्यन्तत्वाय धात्वर्थोत्तीर्णकार्यस्य वाच्यता इति विकल्पं मत्वा पूर्वशिरोद्वयं दूषितम् [1]**अतः** इति । **अतः**— सुखरूपत्वस्यामानकत्वात् । परंपरया पुरुषार्थपर्यन्तत्वमित्यत्राह — **धात्वर्थस्य च** इति । [2]"यज देवपूजादौ" इति भावः । हेतौ [3]विशेष्यसिद्धिमाह— **अतः** इति । [4]**अतः**— सिद्धे व्युत्पत्तेः, तदभावेऽपि फलतया सिद्धेः । [5]विशेषणांशसिद्धिमाह— **चातुर्मास्य** इति । आवृत्तिविधानं [6]चाभिप्रेतम् ॥

अधिकरणार्थमुपसंहरति — **अतः** इति । शास्त्रं विषयः । [7]आरम्भणीयो न वा इति संशयः । सिद्धे [8]व्युत्पत्त्यभावात् इति पूर्वः पक्षः । [9]सद्भावात् इति सिद्धान्तः । प्रारंभः फलम् ॥

इति जिज्ञासाधिकरणम् ।

---

1. अत इति । सुखरूप–ग.
2. "यज देवपूजायाम्" इत्यादौ–ग.
3. विशेषणसिद्धिम्–अ.
4. अतः सिद्धेः, व्युत्पत्तेः–ग.
5. विशेष्यसिद्धिमाह–अ.
6. चाभिहितम्–ग.
7. अनारंभणीयो–अ
8. व्युत्पत्त्यभावात् पूर्वपक्षः–अ.
9. सद्भावात् सिद्धान्तः-अ.

## २ जन्माद्यधिकरणम् ॥

कि पुनस्तत् ब्रह्म यज्जिज्ञास्यमुच्यत इत्यत्राह –

## जन्माद्यस्य यतः ॥ १-१-२ ॥

... परस्मात् पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते तत् ब्रह्मेति सूत्रार्थः ॥ (१२१)

अवान्तरसङ्गतिमाह—**किं पुनः** इति । सकलेतरत्रिवर्गतत्साधनत्याग-पूर्वकं यत् जिज्ञास्यमुक्तं, तन्निरतिशयबृहद्वस्तु [1]किंलक्षणकमित्यर्थः । “अग्निः सर्वा देवताः,” “आपो वा इदं सर्वम्” “ब्राह्मणो वै सर्वा देवताः” “नकिरिन्द्र त्वदुत्तरः” इत्यादिना अग्नीन्द्रादीन् प्रत्येकं निरतिशय-बृहत्त्वेन प्रतिपादयतां वाक्यानां व्यावालकर्मविधिशेषत्वाभ्यामन्यपरत्वात् अनन्यपरसृष्टिप्रलयप्रकरणेषु निरतिशयबृहत्त्वेनोक्तं वस्त्वेव [2]मुमुक्षोर्जिज्ञास्यम् इति “यतो वा इमानि” इत्यादिश्रुतेरभिप्राय इति सूत्रहृदय[3]मिति भाष्यभावः । सूत्रमुपादत्ते — **जन्माद्यस्य यतः** इति ॥

पृथग्वाक्यसापेक्षत्वेन वाक्यार्थयोजनायामन्तर्भावयितुमशक्यत्वात् प्रथमं पृथक् व्याचष्टे — **जन्म** इति । एकवचनतात्पर्यद्योतनाय इतिकरणम् । तच्च जन्मादिसमुदायस्य लक्षणत्वद्योतनाय । अन्यथा एकतरवैयर्थ्यलक्ष्य-बहुत्वश्रुतिस्वारस्यभङ्गाः स्युः । समाहारे द्वन्द्वः । न च ग्रहाधिकरण-नयविरोधः, तत्र प्रापकविरुद्धोद्देश्यविशेषणस्यापि उपलक्ष्यतोक्तिः, अन्यथा अष्टवर्षतायाः, त्याज्यत्वप्रसङ्गात् । न जन्मनो लक्षणान्तर्भावः, बहुव्रीहेरन्य-पदार्थप्रधानत्वेन न जन्मनो बहुव्रीह्यन्तर्भाव इत्यत्राह — **तद्गुण** इति । लम्बकर्णवत् सर्वादीनि इतिवच्च ॥

---

1. किंलक्षणम्-ग. 2. मुमुक्षूणाम् क.
3. इति भावः–क.

द्वितीयं व्याचष्टे — **अस्य** इति । व्याख्येयमिदम् । भूतशब्देन कार्येऽभिहितेऽपि श्रौतम् 'इमानि' इति पदं जगद्वैचित्रीपरम्, आभासता-परत्वे जिज्ञास्यत्वविरोधात् इति सूत्रकृद्विवक्षेत्यभिप्रयन् प्रथमं चिदचिन्मिश्रे जगति अचिदंशवैचित्रीमाह — **अचिन्त्य** इति । जीवकर्तृकतया चिन्तयितु-मेकैकशोऽशक्यम् । आकाशवाय्वादिसमष्टिरूपेण **विविधम्**; तद्व्यष्टिभिश्च **विचित्रम्** । चिद्वैचित्रीमाह — **नियत** इति ॥

तृतीयं व्याचष्टे — **यस्मात्** इति । [1]तसिलो विभक्तिवचनान्तर-साधारण्यात् **यस्मात्** इत्युक्तम् । अनुवादरूपयच्छब्दस्य प्रापकसिद्धाकार-परामर्शित्वात् [2]प्रापककारणवाक्यशोधकवाक्यसिद्धं [3]कारणत्वस्य प्राप्यतया प्रापकतया च जिज्ञास्यत्वस्य चोपयोगि गुणजातमाह — **सर्व** इत्यादिना । तत्र **ज्ञानानन्द** इति ध्येयत्वप्राप्यत्वोपयोगि । **परस्मात्** इति च प्राप्यत्वोपयोगि । अन्यत्सर्वं कारणत्वोपास्यत्व[4]प्रापकत्वोपयोगि इति द्रष्टव्यम् । **सर्वेश्वरात्** — अनेन ईश्वरादर्वाचीनस्य [5]प्रधानादेरुत्तीर्णस्य ब्रह्मणो व्युदासः । अत्र "तमीश्वराणां परमम्" "स कारणम्" इत्यादिवाक्यार्थो विवक्षितः ॥

अथ शोधकार्थमाह — **निखिल** इति । जन्मवृद्ध्यादि क्लेशादि च **निखिलम्** । **प्रत्यनीक** इति न विरहमात्रम् । कथं प्रत्यनीकत्वम्? विकारादिः श्रूयते इत्यत्राह — **स्वरूपात्** इति । शरीरांशो विवक्षितः । विकारादिकं शरीरभूतचिदचिद्द्वारकमिति भावः । प्रत्यनीकं चेत् देहेऽपि तन्न स्यादित्यत्राह — **सत्य** इति । इच्छानुरूपं तत्र तत्र स्थापनविमोचनक्षम इत्यर्थः । एवम् 'अपहतपाप्मा' इत्यादिवाक्यस्यार्थ उक्तः । स्वरूपमाह — **ज्ञान** इति । भावप्रधाननिर्देशः 'द्व्येकयोः' इतिवत् । [6]**आदि** शब्दार्थः

---

1. एवं तसिलो **ग** 2. प्रापककारणशोधक–**ग.**
3. कारणस्य–**ग.** 4. प्राप्यत्वोपयोगि **अ.**
5. प्रधानादेरुत्तीर्णस्य कारणत्वव्युदासः–**क**; प्रधानादेरुत्तीर्णब्रह्मणः–**ग.**
6. आदिशब्दात् सत्यत्वम् अनन्तत्वम् कृत्स्न–**अ.**

सत्यत्वम् अनन्तत्वं च । **अनन्तत्वम्** कृत्स्नवर्तित्वम् । अनेन 'विज्ञानमानन्दम्', 'सत्यं ज्ञानम्' इत्यादिवाक्यार्थो दर्शितः । धर्मभूतज्ञानाद्याह — **सर्व** इत्यादिना । अत्र 'यः सर्वज्ञः सर्ववित्', 'परास्य शक्तिः', 'परम कारुणिकः किल त्वम्' इत्यादि श्रुतिस्मृत्यर्थोऽभिप्रेतः । ज्ञानशक्ती निमित्तत्वोपादानत्वयोः उपासकहितज्ञानविरोधिनिरासयोश्चोपयुक्ते । **कारुणिकत्वं** च कारणत्व[1]मोक्षदत्वोपयोगि । **परस्मात्** इति प्राप्यान्तरव्युदासः । अनेन [2]'न ह्येतस्मादिति नेत्यन्यत् परमस्ति', 'यस्मात् परं नापरमस्ति किञ्चित्', 'परात् परं पुरुषमुपैति दिव्यम्' [3]इत्यादिवाक्यार्थः सूचितः । **पुंसः** इति देवताविशेषोक्तिः । सद्ब्रह्मात्मादिगिरां छागपशुन्यायात् नारायणपर्यवसानं प्रापक[4]नारायणानुवाकादिसिद्धम् अनुवादवाक्येऽपि गर्भितमिति सूत्राभिप्राय इति भावः । समाहारेतरयोगयोः फलैक्यात् बहुवचनोक्तिः । **सूत्रार्थः** — शब्दतः तात्पर्यतश्चेत्यर्थः ॥

## पूर्वः पक्षः

**"भृगुर्वै वारुणिः । वरुणं पितरमुपससार । ... ... ... ब्रह्मणोऽनेकत्वप्रसक्तेः । विशेषणत्वं हि व्यावर्तकत्वम् ॥** (१२१)

जन्मादीनां लक्षणत्वे तत्र जन्मान्तर्भावे समुदितानां [5]लक्षणत्वे च किं मानमिति शङ्कायां विषयमाह — **भृगुर्वै** इति । अर्थवादरूपतात्पर्यलिङ्गं प्रकरणस्यानन्यपरत्वं च ज्ञापयितुं **भृगुर्वै** इत्याद्युपात्तम् । श्रुतिरेवेत्थं वक्ति चेत् किं सूत्रेण इत्याशंक्य सूत्रकाराभिप्रेतं संशयमाह — **तत्र** इति । सन्दिग्धे हि न्यायप्रवृत्तिः । तत्र पूर्वपक्षं प्रतिजानाति — **न शक्यम्** इति । जन्मादीनां

---

1. मोक्षत्वोपयोगि-ग. 2. एकस्मादिति-ग.
3. इत्यादिश्रुत्यर्थोऽत्र-ग. 4. नारायणानुवाकसिद्धम्-ग.
5. लक्षणत्वे वा-क.

ब्रह्मलक्षणत्वं किं [1]विशेषणतया उपलक्षणतया वा इति विकल्पमभिप्रेत्य प्रथमं दूषयति—**न तावत्** इति । कुत इत्यत्राह — **अनेक** इति । कथं तत्प्रसक्तिरित्यत्राह— **विशेषणत्वम्** इति ॥

**ननु– 'देवदत्तः श्यामो युवा लोहितक्षः ... ... ... त्रिलक्षयिषिते वस्तुनि एषां विशेषणानां संभूय लक्षणत्वमप्यनुपपन्नम् ॥**

(१२१–१२२)

सिद्धान्तिच्छायया चोदयति — **ननु** इति । परिहरति — **नैवम्** इति । **उपसंहारः**— पर्यवसानम् । **अन्यथा** —मानान्तरेण ऐक्यबुद्ध्यभावे । पक्षे वैषम्यमाह —**अत्र तु** इति । **अवर्जनीयम्** — "एकमेवाद्वितीयम्" इत्यादावपि विशेषणभेदात् बहुत्वम् 'एको व्रीहिः' इत्यादिवत् स्यादिति भावः । न परं प्रत्यक्षादेव ऐक्यधीः, अपि तु एकवचनान्त[2]धर्मिवाचिपदैक्याच्च इति शङ्कते — **ब्रह्मशब्द** इति । न हि ब्रह्मशब्दावृत्तिः, ब्रह्माणि इति वा उक्तिरिति भावः । परिहरति— **न** इत्यादि । [3]**अज्ञातगोः** — अप्रत्यक्षगोः । एकवचनान्तधर्मिपदैक्यं खण्डादिवाक्ये व्यभिचारि । तत्र शाब्दमैक्यं [4]प्रत्यक्षापोदितमिति न शक्यं वक्तुम्, अप्रत्यक्षविषयेणापि खण्डादिवाक्येन विशेष्यबहुत्वप्रतीतेरित्यर्थः । प्रत्येकं वा संभूय वा लक्षकत्वमिति विकल्पं मत्वा पूर्वः कल्पः प्रत्युक्तः । अथ द्वितीयं व्युदस्यति — **अत एव** इति । **अत एव** — एकैकस्य विशेषणस्य प्रत्यक्षाविरोधे सति विशेष्यभेदकत्वेन व्युत्पत्तेरित्यर्थः ॥

**नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः ... ... अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति ॥** (१२२)

1. विशेषणविधया उपलक्षणविधया–ग.

2. धर्मिवाचकपद–ग. 3. अज्ञातगोव्यक्तेः-ग.

4. प्रत्यक्षावेदितम्–ग.

अथ उपलक्षणपक्षं दूषयति — **नापि** इति । कथं तृतीयाकार-प्रतीत्यपेक्षेत्यत्राह — **उपलक्षणानाम्** इति । देवदत्तसंबन्धो लक्ष्याकारः, केदारत्वं प्राक् प्रतीताकारः, सारससंबन्धः उपलक्षणभूतः इत्यर्थः । तृतीयाकारधीरस्तीति चोदयति — **ननु** इति । परिहरति — **न** इति । सत्यत्वादिकं विशेषणं चेदुक्तदोषः स्यात्; उपलक्षणं चेत् तृतीयाकार-ज्ञप्त्यर्थं 'यतो वा' इत्यादिवाक्यसापेक्षत्वात् अन्योन्याश्रय इत्यर्थः । **अतः** इत्युपसंहारः ॥

## सिद्धान्तः

**एवं प्राप्तेऽभिधीयते — जगत्सृष्टिस्थितिप्रलयैः ... ... ... जन्मादीनां तथा प्रतिपन्नस्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः ॥** (१२२-१२३)

**एवम्** इति । [1]सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते तदभिप्रेतस्तत्परिहार उच्यते इत्यर्थः । **उपलक्षणभूतैः** इति — [2]चरमनिर्दिष्टस्य धीस्थत्वादित्थ-मुक्तम् । ज्ञाप्यबहिर्भूतं तद्व्यवच्छेदकम **उपलक्षणम्** । तृतीयाकाराप्रतिपत्ति-माशंक्याह — **न च** इति । उपलक्ष्याकारमाह — **उपलक्ष्यम्** इति । कथं निरतिशयबृहत्त्वधीरित्यत्राह - **बृहतेः** इति । [3]'मनिन्' प्रत्ययान्तस्येति हृदयम् । उपलक्षणाकारमाह — **तत्** इति । केदारस्य सारसेनेव ब्रह्मण उपलक्षणाकारेण कः संबन्ध ? उपादानभूतब्रह्मणोऽन्यस्य निमित्तत्वे बाह्यमत-प्रसङ्गः इति शङ्काद्वयं परिहरन् तृतीयाकाराक्षेपकं वाक्यमवतारयति — [4]**यतो येन** इत्यादिना । ततः किमित्यत्राह — **प्रसिद्धिश्च** इति । निमित्तो-

---

1 सुत्रकाराभिमते पूर्वपक्षे प्राप्ते तत्परिहारः-ग.

2 चरमोक्तस्य-क. 3 मनिन्नन्तस्य-अ

4 येन इत्यादिना । विवक्षितमाकारान्तरमाह जगदिति-अ. (अध्ये ग्रन्थपात इव) ।

पादानकारणत्वं पदानामन्वयेन दर्शयति — **तदपि** इति । तेन फलितं संबन्धमाह — **तस्मात्** इति । हेतुहेतुमद्भावः संबन्धः । अथ तदाक्षिप्तं [1]तृतीयाकारमाह — **जगत्** इति । **उपलक्ष्यं हि** इत्यादेरेवं वाऽर्थः — निरतिशयबृहत्त्वम् **उपलक्ष्यम्** । तदेकदेशरूपबृहत्त्वमात्रं पूर्वप्रतिपन्नाकार इत्यर्थसिद्धम् । देवदत्तकेदारत्वमुपलक्ष्यम् । केदारत्वमात्रं हि प्राक् प्रतीतम् । न च देवदत्तसंबन्धमात्रमुपलक्ष्यम् अतिप्रसङ्गात् । उपलक्षणाकारमाह — **तत्** इति । [2]प्रागुक्तं शङ्काद्वयं परिहरन् व्यतिरिक्ताकारान्तरं च विवक्षन् तस्याक्षेपकवाक्यं चावतारयति — **यतो येन** इत्यादिना । विवक्षित-माकारान्तरमाह — **जगत्** इति । पूर्ववदन्यत् ॥

**जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि ... ... अत्र तु कालभेदेन जन्मादीनां न विरोधः ॥** (१२३)

अथ विशेषणतया लक्षणत्वमुपपादयति — **जगज्जन्मादीनाम्** इत्यादिना । व्याप्यान्तर्भूतं तद्व्यवच्छेदकं **विशेषणम्** । अपवादकाभावे विशेषणभेदो विशेष्यभेदक इत्यत्राह — **लक्षण** इति । **स्वविरोधि-व्यावृत्तम्** — नियतभिन्नाश्रयविशेषणाश्रयात् व्यावृत्तम् । बहुत्वापवादका-भावे सति विशेषणत्वमेव विरोधित्वमित्यत्राह — [3]**अज्ञातेऽपि** इति । अयं ग्रन्थः सपक्षविषयः । 'देवदत्तः श्यामो युवा' [4]इत्यादिकमभिप्रेतम् । **अज्ञाते** — अप्रत्यक्षे । अप्रत्यक्षविषयेऽपि खण्डादिवाक्ये विशेष्यबहुत्व-प्रतीतेस्तत्र विशेष्यभेदो विशेषणभेदायत्तनिर्णयः, न प्रत्यक्षायत्तनिर्णयः इति यदुक्तं पूर्वपक्षे तत्रैवं प्रतिवक्तव्यम् । अप्रत्यक्षविषयादपि

---

1. तृतीयाकारसंबन्धमाह-ग.

2. प्रागुक्तशङ्काद्वयं च परिहरन् व्यतिरिक्ताकारं च विवक्षन् तस्याक्षेपकं वाक्यम्-ग.

3. अज्ञात इति-क.

4. इत्यादिकमुदाहरणमभि-क.

देवदत्तादिवाक्यात् विशेषणभेदेऽपि विशेष्यैक्यप्रतीतेर्न प्रत्यक्षबलादेव विशेष्यैक्यम्। किं तु शब्दतोऽपि निश्चेतुं शक्यमित्यर्थः। प्रत्यक्षाप्रत्यक्ष-विभागविरहेण [1] विशेष्यबहुत्वैक्ये दृष्टे चेत् को नियामक इत्यत्राह — **विशेषणानाम्** इति। अनियतभिन्नाश्रयदृष्टसजातीय विशेषणभेदस्य विशेष्यैक्यप्रतीत्यविरोधादित्यर्थः। [2] सपक्षे ऐक्यनियामकमुक्तम्। विपक्षे बहुत्वनियामकमाह — [3] **खण्डत्व** इति। पक्षे तद्वैषम्यमाह — **अत्र तु** इति। विशेष्यबहुत्वेऽपि कालभेदात् कार्येषु जन्मादीनामविरोधो वाच्यः। स त्वैक्यपक्षेऽपि तुल्य इति भावः॥

**'यतो वा इमानि भूतानि जायन्ते' इत्यादिकारणवाक्येन … … सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते इति सिद्धम्॥ (१२३)**

अथ सत्यादिवाक्यस्य स्वरूपलक्षणपरत्वं प्रागुक्तान्योन्याश्रयपरिहारं चाह — **यतो वा** इत्यादिना। **आदि** शब्दात् प्रापकवाक्यं विवक्षितम्। कथं [4] व्यावृत्ताभिधानमित्यत्राह — **तत्र** इति। निरुपपदत्वात् स्वरूपतो धर्मतश्चैकरूप्यविवक्षेति भावः। व्यावर्त्यमाह — **तेन** इति। अचिद्बद्धो-व्यावृत्तत्वं दर्शयति — **नाम** इति। **ज्ञान** इति। स्वरूपतो धर्मतश्च नित्यासंकुचितज्ञानत्वमेव आकारो यस्य सः **नित्यासंकुचितज्ञानैकाकारः**। **एक**शब्दः प्रदेशभेदेन जाड्यव्युदासकः। [5] तद्व्यावर्त्यमाह — **तेन** इति। **अनन्त** इत्यादि। सर्ववस्तुसामानाधिकरण्यार्हत्वं **वस्तवपरिच्छेदः**। इदं **स्वरूपस्यैव**, न गुणानाम्। [6] षड्वर्णात् षोडशवर्णस्वर्णस्येव स्वभावप्रकर्षो वा; स हि देशकाल[7] परिच्छेदविलक्षणः। स तु गुणानामप्यस्ति, तेषां

1. विशेषणबहुत्वे दृष्टे तर्हि को–ग.
2. सपक्षैक्ये नियामकम्–ग.
3. खण्डतेति–अ.
4. व्यावर्त्यमाह–ग.
5. तद्व्यावर्तकमाह–क
6. यद्वा षड्वर्णात्–ग.
7. परिच्छेदो विलक्षणवस्तुगुणानां–ग

[1] हेयापहत्वादिस्वभावप्रकर्षात्। **सातिशय** इति। [2] स्वरूपमणुत्वात् सातिशयम्; गुणाश्च जगद्व्यापारविषयत्वाभावात् सातिशयाः। पारतन्त्र्याच्च स्वातन्त्र्यरूपातिशयो हि परस्मिन् [3] विद्यते। व्यावृत्तिसिद्धौ हेतुमाह — **विशेषणानाम्** इति। सत्यादिवाक्यार्थं निगमयति — **ततः** इति। **स्वरूपम्** — असाधारणाकारः। **वस्तु** शब्देन विशेष्यं विवक्षितम्। अन्योन्याश्रयस्य [4] परिहृतत्वं दर्शयति — **इति** इति। कारणत्वशङ्कितदोषव्युदासकस्य [5] शोधकवाक्यस्य कारणवाक्य[6] पूर्वकत्वान्नान्योन्याश्रय इत्यर्थः। सत्यत्वादेः जन्मादिवत् विशिष्टलक्षणानुपपत्तिश्चार्थसिद्धा। विशिष्टं ह्युपास्यं प्राप्यं च। तस्य [7] लक्षणं 'तद्विजिज्ञासस्व' [8] इति ह्युक्तम्। विशिष्टलक्षणं न जन्माद्येवेति। अधिकरणार्थं निगमयति — **अतः** इति। **अतः** — उपलक्षणतया विशेषणतया च लक्षणत्वोपपत्तेः। **निरवद्यम्** इति जिज्ञास्यस्य हि लक्षणम्। अतः [9] तदुपयोगि शोधकोक्ताकारविशिष्टं 'यत' इत्यनूद्यत इति सूत्रकृदभिप्राय इति भावः। सर्वज्ञत्वादिकं कारणत्वाक्षिप्तम्॥

**ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति, तन्मते ... ... तथा सति सविशेषत्वम्। तदभावे प्रकाशतैव न स्यात्। तुच्छतैव स्यात्॥** (१२३–१२४)

अस्य सूत्रद्वयस्य [10] परपक्षासङ्गतिमाह — **ये तु** इति। कथमित्यत्राह— **निरतिशय** इति। 'बृहति बृंहयति' 'बृहत्त्वात् बृंहणत्वाच्च' इति

---

1. हेयप्रत्यनीकत्वादि-ग. 2. स्वरूपमणुत्वात्, गुणाश्च-अ.
3. विशेष्यते-क. 4. परिहृतिं दर्शयति ततः-क.
5. शोधकस्य कारण-अ. 6. पूर्वकत्वे न-ग.
7. लक्षणं च-क. 8. इत्युक्तम्-ग.
9. तदुपयोगिशोधकवाक्योक्त-ग. 10. परपक्षेऽसङ्गति-ग.

श्रुतिस्मृती अभिप्रेते । उत्तरसूत्राणामपि तथात्वमाह — **एवम्** इति । **तर्कश्च** इति । तर्कशब्दः [1] अनुमानपरोऽनुग्राहकन्यायपरो वा । परपक्षेऽपि निर्विशेषत्वा-सिद्धिमाह — **जगत्** इति । स्वोत्प्रेक्षापक्षे मृत्पिण्डादिदृष्टान्तदार्ष्टान्तिक-विषयश्रुतीनां 'निःसरन्ति यथा', 'कटकमकुट' इत्यादि[2]स्मृतीनां 'जन्मादि' 'परिणामात्' इत्यादिसूत्राणां च विवर्तानुगुणत्वादिति भावः । निर्विशेषा-सिद्धिमुपपादयति— **भ्रम** इति । ततः किमित्यत्राह— **साक्षित्वम्** इत्यादि। व्यवहारयोग्यतापादनमेव स्वभावो [3] धर्मः । अन्यत् स्पष्टम् ॥

इति जन्माद्यधिकरणम् ।

—:×:—

## ३. शास्त्रयोनित्वाधिकरणम् ॥

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यम् ... ... ॥

## शास्त्रयोनित्वात् ॥ १-१-३ ॥

... ... ब्रह्म "यतो वा इमानि" इत्यादिवाक्यं बोधयत्येवेत्यर्थः ॥ (१३०–१३१)

अथावान्तरसङ्गतिमाह — **जगज्जन्मादि** [4] इति । **वाक्य** इति । सामान्येन शब्दवेद्यत्वे सिद्धे हि शब्दविशेषरूपवेदान्तवेद्यत्वसिद्धिरिति भावः। निमित्तेऽनुमितेऽपि तदनुवादेन उपादानत्वविधिना शास्त्रावैयर्थ्यान्नानुमानं निरसनीयमिति चेत् — न, निमित्तमनुवदत आगमस्य प्रापकानुमान-सापेक्षत्वेन तद्विरुद्धोपादानताप्रतिपादनासंभवात् । न चागमविरोधेन अनुमि-

---

1. अनुमानपरो–क. 2. स्मृतीनां, 'परिणामात्'–ग.
3. धर्मः । स्पष्टम्–अ. 4. इति । सामान्येन–ग.

स्यनुदयः, कर्तृरूपधर्मिग्राहकानुमानस्य तद्गतोपादानत्वादिधर्मविधायकागमोपजीव्यत्वेन बलीयस्त्वात् । आगमोपजीविनो ह्यनुमानस्य तद्विरोधेऽनुदयः । आगमोपजीव्येन त्वनुमानेन [1] विरुद्धस्यागमस्यैव बाधः । यथा 'आदित्यो यूप' इत्यादेः प्रत्यक्षविरुद्धस्य तेन बाधः । [2] अतोऽशेऽनुवादोंशे बाधः इति शास्त्रवैयर्थ्यपरिहारायारम्भः । न चानुमानोक्तिः आगमानुग्राहकतयेति युक्तम्; आगमप्रामाण्यसिद्धौ ईश्वरसिद्धिः, तत्सिद्धौ आप्तप्रणीतागममानत्वसिद्धिः इत्यन्योन्याश्रयणात् । अतोऽधिकरणमारंभणीयम् । सूत्रमुपादत्ते —

## शास्त्रयोनित्वात् ।

व्याचष्टे — **शास्त्रम्** इति । 'कारण' शब्दस्य उत्पत्ति [3] ज्ञप्तिसाधारण्यादाह — **प्रमाणम्** इति । कारणपर्यायशब्दस्य कथं मानवाचित्वमित्यत्राह — **ब्रह्मज्ञान** इति । पञ्चम्यन्तस्य साध्यान्वयं दर्शयन् साध्याविशिष्टत्वशङ्कां च परिहरन् वाक्यार्थमाह — **अत्यन्त** इति । स्वरूपस्य लिङ्गस्य च इन्द्रियसंबन्धाभावः अत्यन्तातीन्द्रियशब्देनाभिप्रेतः । इतराविषयत्वं विवक्षितमिति न साध्याविशिष्टता इत्यर्थः । पूर्वसूत्रे साध्यमेव [4] अत्रापि साध्यमिति **एवकाराभिप्रायः** ॥

## पूर्वः पक्षः

**ननु शास्त्रयोनित्वं ब्रह्मणो न संभवति ... ... पुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते ॥ (१३१)**

पूर्वपक्षी चोदयति — **ननु** इति । मानान्तरवेद्यत्वे कथं शास्त्रवेद्यत्वमित्यत्राह — **अप्राप्त** इति । अबुभुत्सितग्राहित्वेन ज्ञाताप्रयोजन-

---

1. विरुद्धागमस्यैव-ग. 2. अतो अनुवादेंशे बाधः-ग.
3. ज्ञप्तिहेतुसाधार-क.
4. अत्रापत्तिस्तु शब्दाभिप्रेता-ख (मध्ये ग्रन्थपातः)

बोधनानुपपत्तिः तुशब्दाभिप्रेता । सिद्धान्त्येकदेशी चोदयति — **किं तर्हि** इति । **सन्निकर्षः** — देशासक्तिः । **विद्यमान**शब्देन कालसन्निकर्षसिद्धिः । **योग्यत्वम्** — स्वभावसन्निकर्षः । **स्व**शब्देन चक्षुरादिकं प्रति शब्दादिव्युदासः । **नापि** इत्यादि । अनुभूतानधिकविषयत्वे दूषणमाह — **भावना** इति । अधिकविषयत्वं दूषयति — **तदतिरिक्त** इति । **कारणम्** — इन्द्रियसंबन्धः । तत्सद्भावे दूषणमाह—**तथा** इति । **नापि** इति । स्पष्टम् ॥

**ननु च — जगतः कार्यत्वं तदुपादानोपकरण ... ... ... रथशिलामहीरुहादिषु व्यभिचारः । चेतनमात्राधीनत्वे सिद्धसाध्यता ॥ (१३१-१३२)**

सिद्धान्त्येकदेशिनं मीमांसकं पूर्वपक्ष्येकदेशी चोदयति — **ननु च** इति। **संप्रदानम्**-भोक्ता । प्रयोजनं-विनियोगः। एककर्तृकत्वे हेत्वन्तरमाह— **अचेतन** इति । उभयत्र [1] दृष्टान्तद्वयमाह — **सर्वं हि** [2] इति । प्रथमहेत्वसिद्धिं परिहरति — **सावयव** इति । पूर्वपक्ष्येकदेशिमतं सिद्धान्त्येकदेशी दूषयति — **उच्यते** इत्यादिना । **किं** क्षेपे । **तदायत्तत्वम्** — उत्पत्तिस्थित्योः प्रवृत्तौ वा । उत्पत्तिस्थित्योश्च तदिच्छाधीनत्वेऽभिमते दृष्टान्तः साध्यविकल इति सिद्धवत्कारेणादृष्टाधीनत्वे दूषणमुक्तम् । स्थितिं पृथक् दूषयति — **किं च** इति । **प्राणनम्** — पञ्चवृत्तिप्राणवत्त्वम् । **तदायत्त** इति। **व्यभिचारः** — अचेतनारब्धत्वहेतोरित्यर्थः ॥

**किं च-उभयवादिसिद्धानां जीवानामेव लाघवेन ... निवर्तकप्रमाणाभावात् तथैवावतिष्ठन्ते । अत आगमादृते कथमीश्वरः सेत्स्यति ॥ (१३२-१३३)**

कार्यत्वहेतोः सिद्धसाध्यतामाह — **किं च** इति । स्फुटम् ॥

---

1. दृष्टान्तमाह-क.   2. इति हेत्वसिद्धिं-ग.

कार्यत्वहेतोः सोपाधिकत्वमाह – **किं च** इति । **मही** इत्यादिना साधनाव्यापकत्वम् । **अतः** इत्यादिना साध्यसमव्याप्तिश्चोक्ता । [1] वैयाकरणाभिमतकर्तृत्वव्यावृत्त्यर्थं **बुद्धिमत्कर्तृ**शब्दः । [2] सकर्तृकत्वसाधकस्योपाधिकथनात् [3] सावयवत्वस्यापि तत् फलितम् । कृतिसाध्यत्वरूपे कार्यत्वे शक्यक्रियत्वादिकं प्रयोजकमिति कार्यत्वहेतोर्विरुद्धत्वमाह – **किं च** इति । [4] स्फुटम् ॥

**अत्राहुः — सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते । … … अतस्तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित् पुरुषविशेषः सिध्यत्येव ॥　　　(१३३)**

अतः सिद्धसाध्यत्व[5] सोपाधिकत्वविरुद्धत्वैः सिद्धान्त्येकदेशिमतं साक्षात् पूर्वपक्षिणो दूषयन्तीत्याह — **अत्राहुः** इति । स्वरूपासिद्धिशङ्कां व्युदस्यति– **सावयवत्वात्** इति । [6] कथमशक्यत्वमित्यत्राह — **भवन्ति** इति । **महत्त्वेन क्रियावत्त्वमूर्तत्वाभ्यां** च अणुनभोव्यावृत्तिः । न तनौ सिद्धसाध्यता । **कार्यत्वं** हि कृतिसाध्यत्वमभिप्रेतम् । न च ततः सकर्तृकत्वे साध्याविशिष्टता, उपादानाद्यभिज्ञसमर्थकर्तृकत्वस्य साध्यत्वात् । उपाधिं व्युदस्यति–**सावयवेषु** इति । **सावयवत्वम्** इतरहेतुद्वयोपलक्षणम् । शङ्कते — **कार्यत्व** इति । परिहरति — **न** इति । सपक्ष इव पक्षेऽप्यनुमेये **ज्ञानशक्ती** इत्यर्थः । तद् विवृणोति — **तथा हि** [7] इति । किमकर्तुः शक्यक्रियत्वादिकमुपाधिः उत कर्तुः? प्रथमे न साध्यसमव्याप्तिः । द्वितीये न साधनाव्यापकत्वमित्यर्थः ॥

---

1. जीवकर्तृकत्वव्यावृत्त्यर्थं–ग.
2. सकर्तृकत्वसाधकत्वस्य सोपाधिकत्वकथनात्-क.
3. सावयवस्यापि–अ.　　4. स्पष्टम्–अ.
5. विरुद्धत्वसोपाधिकत्वैः–ग.　　6. कथं शक्यत्वं–ग.
7. इति । अकर्तुः-क.

**किं च — सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे ... ... सिध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसंपन्न एव सिध्यति ॥** (१३४)

[1]सिद्धसाधनतां व्युदस्यन्ननुमानान्तरं चाह[2] — **किं च** इति । धर्माधर्मौ स्वसाक्षात्कारिचेतनाधिष्ठितावेव कार्यकरौ, अचेतनत्वात्, वासिवत् [3]इत्यनुमानशरीरम् । अस्य व्यभिचारं परिहरति — **तत एव** इति । लाघवमाशङ्क्याह — **न च** इति । [4]न लाघवादशक्तस्य कार्यकरत्वक्लृप्तिर्युक्ता, एकेन्द्रियक्लृप्त्यादिप्रसङ्गादिति भावः । शक्तिमत्साक्षात्कार एवालमित्यपि निरस्तम्, **सूक्ष्मव्यवहिताद्यदर्शनोक्तेः** । न हि शक्तिमन्तः परमाणवो जीवसाक्षात्कार्याः । ईश्वरे तथाऽनुपपत्तिर्नेत्याह — **न च** इति । **अवान्तरानुमानात्** ईश्वरसिद्धिं निगमयति — **अतः** इति । [5]पक्षधर्मताफलं जीवान्यत्वमाह — **समर्थ** इति । कर्मकृतत्वे ज्ञानादिपरिच्छिन्नत्वं स्यादिति तद्व्युदासाय **स्वाभाविक** शब्दः ॥

**यत्तु — अनैश्वर्याद्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतं ... ... न एकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानं च प्रतिपादयितुं शक्नोति इति ॥** (१३४–१३५)

अथ कार्यत्वहेतोः विरुद्धत्वं व्युदस्यति — **यत् तु** इत्यादिना । सपक्षे दृष्टत्वात् [6]हेतुत्वं च कल्प्यमित्यत्राह — **एतदुक्तम्** इति । [7]सत्येव भावो हि हेतुत्वम्; [8]तदभावान्न इत्यर्थः । तदेव विकल्प्य दूषयति — **किं च** इति ॥

1. सिद्धसाध्यतां–अ. 2. अनुमानान्तरमाह–ग.
3. इत्यनुमानशरीरस्य व्यभिचारं–ग.
4. लाघवादशक्तस्य कार्यकरत्वक्लृप्तिरयुक्ता–ग
5. पक्षधर्मताबलसिद्धमाह–ग. 6. हेतुत्वं न–क.
7. सत्येव भावे न हि–अ. 8. कार्यकरत्वे देहापेक्षा व्याप्तिः–क.

शरीरं कार्योपयोगीति शङ्कते — **कुलालादीनाम्** इति । **अतः** इत्यादि । मनसः कार्यकृत्त्वे देहापेक्षाऽव्याप्तेः प्रतिबन्द्या परिहारोऽभिप्रेतः **अशरीर** इत्यादिपदद्वयेन । स्पन्दिनः स्पर्शवत्त्वं मनसि, महतस्तैजसस्य रूपोपलम्भः चक्षुषि, सावयवस्यैव कार्यारम्भकत्वं [1] परमाणौ च यथा भग्नं, तथा अनेकव्याप्तिभङ्गपरिहाराय एकव्याप्तिभङ्गो न्याय्यः । भोगसाधनमनस्त्व-प्रयुक्तं [2] देहापेक्षया कार्यकृत्त्वमिति भावः । शास्त्रस्य निमित्तोपादानैक्य-गगनादिसृष्टिप्रभृतिभिः विषयाधिक्यमाशंक्य तत्र बाधितविषयत्वमाह — **किं च** इत्यादिना ॥

## सिद्धान्तः

**एवं प्राप्ते ब्रूमः — यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव । ... ... शास्त्रविरोधश्च, 'कुम्भकारो जायते, रथकारो जायते' इत्यादिश्रवणात् ॥** (१३५–१३६)

राद्धान्तमारभते — **एवं प्राप्ते** इति । [3] विशेषविरोधाद्युपयोग्यर्थं शिक्षयति — **मही** इत्यादिना । मानाभावमुपपादयति — **न च** इति । एकदैककर्त्रन्वययोग्यत्वम् **एक**शब्देन विवक्षितम् । तच्च परिमितैकावयवि-निष्ठम् । **घटस्य इव एकम्** इति पदैः परिमितैकावयविनिष्ठकार्यत्वं विवक्षि-तमिति गम्यते । सपक्षे तद्विपर्ययमाह — **पृथक्** इति । **पृथग्भूतेषु** [4] वैपुल्यस्याप्युपलक्षणमिदम् । **नियमाभावात्** मानाभाव इत्यध्याहारः । पक्षधर्मत्वलाघवनयाभ्यां जीववैलक्षण्यैकत्वे स्याताम् इत्यत्राह — **न च** इति । कुत इत्यत्राह — **क्षेत्र** इति । **उपचित** इत्यादिसपक्षविषयम्, पक्षधर्मतया पुण्यातिशयविलक्षणकल्पसयभावान्न लाघवनय इत्यर्थः । युगपत् कृत्स्नलये

---

1. परमाणौ यथा–क. 2. देहापेक्षया–क.

3. विरोधाद्युपयोगिनमर्थं–ग. 4. महत्सु वैपुल्य–ग.

देहानपेक्षकर्तृत्वं [1] न जीवेऽपि संभवेदित्यत्राह — **न च** इति। इदानीं हि क्रमेण दर्शनं, न तदानीमित्यत्राह — **कार्यत्वेन** इति। **विरोधाभावात्** — व्याप्तिविरोधाभावात्। उक्तार्थशिक्षाफलितम् अनुमानदूषणमाह— **अतः** इति। **एककर्तृकत्वम्** — [2] किं बुद्धिमत्कर्तृमात्रसाध्यत्वम् उत सर्वज्ञसर्वशक्तिकर्तृकत्वम् इति विकल्पं कृत्वा, प्रथमेऽनैकान्त्यमुक्तम्। द्वितीयं दूषयति — **पक्षस्य** इति। **सर्वनिर्माणचतुरस्य** [3] इत्यन्तस्योपादानात् विकल्पाभिप्रायेण द्वितीयशिरोदूषणमित्यवगम्यते। तृतीयं दूषयति — **बुद्धिमत्** इति। वेदान्तिनामपि द्वारकर्तृत्वाभ्युपगमात् सिद्धसाध्यत्वोक्तिर्युक्ता। **मुखान्तरेण** दूषयति — **सार्वज्ञ्य** इति। युगपदुत्पत्तिलक्षणं क्रमेणोत्पत्तिलक्षणं वा इत्यर्थः। अत्रापि — गोपुरादिसपक्षेऽपि। विचित्रकार्यत्वात् [4] अनेककर्तृकत्वम् इति **अनुमानविरोधः**। **कुम्भकारः** इत्यादिना अर्थोपादानम्। कुम्भरथयोरेककर्तृकत्वे तत्कर्त्रोः [5] पृथगुत्पत्तिर्न वाच्या इत्यर्थः॥

**अपि च-सर्वेषां कार्याणां शरीरादीनां सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन ... ... विमतिविषयः कालो न लोकशून्यः, कालत्वात्, वर्तमानकालवत् इति॥** (१३६–१३७)

[6]विशेषविरोधमाह — **अपि च** इति। **सुखाद्यन्वयः** — सुखादिहेतुत्वावस्थान्वयः। **सत्त्वादिमूलत्वम्** — सत्त्वादिगुणकद्रव्यो[7]पादानकत्वम्। के सत्त्वादयः इत्यत्राह — **कार्य** इति। **कारणशब्दो** निमित्तोपादानपरः। ततः किमित्यत्राह — **तेषाम्** इति। तद्गुणकोपादानं तद्गुणकः कर्ता-

1 कर्तृत्वं जीवेऽपि-ग.

2 सर्वज्ञसर्वशक्तिकर्तृत्वं कर्तृमात्रं वा साध्यम्-अ.

3 इत्यस्योपादानात्-क. 4 अनेककर्तृकम्-क.

5 पृथगुक्तिः-क. 6 विरोधमाह-ग.

7 उपादानत्वम्-ग.

ऽधितिष्ठति इति 'निर्गुणस्याप्रमेयस्य' इत्यादिशास्त्रसिद्धमिति भावः । ततोऽपि किमित्यत्राह — **पुरुषस्य** इति । सपक्षे सह दृष्टानां कार्यारम्भानुपयोगिनामप्राप्तिरित्येतत् परिहृतम् — **ज्ञानशक्तिवत्** इति । मुखान्तरेण कर्मसंबन्धमाह — **ज्ञानशक्ति** इति । न ज्ञानशक्तिवैचित्र्यं हेतुः, अपि तु इच्छैवेत्यत्राह — **इच्छाया** इति । **विषयविशेषः** — सर्गादिः । उक्तदूषणात् साध्यासिद्धिमाह — **अतः** इति ॥

प्रतितर्कानाह — **भवन्ति च** इति । कार्यत्वे [1] क्षेत्रज्ञकर्तृकत्वम्, कर्तृत्वे सापेक्षत्वं सशरीरत्वम्, अनपेक्षत्वे अशरीरत्वे च [2] अकर्तृकत्वं च प्रसजेदित्यर्थः । प्रथममनुमानं वा । चरमस्य व्यभिचारमाशंक्याह—**न च** इति । **अनादेः** — प्रवाहानादेः । **अधिष्ठानं** प्रथमसंबन्धश्चेत् पूर्वपूर्वविशिष्टस्यैवेति न दोषः । प्रेरणं चेत् देहानपेक्षत्वं देहत्वप्रयुक्तम्, स्वपरनिर्वाहनयादिति भावः । मनः शरीरं च स्वपरविषयज्ञानोत्पत्तौ यथा हेतुः तद्वदिति । **विमति** इति । कालत्वे सलोकत्वम् । अन्यथा कालत्वं न स्यादित्यर्थः ॥

**अपि च किमीश्वरः सशरीरोऽशरीरो वा कार्यं करोति? ... ... ... ... अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेत्–न, अनवस्थानात् ॥** (१३७)

मुखान्तरेण दूषयति – **अपि च** इति । अशरीरस्य मनसा कर्तृत्वं [3] स्यादित्यत्राह — **मानसानि** इति । स्पष्टम् । **तच्छरीरहेतोः** — शरीरान्तरस्य इत्यर्थः । **अनवस्थानात्** इति । प्रामाणिकत्वादिष्टं चेत् कर्मवश्यता [4] स्यादिति भावः । स्पष्टम् ॥

---

1 क्षेत्रज्ञकर्तृत्वम्–ग. 2 अकर्तृत्वं प्रसजेत्–ग.

3 स्यादिति चेदत्राह–ग. 4 स्यादित्यर्थः–ग.

**स किं सव्यापारो निर्व्यापारो वा? ... 'यतो वा इमानि भूतानि' इति वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥**

(१३७-१३८)

**स किम्** इति । अर्थद्वयेऽपि दृष्टान्तो मुक्तात्मा । इच्छाविशेषहेतुत्वं दूषितम; इहेच्छामात्रहेतुत्वं दूष्यते — **कार्यम्** इति । [1]**मात्रशब्देन** सत्त्वादितन्मूलकर्मणो व्युदासः । अनुमानदूषणमुपसंहरति — **अतः** इति । अनुत्तीर्णत्वे देवताविशेषनिर्णयाय चरमपदद्वयम् । उक्तदोषास्तत्रापि स्युरित्यत्राह — **शास्त्रं तु** इति । शास्त्रसिद्धधर्मिणि प्रसङ्गश्चेत् धर्मिग्राहकबाधः । न चेत् आश्रयासिद्धिरिति भावः ॥

[2] मानान्तरबाधितोऽर्थो न शास्त्रेण शक्यप्रतिपादन इत्येतदनूद्य परिहरति — **यत् तु** इत्यादिना । अधिकरणार्थमुपसंहरति — **अतः** इति । **अतः** — साधकबाधकाभावादित्यर्थः ॥

इति शास्त्रयोनित्वाधिकरणम् —३ ।

—:x:—

## ४. समन्वयाधिकरणम् ॥

**यद्यपि प्रमाणान्तरागोचरं ब्रह्म, तथाऽपि ... ... ब्रह्म न शास्त्रं प्रतिपादयतीत्याशंक्याह—** (१३९)

अवान्तरसङ्गतिमाह — **यद्यपि** इति । शास्त्रमार्थे च शक्तत्वं निरूपितम् सूत्रद्वयेन । बुभुत्साऽस्यपरिकरसिद्धयर्थमितरसूत्रद्वयेन चिन्त्यते । अप्रतिपन्नस्य पुमर्थत्वापुमर्थत्वनिरूपणायोगात् प्रतिपत्तिर्लक्षणादिति द्वितीयं प्राप्तम् । लक्षणस्वभावात् तृतीयं प्राप्तम् । अज्ञातेऽप्यप्रयोजने बुभुत्सानुदयात्

1 मात्रचा–अ.     2 मानान्तरबोधितो–क.

चतुर्थं प्राप्तमिति सङ्गतिः । सुखं दुःखनिवृत्तिश्च प्रयोजनम् । तदुपाय-प्रवृत्तिनिवृत्तिबोधनद्वारा शब्दस्य सप्रयोजनत्वम । [1] सिद्धस्य च तादृप्याभावेन बुभुत्सानुदयात् बुभुत्सितप्राहिशास्त्रं न सिद्धविषयप्रमितिं जनयतीति [2] शङ्कते इत्यर्थः ॥

## तत्तु समन्वयात् ॥ १-१-४ ॥

**प्रसक्ताशङ्कानिवृत्त्यर्थः 'तु' शब्दः । तत् ...... 'नायं सर्पः' इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम् ॥** (१३०-१४०)

**तत्तु समन्वयात्** । वाक्यार्थयोजनायामन्तर्भावयितुमशक्यं पदं पृथक् व्याचष्टे — **प्रसक्त** इति । **तत्** इति व्याख्येयं पदम् । **संभवत्येव** इति **तु** शब्दलब्धार्थ उक्तः । हेतुपदम् [3] आकांक्षायामवतारयति — **कुतः** इति । उपरि विस्तरेण व्याख्यास्यमानत्वात् इह संग्रहेण व्याचष्टे — [4] **पुरुषः** इति । कस्य, केन, कीदृशोऽन्वयः इत्यत्राह — **परम** इति । 'शास्त्रेण' इति धीस्थत्वान्न कण्ठोक्तिः । तथाऽन्वयं दर्शयति — **एवम्** इति । **इव** एवार्थः । 'यतः' इति लक्षणवाक्यम् । प्रापकान्याह — '**सदेव**' इति । उत्तरोत्तरं विशेषशब्दाः । सर्वशाखाप्रत्ययनयात् [5] छागपशुनयाच्च ऐकार्थ्यम् । [6] न्यायानपेक्षात् ब्रह्मशब्दकण्ठोक्तिमत्प्रकरणस्थत्वादुपात्तम् **आत्मनः** इति । कारणत्वशङ्कितदोषव्युदासाय शोधकमाह— **सत्यम्** इति । पुरुषार्थत्वा-याह — **आनन्द** इति ॥

एषु पुमर्थत्वोपयोगी कोऽर्थः प्रतिपन्नः, स च किमापातप्रतीतः, उत तात्पर्यभूमिरित्यत्राह — **न च** इति । **अखिल** इत्यादिना कारण-

---

1 शब्दस्य-क. 2 शङ्क्यते-क.

3 आशङ्कायां-क. 4 परमपुरुषार्थतया इति भाष्यपाठः ।

5 छागपशुन्यायाच्च-क. 6 न्यायानपेक्षब्रह्म-अ.

शोधकार्थ उक्तः । **व्युत्पत्तिसिद्ध**शब्देन व्युत्पत्त्यभावात् पुमर्थत्वाप्रतिपादन-शङ्का व्युदस्ता । प्रवृत्तिनिवृत्तिरूपत्वाभावादिति चेत् तन्न इत्यर्थः । **अन्य-परत्वम्** — तात्पर्याभावः, अप्रामाण्यमित्यर्थः । कथमित्यपेक्षायां किं प्रवृत्ति-निवृत्त्यन्वयः प्रामाण्यव्यापकः इति तन्निवृत्त्या तन्निवृत्तिः, उत प्रवृत्त्याद्यन्वयः [1]प्रामाण्यव्यापकपुमर्थत्वव्यापक इति तन्निवृत्तौ पुमर्थनिवृत्त्या प्रामाण्य-निवृत्तिरिति विकल्पं मत्वा प्रथमे न इत्युक्तम् । तत्र हेतुमाह — **स्वविषय** इति । न तु प्रवृत्तिनिवृत्त्योः मानपर्यवसानमित्यर्थः । द्वितीये तु प्रवृत्ति-निवृत्त्योः पुमर्थत्वव्यापकत्वमुपगम्य पुमर्थस्य मानव्यापकत्वं नेत्याह —**न च** इति । चशब्दो व्यापकद्वयनिषेधसमुच्चये । यथा प्रवृत्तिनिवृत्त्यन्वयो न मानत्वव्यापकः, तथा पुमर्थत्वं चेति । प्रत्यक्षादिषु तथा भावेऽपि शास्त्रे पुमर्थपर्यवसायित्वं मानत्वव्यापकमित्याशङ्कायां तदुपेत्य प्रयोजनस्य न प्रवृत्ति-निवृत्त्यन्वयव्याप्यत्वमित्याह — **न च** इति । **प्रवृत्तिनिवृत्त्यन्वयविरहिणः** इति — वाक्यस्य इत्यर्थः । चशब्दो [2]व्याप्यद्वयनिषेधसमुच्चये । हेतुमाह — **पुरुष** इति । इदं पक्षविषयम् । ब्रह्मणस्तथाऽन्वयप्रतीतेरित्यर्थः । यथा [3]मानत्वं न प्रवृत्तिनिवृत्त्यन्वयव्याप्यं तथा पुमर्थत्वं च इति **च** – अर्थः । लौकिकसिद्धपरवाक्येऽपि पुमर्थान्वयं दर्शयति — **तथा** इति । इदं सपक्ष-विषयम् । एवमक्षरयोजनायां संक्षेपेणार्थः उक्तः ॥

## पूर्वपक्षः

**अत्राह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति, प्रवृत्ति-निवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात् । ... ... न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥** (१४०–१४१)

---

1 प्रामाण्यव्यापकपुमर्थत्वं चेति प्रत्यक्षादिषु तदभावेऽपि—अ. मध्ये ग्रन्थपातः 2 वाक्यद्वय-अ. 3 मानत्वं प्रवृत्तिनिवृत्त्यन्वय-क.

अथ तात्पर्यं वक्तुं पूर्वपक्षं विस्तरेण प्रस्तौति — **अत्राह** इति । **अत्र** — एतावदुक्ते । **न** इत्यादिप्रतिज्ञातार्थमुपपादयति — **प्रवृत्ति** इति । प्रागुक्तं मानानां स्वविषयबोधपर्यवसानं मानविशेषे व्यवस्थापयति — **यद्यपि** इति । न परमनुपलब्धिः, अनुपपत्तिश्चेत्याह — **न च** इति । यत्नसाध्यत्वादिति भावः । [1] सिद्धपरत्वेऽपि पुमर्थपर्यवसायित्वं संभवेदित्यत्राह — **तच्च** इति । सिद्धपरस्यापि तत्पर्यवसानं दृष्टमित्याशङ्क्य दूषयितुमनुवदति — **यत्पुनः** इति । स्पष्टम् । **तस्मात्** इत्युपसंहारः ॥

**अत्र कश्चिदाह — वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति । ... ... ब्रह्मणो निष्प्रपञ्चतारूपेण कार्यत्वमविरुद्धम् इति ॥** (१४१)

अथ जरन्मायावादिनोरन्यतरोक्तं [2] निष्प्रपञ्चीकरणनियोगवादं प्रस्तौति- **अत्र कश्चित्** इति । **कथम्** — कार्यार्थपरस्य सिद्धे मानत्वं कथमित्यर्थः । विधिना ब्रह्मणः कोऽन्वय इत्यत्राह — **ब्रह्मणः** इति । विषयतयाऽन्वय इत्यर्थः । **प्रपञ्चप्रविलय** इति । सिद्धस्य साध्यत्वमाकारभेदादिति भावः । **कोसौ** [3] इत्याकांक्षां प्रदर्श्य उपात्तस्य वाक्यस्यार्थमाह — **द्रष्टृ** इति । श्रुत्यन्तरसिद्धदृश्यभेदनिषेधः उपजीवितः । **प्रपञ्चप्रविलय** इत्युक्तं विवृणोति— **स्वतः** इति ।

**तदयुक्तम्-नियोगवाक्यार्थवादिना हि नियोगः ... ...नापि फलम्, नैयोगिकफलत्वेन स्वर्गादिवत् अनित्यत्वप्रसङ्गात् ॥** (१४१)

अधिकरणपूर्वपक्षी मीमांसकस्तं [4] दूषयति — [5] **तदयुक्तम्** इति ।

---

1. सिद्धत्वेऽपि-क.　　2. अन्यतरोक्तनिष्प्रपञ्ची-क.
3. इत्याकांक्षायां प्रथमोपात्तस्य-क.
4. तत् दूषयति-क.　　5. न तदयुक्तमिति-अ.

कार्यज्ञप्तौ **विषयः** — यागादिः, तदुत्पत्तौ **करणम्** । **वक्तव्याः** — वक्तुं न शक्यमिति भावः । **तत्र** – तेषु । **अनुपादेयम्** — उपादेयं विधेयं, तस्मादन्यत् । स्पष्टम् । **निमित्तत्वे च** इत्यादि । अपवर्गोत्तर-कालभाविनो निमित्तत्वाङ्गीकारात्, करणकलेवरनिरपेक्षं विषयानुष्ठानयोग्यत्व-मप्यङ्गीकृतं स्यादिति तदानीमपि तदनुष्ठानप्रसङ्गः इति भावः ॥

**कश्चात्र नियोगविषयः ? ब्रह्मैवेति चेत् ... ... ... प्रपञ्च-निवृत्त्या नियोगः इति इतरेतराश्रयत्वम् ॥** (१४२)

**अभव्यरूपत्वात्** — असाध्यरूपत्वात् । **अभावार्थत्वात्** — भावार्थाः कर्मशब्दाः, क्रियारूपत्वाभावादित्यर्थः । साध्यत्वं फलेऽप्यस्तीति तद्व्यावर्तकं भावार्थत्वम् । [1] निष्प्रपञ्चत्वाकारेण साध्यत्वमाशंक्य दूषयति — **निष्प्रपञ्चम्** इत्यादिना । **अनित्यत्वप्रसक्तेश्च** इति । साध्यत्वे सति इत्यर्थः । [2] **न तर्हि** इति । साध्यत्वाभावान्न विषयत्वमित्यर्थः । **अस्य च** इति । **अस्य** इति निर्देशः फलविवक्षया । फलत्वविषयत्वरूपाकारद्वयाभ्युपगमे प्रपञ्च-निवृत्तिः फलत्वान्नियोगसाध्या, विषयत्वात् साधनम् । अतोऽन्योन्याश्रयः इत्यर्थः ॥

**अपि च — किं निवर्तनीयः प्रपञ्चः मिथ्यारूपः सत्यो वा ? .... .... नाप्यनुग्राहकः । अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न संभवति ॥** (१४२-१४३)

**अपि च** इत्यादिना नियोगदूषणम् । **स्ववाक्यात्** — जगन्मिथ्यात्व-प्रतिपादकवेदान्तवाक्यात् । दूषणान्तरमाह — **वाक्यार्थ** इति । पूर्व-विकल्पे द्वितीयं शिरो दूषयति — **प्रपञ्चस्य** इति । **निवर्त्यत्वे** — सत्यत्वेन नियोगनिवर्त्यत्वे इत्यर्थः । **तस्य** इत्यादिना प्रयोक्तृदूषणं च कृतं भवति । **प्रपञ्च** इत्यादि ॥

---

1. निष्प्रपञ्चत्वाकारे हि–अ. 2. तर्हीति–अ.

फलाभावोक्तिमुखेन नियोगो दूषितः । करणेतिकर्तव्यते दूषयति — **किं च** इत्यादिना । अवघातप्रोक्षणवत् दृष्टार्था अदृष्टार्था इति च विकल्पोऽभिप्रेतः । दृष्टार्थभावरूपकरणशरीरनिष्पादिकां दूषयति — **न हि** [1] इति । अदृष्टार्थत्वे निवर्त्यसत्यत्वमभिप्रेतम् । **नापि** इति । स्पष्टम् । **करणादि** इति आदि शब्दात् नियोगः । [2] अकार्यकृत्वान्न करणत्वमित्यर्थः । **अभावात्** – अप्रामाणिकत्वात् । एवकारात् दृष्टार्थभावरूपेतिकर्तव्यताया अप्यमानत्वं [3] पूर्वं गतमिति गम्यते । शमादिस्तु धियो निष्पादकः, न प्रपञ्चनिवृत्तेरिति सिद्धमित्यनुक्तिः । उपसंहरति — **अतः** इति । **विधिः** — नियोगः ॥

**अन्योऽप्याह — यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम् … … तथा च सति श्रवणादिविधानमनर्थकं स्यात् ॥** (१४३-१४४)

अथ ध्याननियोगवादं प्रस्तौति — **अन्योऽप्याह** इति । को विधिः ? किं वा सामर्थ्यम् ? इत्यत्राह — **एवम्** इति । धीविशेषवाचिनौ **निदिध्यासनदर्शन**शब्दौ । '**आत्मा**' इति, '**आत्मानमेव**' इति आभ्यां [4] स्वजगतोः परमात्मतादात्म्यप्रतिपादनवाक्यद्वयोपादानम् । सामर्थ्यमाह — **अत्र** इति । ध्येयत्वमाक्षिप्येत, तत् कथम् [5] ब्रह्म इत्यत्राह — **स च ध्येयः** इति । सन्निधेरित्यर्थः । कारणवाक्यादीनामपि विध्यपेक्षेति मानत्वमाह — **स किम्** इति । भेदग्राहिमानविरोधमाशंक्याह — **अतः** इति । विषयकारणादि वक्तव्यमित्यत्राह — **तत्र** इति । उपासकः प्रयोक्ता शमादिः

---

1. इति । प्रपञ्चेत्यादि । अदृष्टार्थे–अ.

2. अकार्यकरत्वात् न करणम्-क.

3. पूर्वगर्भितमिति–अ. 4. जन्म स्वजगतोः–अ.

5. ब्रह्मत्वम्–क । अत्रेत्यत्राह–तत्रेति । उपासकः–अ (मध्ये ग्रन्थपातः) ।

इतिकर्तव्यतेति **स्फुटम्** । [1]धीवैयर्थ्यं परिहृतम् — **तत्साक्षात्कार** इति । वाक्यार्थधीमात्रोपायवादं प्रत्यक्षधीविरोधाभ्यां दूषयति — **न च** इत्यादिना ॥

**अथोच्येत — 'रज्जुरेषा, न सर्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् ... .... 'तत्त्वमसि' 'अयमात्मा ब्रह्म' इति तत्परेणैव पदसमुदायेन सिद्ध्यति इति ॥** (१४४-१४७)

अथ [2]शाङ्करमाशङ्कते—**अथोच्येत** इति । **रज्जुः** इत्यादि स्फुटम् । विपरीतफलदत्वमाह—**किं च** इति । यथा नियोगसाध्यत्वाभावः फलति तथाविधश्रुतिमाह — **तथा च** इति । **न च** इति । [3]**नियोगविशेषसाध्यफलविशेषवत्**— प्रायश्चित्तसाध्यपापक्षपणवदित्यर्थः । धर्माधर्मफलानन्वयश्रवणात् अशरीरत्वस्य स्वरूपत्वाच्च धर्माधर्मसाध्यत्वाभाव उक्तः । तत्कण्ठोक्तिं दर्शयति— **तथा च** इति । **कृताकृतम्** — प्रारब्धापरिसमाप्तम्, वर्तमानम् इत्यर्थः ॥

मुखान्तरेण दूषयति— **अपि च** इत्यादिना । **निघर्षणेन**—पाणावादर्शस्य, आदर्शे पाणेश्च निघर्षणम् । [4]स्वपराश्रयक्रियास्वाश्रयक्रियाविषयत्वम्, तत्फलभाक्त्वात् [5]युक्तम् । क्रियाविषयत्वाभावेऽपि [6]संस्कार्यत्वं दृष्टमित्यत्राह — **न च** इति । **अविद्यागृहीतः**—कल्पितः । **तत्संगतः**— देहसङ्गतः । आत्मैव तत्फलभुक्त्वात् संस्क्रियत इत्यत्राह — **तत्फल** इति । अहमर्थ एवात्मा इत्यत्राह — **न च** इति । यो यस्य साक्षी, न हि स स इत्यर्थः । **तयोः**—अहङ्कारज्ञतयात्मनोः । **आत्मेन्द्रिय** इति । आत्मा— शरीरम् । देहादिमानश्नन् अहमर्थः, देहादिरहितोऽनश्नन् आत्मा इत्यर्थः । श्रुतिप्रतिपन्नमाकारमनुवदन् [7]धर्मासाध्यत्वं निगमयति — **अविद्या** इति ॥

---

1. विधिवैयर्थ्यं-अ.
2. शाङ्करमसमाशङ्क्ते-अ.
3. नियोगविशेष्य-अ.
4. स्वप्नाश्रय-अ.
5. उक्तम्-अ.
6. संस्कार्यत्वादृष्टमित्याह-अ.
7. धर्मसाध्यत्वं-अ.

**यदि** इत्यादि स्फुटम् । **निवृत्तिस्तु** इति । नियोगेन निवृत्तेः साध्यत्वे निवर्त्यसत्यत्वमिति भावः । **ब्रह्म** इति । श्रुतिस्वारस्यं विलम्बासहमित्यर्थः । न तत्प्रतिरोधः, विधिशेषतया हि ब्रह्मणः सिद्धिरित्यत्राह — **न च** इति । विदिशब्दो निष्प्रपञ्चीकरणे ज्ञानविशेषे विश्राम्यति । **विदितात्**— ज्ञेयात् । **अविदितात्** — ज्ञातुः । अर्थद्वयेऽपि श्रुतिद्वयम् । "**येनेदम्**" इति श्रुतिः चिदात्मनोऽर्थान्तरप्रकाशकतया स्वप्रकाशे [1]दीपादिवत् सजातीयानपेक्षत्वं दर्शयति । तर्हि शास्त्रनिर्विषयत्वमित्यत्राह — **न च** इति । 'ब्रह्मवित्' इत्यादौ वेद्यत्वं प्रतीयते इत्यत्राह — **न हि** इति । स्फुटम् ॥

शास्त्रविरोधं परिहरति — **न च** इति । **स्वभावप्रवृत्त** इति । अनादिप्रवृत्त इत्यर्थः । प्रत्यक्षविरोधं परिहरति— **न च** इति । तर्हि कथं बन्धानुवृत्तिरित्यत्राह— **यस्य तु** इति । **तस्मात्** इति । **शरीरस्थितिः**— प्रतिभासः इत्यर्थः । दग्धपटः पटतयाऽवभासेऽपि हि निवृत्त एव, बन्धश्च तद्वदिति भावः । **अतः** इत्युपसंहारः । **तत्परेण** — सिद्धरूपाद्वितीयब्रह्मपरेण ॥

**तदयुक्तम्, वाक्यार्थज्ञानमात्रात् बन्धनिवृत्त्यनुपपत्तेः । ... ... ... वाक्यार्थज्ञानमात्रादविद्यानिवृत्तिं वदतः श्रवणमनननिदिध्यासनविधीनामानर्थक्यमेव ॥** (१४७–१४८)

अथ ध्याननियोगवादी दूषयति— **तदयुक्तम्** इति । मिथ्या हि [2]धीबाध्य इत्यत्राह — **यद्यपि** इति । **सर्पविपरीतज्ञानम्**— रज्जुज्ञानम् । तर्हि उपदेशवैयर्थ्यमित्यत्राह — **आप्त** इति । अपरोक्षधियैव निवृत्तिरस्तु, सा च शब्दजन्या इत्यत्राह— **न च** इति । [3]विवक्षितपुरुषविशेषस्य सा शाब्दी इत्यत्राह— **न च** इति । **स्वविषय** शब्देन स्वजन्यज्ञानमुच्यते ।

1. देवादिवत्–अ. 2. धीबाध्यत–अ.
3. विविक्त–अ.

शब्दः परोक्षज्ञानमेव जनयति, तन्नातिक्रामति इत्यर्थः । 'दशमस्त्वम्' इति वचनं [1]शृण्वतः 'दशमोऽहम्' इति धीः 'धार्मिकोऽहम्' इतिवत् [2]परोक्षा स्यात् । 'सुख्यहम्' इतिवदापरोक्ष्येऽपि 'घटोऽयम्' इति वाक्यवत् अपरोक्षधीसामग्रीजनकत्वेन आपरोक्ष्यधीहेतुत्वमिति भावः ॥

ध्यानस्य वाक्यार्थधीहेतुतां दूषयति — **न च** इति । विषयभेदेन परिहारमाशंक्याह — [3]**न च** इति । ध्यानस्य वाक्यार्थध्यपेक्षा कथमित्यत्राह— **ज्ञातार्थ** इति । ध्यानवाक्यार्थधियोः सामग्रीभेदादन्योन्याश्रयपरिहारमाशंक्याह — **ध्येय** इति । वाक्यभेदेन सामग्रीभेदमाशंक्याह — **न च** इति । स्पष्टम् । **दृष्टद्वारेण** इति । अदृष्टद्वारा चेत् निवर्त्यसत्यत्वमिति भावः । स्पष्टम् ॥

**यतो वाक्यादापरोक्ष्यज्ञानासंभवात् वाक्यार्थज्ञानेन अविद्या न निवर्तते ... ...नियोगस्तु तदापरोक्ष्यज्ञानं जनयति ॥ (१४८-१४९)**

**का चेयम्**— दुर्निरूपा । व्याहतिपरिहाराय परोक्तं शङ्कते— **अथ** इति । किं सशरीरत्वप्रतिभासनिवृत्तिर्जीवन्मुक्तिः, उत तस्मिन् सत्यत्वप्रतिभासनिवृत्तिरिति विकल्पं मत्वा प्रथमं दूषयति— **मिथ्या** इति । द्वितीयं शङ्कते — **अथ** इति । दूषयति— **न** इति । द्विचन्द्रादौ बाधितानुवृत्तिर्दृश्यत इत्यत्राह— **द्विचन्द्र** इति । बाधकधियो बाधकत्वमेकाश्रयस्य [4]विरुद्ध धर्मविषयतया स्यात्, तदभावो वैषम्यमित्यर्थः । श्रुतिस्मृतिविरोधमाह– **किं च** इत्यादिना । **विप्रतिषिद्धम्**— विशेषेण प्रतिषिद्धम् । बहूनां [5]प्रबलत्वात् । **परं व्याख्यातम्**— [6]परलोकफलम्

---

1. गृह्णत.-क. 2. परोक्षधीः-क.

3. न चेति । सामग्रीभेदमाशंक्याह-अ. ( मध्ये ग्रन्थपातः )

4. विरुद्धधर्म-अ. 5. बलवत्त्वात्-क.

6. परलोकं फलम्-अ.

इत्यर्थः । उदाहृतवचनफलितमाह— **अनेन** इति । जीवन्मुक्तिव्युदास-मुपसंहरति — **अतः** इति । स्वमतं निगमयति — **तस्मात्** इति । परोक्तश्चोद्यपरिहारः स्वस्यापि तुल्य इत्याह— **न च** इति । नियोगनिवर्त्यत्वे बन्धस्य निवर्त्यस्य सत्यत्वं स्यादित्याशंक्याह— **किं च** इति । ज्ञानसद्वार-कत्वात् परिहारः ॥

**कथं नियोगस्य ज्ञानोत्पत्तिहेतुत्वमिति चेत् ... ... ब्रह्म-साक्षात्कारफलेन ध्याननियोगेनैव अपरमार्थभूतस्य कृत्स्नस्य द्रष्टृ-दृश्यादिप्रपञ्चरूपबन्धस्य निवृत्तिः ॥**　　　　(१४९-१५०)

स्वमते श्रुतिस्वारस्यं दर्शयितुं **कथम्** इत्यादिना प्रतिबन्दीमुखेन परिह्रियते । स्पष्टम् । '**ब्रह्म वेद**' इत्यादौ वाक्यजन्यत्वं न स्वारसिकम् । '**न चक्षुषा**' इत्यादौ विशुद्धमनोजन्यत्वं स्वरसम् । '**नेदम्**' इत्यादि । '**यदिदम्**' इत्यत्र **इदम्**—अंशे तात्पर्यमित्यर्थः । 'इदं वा अग्रे' इत्यादिषु 'इदं'शब्दो जगद्वाचित्वेन प्रसिद्ध इति भावः । **अनभ्यु-दितम्** — अपरिच्छिन्नम् । अनेन [1] 'अन्यदेव' इत्यादिवाक्यमपि जगद्वैरूप्यपरम इति सिद्धम् । **अन्यथा** इति स्ववाक्यविरोध उक्तः । [2] वाक्यान्तरविरोधमाह — **ध्यानविधि** इति । निगमयति — **अत** इति ॥

**यदपि कैश्चिदुक्तम्— भेदाभेदयोर्विरोधो न विद्यते इति, तदयुक्तम् ... ... ... अतो जीवकर्मानुरूपं ब्रह्मणो भिन्नाभिन्न-स्वभावा एवोपाधय उत्पद्यन्ते इति ॥**　　　　(१५०-१५३)

अथ ध्याननियोगवादी भास्करमतं दूषयितुम् अनुवदति— **यदपि** इत्यादिना । प्रथमं संक्षेपेण दूषयति— **तदयुक्तम्** [3]इति । शीतोष्णतमः-

---

1. अन्नमेव-अ.　　　　2. वाक्यविरोधम्-अ.

3. इत्यादिना । शीतोष्णादावपि विरोधः-क. (मध्ये ग्रन्थपातः)

प्रकाशशब्देन नियतभिन्नाश्रयत्वसहानवस्थानरूपेण [1]विरोधावुक्तौ । आदि-शब्दात् तृणदहनवत् [2]नाश्यनाशकभावोक्तिः ।

अथ भेदाभेदमतं विस्तरेणोपन्यस्यति—**अथ** इत्यादिना। [3]**सर्वमेव हि** इति । शीतोष्णादावपि विरोधः प्रतीत्यधीन इति भावः । ततः किमित्यत्राह—**सर्वं च** इति । द्विविधविरोधस्थलवैरूप्यमविरोधोपलंभं चाह— **छाया** इत्यादिना । अद्विरूपानुपलंभमाह—**न च** इति । तृतीयविरोधाभावमाह—**न च** इति । व्यक्तिगतो भेदः, जातिगतश्चाभेदः इति नैकस्य द्व्यात्मकत्व-मित्यत्राह— **न चाभिन्नस्य** इति । प्रतीतत्वमेवोपपादयति— **न हि** इति। 'मृदयं घटः' इत्यनेन मत्वर्थीयानपेक्षसामानाधिकरण्यं चोक्तम् । अनुवृत्ति-व्यावृत्तिभ्यां विवेकं शङ्कते— **अनुवृत्ति** इति । परिहरति— **नैवम्** इति। अनुपलब्धिं विवृणोति— **न हि** इति । **आकारभेदः**— अंशभेदः । तर्हि कथमुपलंभ इत्यत्राह— **यथा** इति । **एकत्वबुद्धिः** इत्यनेन एकशब्दानुविद्ध-प्रत्यय [4]उक्तः । सहधीनियमः प्रथमपिण्डे अभेदधीश्च सिद्धे विविक्ता-कारानुपलंभोक्तेः । एवं जातिव्यक्त्योः भेदाभेदावुक्तौ । अथ पिण्डानां तावुच्येते—**एवमेव** इति । **अत्यन्तभेदः**—अभेदासहभेदः । **अथ** इति — देवाद्याकारेण आत्मनो देहैनैक्यप्रसङ्ग इति चोद्यम । परिहारः स्फुटः ॥

एवं लौकिकार्थेषु भेदाभेदमुक्त्वा वैदिकेष्वपि [5]तमाह **अत एव** इति । **अंश**शब्देन 'अंशो नाना' इति सूत्रं स्मारितम् । **कथम्** इति । भेदाभेदे अभेदस्य स्वतस्त्वे च किं मानमित्यर्थः । स्वाभाविकत्वेन प्राधान्यादभेदपरवाक्यान्याह—**तत्त्वम्** इति । **दाश** इत्यादि [6]सूत्रांशविषयमाह—

1. विरोधाव्यक्तौ—अ. 2. नाश्यनाशकाभावोक्तिः—अ.
3. सर्वं हि इति भाष्यपाठः ।
4. उक्तः । एवं जातिव्यक्त्योः—क.
5. इत्याह—अ. 6. सूत्रविषयं—क.

**ब्रह्मेमे** इति। नानात्वव्यपदेशं दर्शयति— **नित्य** इत्यादिना। भेदस्यौपाधिकत्वं कथमित्यत्राह— **तत्र** इति। स्वरूपापरत्युक्तेर्भेदनिषेधाच्चेत्यर्थः। **ननु च** [1]इति। एतच्चोद्यं भोक्तृसाहित्यपरतया। भोग्यसाहित्यपरतया परिहरति— **नैतत्** इति। स्पष्टम्॥

[2]विभौ ब्रह्मणि उपाधिसंबन्धात् जीवेश्वरविभागाभावमाशंक्याह— **यद्यपि** इति। **न च** इति। स्फुटम्। उपाधितत्संयोगकर्मणां प्रवाहानादित्वं विवृणोति— **एतदुक्तम्** इति। फलितार्थमाह— **अतः** इति। उपसंहरति— **अतो जीवकर्म** इति॥

**अत्रोच्यते — ' अद्वितीयसच्चिदानन्दब्रह्मध्यानविषयविधिपरं वेदान्तवाक्यजातं ' ... ध्यानविधिशेषतया वेदान्तवाक्यानां ब्रह्मस्वरूपे प्रामाण्यमुपपन्नमिति॥** (१५३-१५५)

भेदाभेदमतं ध्याननियोगवादी दूषयति— **अत्रोच्यते** इति। पूर्वं भेदाभेदप्रस्तावसङ्गतिज्ञापनायाह— **अद्वितीय** इति। तत्संबन्धप्रदेशमाह— **तत्र यत्** इति। भेदाभेदं दूषयिष्यन् विरोधं दर्शयति— [3]**कस्माचित्** इति। आकारभेदादविरोधमनुवदति— **कारण** इति। [4]विकल्प्य दूषयति— **न** इति। प्रथमे जातिव्यक्त्योः किं भेदः, उताभेदः, उत भेदाभेद इति विकल्पमभिप्रेत्य प्रथमं दूषयति— **व्यक्ति** इति। द्वितीयमाशंक्य दूषयति— **जातिः** इति। तृतीयं दूषयति— **एकस्मिन्** इति। **द्वितीये तु** इति। अत्र च विकल्पत्रयमभिप्रेतम्। तृतीयवस्तुनोऽ[5]प्रतिपन्नत्वं च दूषणम्। **वैलक्षण्यमेव** इति। अन्यथा त्रित्वाभावादिति भावः। **आकारद्वय** इति। न ह्यग्नौ पैङ्गल्यौज्ज्वल्ये शीतोष्णत्वाविरोधनिर्वाहके इत्यर्थः। द्वितीयं दूषयति —

1. इति। कृतं चोद्यं भोक्तृसाहित्यपरतया। परिहरति-अ.
2. विभिन्नब्रह्मणि-अ. 3. कस्मादिति-क.
4. विकल्पं दूषयति-अ. 5. प्रतिपन्नत्वदूषणं-क.

**अविलक्षणम्** इति। तृतीयं दूषयति— **आकार** इति। न हि दृष्टेऽनुपपन्नं नामेत्यत्राह— **न च** इति। स्पष्टम्। अनेन प्रथमपिण्डेऽभेदधीश्च निरस्ता [1]हेत्वन्तरत्रयनिरासः प्रागुक्तोऽनुसन्धेयः। उक्तमुपजीव्याह— **अत एव** इति। स्पष्टम्। निरवयवत्वात् [2]अच्छेद्यम्। **छित्त्वा**— खण्डयित्वा; **भित्त्वा**— प्रदेशभेदेन। **यदि** इत्यादि स्पष्टम्। जीवकर्मणोरुपाधिजीवभावयोश्च अन्योन्याश्रयपरिहाराय **अनादि** शब्दः। **अयम्** इत्यादि। चतुर्थपञ्चमौ परस्य गत्यभावाच्छङ्कितौ। स्पष्टम्। **तृतीये तु** इति। जीवेश्वरभेदो जीवानां मिथो भेदश्च न स्यातामित्यर्थः। [3]स्फुटम्। भेदाभेददूषणमुपसंहरति— **तस्मात्** इति। स्वमतं निगमयति— **अतः** इति॥

**तदप्ययुक्तम् — ध्यानविधिशेषत्वेऽपि वेदान्तवाक्यानामर्थसत्यत्वे प्रामाण्यायोगात्। ... ... परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावात् ब्रह्मणः शास्त्रप्रमाणकत्वं न संभवतीति प्राप्तम्॥**

(१५५-१५६)

ध्याननियोगपक्षं मीमांसकोऽधिकरणपूर्वपक्षी दूषयति — **तदप्ययुक्तम्** इत्यादिना। न परं निष्प्रपञ्चीकरणवाद एव इति **अपि** शब्दार्थः। विधिशेषत्वे कथं प्रामाण्यायोगः, स्वातन्त्र्येण वा [4]प्रामाण्यं स्यादित्यत्राह— **एतदुक्तम्** इति। **न च** इत्यादि। **एकवाक्यताम्**— महावाक्यैकत्वम्। [5]ध्यानविधिशेषत्वे विषयतासिद्धिर्व्युदस्ता। न फलतयेति न प्रथमसूत्रविरोधः। अन्यत् स्फुटम्। सार्थसंग्रहं पूर्वपक्षमुपसंहरति— **अतः** इति॥

—:x:—

---

1. हेत्वन्तरनिरासः-क. 2. अच्छेद्यत्वम्-अ.

3. स्पष्टम्-क. 4. प्रामाण्यादित्यत्राह-अ.

5. ध्यानविशेषत्वे विषयतया सिद्धिर्व्युदस्ता, न च फलतयेति प्रथमसूत्रविरोधः-अ.

## सिद्धान्तः

**तत्र प्रतिपद्यते – 'तत्तु समन्वयात्' इति । समन्वयः– सम्यगन्वयः, ... ... ... प्रवृत्तिनिवृत्तिनिष्ठं तु यावत्पुरुषार्थान्वय-बोधं न प्रयोजनपर्यवसायि ॥** (१५६-१५७)

**तत्र** इति । **प्रतिपद्यते**— प्राप्नोति । **समन्वय**शब्दं विस्तरेण व्याचष्टे— **समन्वय** इति । अन्वयसम्यक्त्वम् [1]अन्वयिसम्यक्त्वात् । वाक्यार्थं योजयति— **परम** इति । व्याख्यातमेतत् । 'नायं सर्प' इत्यादिवत् प्रयोजनपर्यवसानं वदतो मृषावादिनो मते ध्यानविध्यानर्थक्यं, मीमांसकपक्षे ब्रह्मणोऽसिद्धिश्च इत्युभयदोषास्पृष्टप्रकारेण प्रामाण्यमुपपाद्यते । ततः प्रवृत्ति-निवृत्तिपरत्वविरहेण पुमर्थान्वयाभावात् अप्रामाण्यमिति शङ्कायां स्वतः सर्वेषां [2]सर्वदा सर्वत्र सर्वप्रकारभोग्यत्वेन दुःखासंभिन्नत्वेन च ब्रह्मणः पुरुषार्थत्वाधिक्यं प्रवृत्तिनिवृत्त्योर्दुःखात्मकत्वेन पुरुषार्थत्ववैकल्यं चाभिप्रेत्याह— **निरस्त** इति । **राजकुलवासी**— राजकुलप्रसूतः, तदन्तरङ्गो वा । **कौलेयकाः**— श्वानः, श्वोपजीविनो म्लेच्छा वा ॥

[3]ब्रह्मणः कथं पुरुषार्थत्वाधिक्यं, कथमानन्दरूपत्वं, कथं प्रवृत्ति-निवृत्त्योः [4]प्रयोजनत्वमान्ध्यं, स्वरूपपरवाक्यस्य [5]पुमर्थपर्यवसानं कुत्र दृष्टं, तदा कथं ध्यानादिविधिसाफल्यमित्यत्राह— **एतदुक्तम्** इति । **अनादि** इति । प्रतिबन्धवशात् तस्य पुमर्थत्वज्ञानं, न तु तद्वैकल्यादिति भावः । देवादिगणनं व्यवस्थित [6]भोग्यत्वज्ञापनार्थम् । **स्वरूप** इति । सर्वप्रकारैः सर्वेषां तच्च स्वविषयज्ञानस्य निरतिशयानुकूलतापादकत्वं [7]ब्रह्मणोऽनुकूलत्व-

---

1. अन्वयिसत्यत्वात्-अ.　　2. सदा-अ.
3. ब्रह्मणः प्रथमं-क.　　4. प्रयोजनमान्द्यं-क.
5. पुमर्थपर्यवसानं दृष्टं-अ.　　6. भोग्यज्ञापनार्थं-अ.
7. ब्रह्मणोऽनुकूलत्वमित्यानन्दत्वमित्यर्थः-क.

मित्यर्थः। **प्रवृत्ति** इति। सुखलवसाधनमात्रत्वात् दुःखात्मकत्वाच्च पुमर्थत्व-वैकल्यमित्यर्थः ॥

**एवंभूतं परं ब्रह्म कथं प्राप्यत इत्यपेक्षायां, "ब्रह्मविदाप्नोति परम्" ... ... अनवधिकातिशयानन्दं ब्रह्मास्तीति बोधयतीति सिद्धम् ॥** (१५७–१५८)

ध्यानविध्यानर्थक्यं परिहरति—**एवंभूत** इति। स्वरूपपराणां सुख-रूपपरोक्षधीहेतुतया पुमर्थान्वयः, आपरोक्ष्यापेक्षया ध्यानादिसाफल्यमित्यर्थः। निदर्शयति— **यथा** इति। निधिराजकुमारदृष्टान्तद्वयं चिदचिद्विभागात् [1]उभयगतभोग्यत्वं ब्रह्मण्यस्तीति ज्ञापनाय। **तृप्तः सन्** इति वाक्यस्य पुमर्थान्वयो दर्शितः। 'तद्यथा हिरण्यनिधिम्' 'अविज्ञाताः कुमारकाः,' 'भगवतोऽहं पुत्रः प्रेष्यः' 'माता पिता भ्राता,' 'य एक इन्द्रो राजा जगतः' [2]इत्याद्यभिप्रायेण सर्वविधभोग्यत्व ज्ञापनाय ब्रह्मणि राजत्वं, चेतनेषु पुत्रत्वं, चोक्तं कुशलवसमाधिना। विषयप्रावण्यं, भगवत्सकाशबहिष्ठत्वं, कर्म-ज्ञानाद्युपायानन्वयः, 'असन्नेव' इत्याद्युक्तात्महानिः,[3] 'ईश्वरोऽहम्' इत्याद्युक्तस्वातन्त्र्याभिमानश्च विवक्षिताः **बालक्रीडा** इत्यादिपदैः। **केनचित्** इत्याचार्याङ्गीकारः। **षोडशवर्ष** इति भोक्तृत्वं भोग्यत्वं च। **सर्व** इत्यादिना 'निर्वाणमय एवायमात्मा' इत्यादिगुणजातं, **पिता ते** इत्यादिना भगवद्गुणाश्च सूचिताः। **गांभीर्यादयः** स्फुटाः। **दिदृक्षुः**— 'स महात्मा सुदुर्लभः' इति जानन्। **राजा च** इति— [4]राजस्थानेऽप्युपासकः भगवति सर्वविध-भोग्यत्वसद्भावात्। अर्थान्तरमप्यविरुद्धम् [5]**श्रुत्वा** इत्युक्तेः। दृष्टान्तद्वयेऽपि [6]ध्यानविध्यवैयर्थ्यं च सूचितम् **प्रयतते सङ्कल्पेते च** इति ॥

1. उभयगतं ब्रह्मणि–क. 2. इत्यभिप्रायेण–क.
3. इत्याद्युक्तहानिः–क 4. राजस्थाने हि–क.
5 प्रागर्थः समीचीनं, श्रुत्वेत्युक्तेः–अ.
6. ध्यानविधान विध्यवैयर्थ्ये–अ.

**यत्** इत्यादि । स्फुटम् । दूषयति— **तदसम्** इति । 'पयः पिब, शिखा वर्धिष्यते' इति विप्रलिप्सामूलप्रवर्तकवाक्यवत् विधिवाक्यमपि प्रामाण्यशून्यं स्यात् । अपौरुषेयत्वात् न इति चेदत्रापि तुल्यमिति भावः । प्रकरणार्थं निगमयति— **अतः** इति । कारणवाक्यार्थमाह—**जगत्** इति । लक्षणवाक्यस्य [1]शोधकवाक्यार्थगर्भितत्वमभिप्रयन्नाह — **निरस्त** इति । कदाचिदप्यनर्हत्वं **गन्ध** शब्दोक्तम् । प्रत्यनीकम् इत्यर्थः ।। ४ ।।

इति समन्वयाधिकरणम्–४

---

## ५. ईक्षत्यधिकरणम् ।।

# ईक्षतेर्नाशब्दम् ॥ १-१-५ ॥

**"यतो वा इमानि" इत्यादिजगत्कारणवादिवाक्यप्रतिपाद्यं ... ... किं सच्छब्दवाच्यं जगत्कारणं परोक्तमानुमानिकं प्रधानम् उतोक्तलक्षणं ब्रह्म इति ॥** (१५९–१६०)

सङ्गतिमाह— **यतः** इति । प्रथमद्वितीययोरुद्देशलक्षणोक्तिमुखेन **शाब्दी चार्थी चाशक्तिः परिहृता** । ब्रह्मणः परीक्ष्यत्वाय तृतीयचतुर्थयोः बुभुत्सासिद्ध्यर्थं प्रमाणान्तराज्ञातत्वपुमर्थत्वे दर्शिते । एवं वेदान्तवाक्यानां [2]ब्रह्मणि प्रामाण्यरूपपरीक्ष्यतापरिकरस्थापनं कृतम् । अथ [3]तत्परीक्षा इति पेटिकासङ्गतिः । पुमर्थतया समन्वयोऽनुपपन्नः, अपुमर्थप्रधानादिप्रतिपादनादिति समन्वयाक्षेपेणोत्थानादवान्तरसङ्गतिः इत्यर्थः । [4]कारणत्वानुवादिलक्षण-

---

1. शोधकार्थ–अ.
2. ब्रह्मणि प्रामाण्यरूपपरीक्ष्यताहेतोः प्रामाण्यरूप–अ.
3. तत् परीक्ष्यते–अ.
4. कारणत्वादिलक्षण–अ.

वाक्यलक्षितस्य [1]चिदचिद्वैलक्षण्यस्य सिद्ध्यर्थं तत्प्रापकवाक्यानि निरूप्यन्ते इत्यभिप्रायेण 'यतो वा' इत्युपात्तम् । **आदि** शब्दात् प्रापकवाक्यमभिप्रेतम् । **जिज्ञास्यमित्युक्तम्** इति । परीक्ष्यताहेतोः प्रामाण्यस्य समर्थितत्वादिति भावः । **इत्यादिना** — अध्यायेनेत्यर्थः ॥

विषयमाह— **इदम्** इति । संशयमाह — **तत्र** इति । **आनुमानिक** शब्देन पूर्वपक्षबीजसूचनम् ॥

## पूर्वपक्षः

**किं प्राप्तम्? प्रधानमिति । कुतः "सदेव सोम्येदमग्र आसीदेकमेव" .... .... प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेव इति ॥** (१६०)

हेतुमाह — **सदेव** इति । **चेतनभोग्यभूतस्य** इति । चेतनस्य [2]कार्यत्वायोगान्न इदंवाच्यत्वमिति भावः । प्रधानत्वसिद्ध्यर्थमाह — **सत्त्व** इति । सुखदुःखमोहान्वयात् सत्त्वादिमयत्वमिति भावः । द्रव्यैक्ये कार्यत्वकारणत्वयोः को भेद इत्यत्राह — **वियदादि** इति । एकत्वबहुत्वे वैषम्यमित्यर्थः । अस्यैव कारणावस्थत्वं कथमित्यत्राह — **कारणभूत** इति । ततः किं प्रधानत्वसिद्धय इत्यत्राह—**अतः** इति । गुणसाम्यावस्थं चेत् [3]कारणम् एकत्वादि कथमित्यत्राह — **तदेव** इति । कदाचित [4]असत्त्वं नामरूपबहुत्व गुणवैषम्यव्युदास इत्यर्थः । **तत एव**—त्रिगुणात्मकस्यैव सच्छब्दवाच्यत्वात् । न हि विजातीययोः अनन्यत्वमिति भावः । अनन्यत्वं मा भूदित्यत्राह — **तथा** इति । **तथा सति** — अनन्यत्वे सति । यद्वा प्रधानकारणत्वे सति ।

---

1. चिदचिद्वैलक्षण्यप्रसिद्ध्यर्थं-**क.** 2. कारणत्वायोगान्न-**क.**
3. कारणत्वमेकत्वावधारणादि-**अ.** 4. सत्त्वनाम-**अ.**

युक्त्यन्तरमाह — **अन्यथा** इति । **अन्यथा** चेतनकारणत्वे; यद्वा [1]विरूपकारणत्वे । दार्ष्टान्तिके सरूपकार्यकारणदृष्टान्तो न घटत इत्यर्थः । पूर्वपक्षमुपसंहरति—**इति** इति । **महर्षिणा** इति । "ऋषिं प्रसूतं कपिलम्" इति श्रुतिः स्मारिता । **अनुमानवेषमेव** इति । प्रतिज्ञादृष्टान्तयोः हेत्वाक्षेपकत्वादिति भावः ॥

## सिद्धान्तः

**एवं प्राप्तेऽभिधीयते— ईक्षतेर्नाशब्दमिति । ... ... 'स ईक्षांचक्रे .... स प्राणमसृजत' इत्यादिषु ॥** (१६०)

अस्मिन् पूर्वपक्षे प्राप्ते सूत्रमवतारयति —**एवम्** इति । **ईक्षतेः** इति । अशब्दस्य कथं शब्देन प्रतिपादनम् इत्यत्राह— **यस्मिन्** इति । 'अब्भक्षः' इतिवत् अवधारणं गर्भितमिति भावः । शब्दैकवेद्यं न चेत् तत्, किं मानान्तरमित्यत्राह— **आनुमानिकम्** इति । [2]परमाणुव्यावृत्त्यर्थमाह— **प्रधानम्** इति । [3]सौत्रनञर्थं वदन् वाक्यार्थमाह— **न तत्** इति । **धातोः** इति । न हि 'ईक्षितेः' इत्युक्तमिति भावः । एवमुक्तिः शब्दस्वारस्यसूचनार्थेत्यभिप्रायवतोक्तम् **सच्छब्दवाच्य** इति । कस्मिन् वाक्ये [4]ईक्षत्युक्तिरित्यत्राह— **तदैक्षत** इति । धात्वर्थो हि क्रिया, [5]तद्योगश्चोचित इत्यत्राह— **ईक्षण** इति । ईदृशक्रियाविशेषो नोचित इत्यर्थः । तर्हि कस्य इत्यत्राह—**ईदृश** इति । 'तदैक्षत बहु स्याम्' इत्यनयोरर्थमाह— **सर्वज्ञः, सर्वशक्तिः** इति । सतो देवताविशेषत्वमाह— **पुरुषोत्तम** इति । **तथा च** इति । ईक्षणस्य गौणत्वे अनेकश्रुतिस्वारस्यभङ्ग इति भावः ॥

---

1. विरूपकारणे-क ; धीरूपकारणत्वे-अ.
2. परमाणवाद्यर्थमाह-अ. 3. सूत्रे नञर्थम्-क.
4. ईक्षतिरित्यत्राह-क. 5. तद्योगश्चाचित-अ.

**ननु च — कार्यानुगुणेनैव कारणेन भवितव्यम् । ... ... ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः ॥** (१६१)

**सत्यम्** इति । कार्यानुगुण्यमङ्गीकृतम्, न तु प्रधानत्वम् निमित्तत्व मुपादानत्वं विकारादीनां सद्वारकत्वं चाभिप्रेत्याह — **सर्वज्ञ** इत्यादि । शरीरद्वारा अपि घटाद्यात्मना [1] परिणामाक्षमकुलालादिव्यावर्तकं **सर्वशक्तित्वम्** । अत्र श्रुतिं दर्शयति — **यथा हि** इति । किं [2] शरीरत्वं, शरीरत्वे शरीरत्वाधीनदोषाश्च किं न स्युरित्यत्राह — **तदेतत्** इति । अधिकरणद्वयपौनरुक्त्यमाशंक्याह — **अत्र** इति । **अत्र** — वाक्यतर्केणार्थनिकर्षः, तत्र तु बाह्यतर्कविरोधपरिहार इत्यर्थः ॥

**यत्तु** इत्याद्यनूदितं [3] पूर्वपक्षहेतुं परिहरति — **तदसत्** इति । घटपटादीनामत्यन्तभेदादाकारैक्येनापि प्रतिज्ञानुपपत्तिमभिप्रेत्य **सर्वात्मना** इत्युक्तम् । दृष्टान्तस्य संभवार्थत्वेनान्यथासिद्धत्वान्न [4] अनुमानाक्षेपकत्वमित्यर्थः । अनुमानरूपत्वसंभवार्थत्वयोः साधारण्येऽपि को निर्णायक इत्यत्राह — **ईक्षत्यादि** इति । शङ्कितसाधारण्यस्यापि निरस्तत्वात् — **अनुमानगन्धाभावः** इत्युक्तम् । हेत्वन्तराणि विशिष्टस्य कारणतया दद्योत्तराणि ॥ ५ ॥

**अथ स्यात् — न चेतनगतं मुख्यमीक्षणमिहोच्यते, ...... अतो गौणमीक्षणमिति इमामाशङ्कामनुभाष्य परिहरति —**

उत्तरसूत्रं घटयितुमीक्षतेर्गौणत्वं शङ्कते — **अथ स्यात्** इति ।

---

1. परिणत्यक्षमकुलालादिव्यावर्तकं सर्वज्ञत्वम्–**अ.**

2. शरीरत्वं शरीरत्वाधीन–**अ.**

3. पूर्वपक्षे हेतुं–**अ.**

4. हेत्वाक्षेपकत्व–**क.**

'तत्तेजः' इति अप्रयप्रायन्यायो दर्शितः। लोके शास्त्रे च गौणोक्ति-र्दर्शिता — **यथा** इति। शङ्काया अनुत्सूत्रत्वात् **अनुभाष्य** इत्युक्तम् ॥

## गौणश्चेन्नात्मशब्दात् ॥ १-१-६ ॥

**यदुक्तं — गौणेक्षणसाहचर्यात् सतोऽपीक्षणव्यपदेशः ... ... गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ॥ ६ ॥** (१६१–१६२)

**गौणश्चेन्नात्मशब्दात्**। गौणत्वनिर्वाहकं गुणं वदन् सूत्रं योजयति— **यदुक्तम्** इति। आत्मशब्दोऽपि 'मृदात्मकः' इतिवत् स्यादित्यत्राह — **एतदुक्तम्** इति। सर्वशब्दासङ्कोचोऽभिप्रेतः। गौणसाहचर्यं हेतुमुप-गम्योक्तम्, स एव नेत्याह — **अतः** इति। **अतः** — चिदचितोः आत्मत्वात्। कथं वाचकत्वमित्यत्राह— **तथा हि** इति। **वस्तुत्वम्** — तेजस्त्वम्, अप्त्वं, पृथिवीत्वं च। साहचर्ये सत्यपि आत्मशब्दादुत्सारिता; साहचर्याभावात् **दूरोत्सारिता** ॥ ६ ॥

### इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम्

## तन्निष्ठस्य मोक्षोपदेशात् ॥ १-१-७ ॥

**... प्रधानकारणवादिनोऽपि प्रधाननिष्ठस्य मोक्षं नाभ्युप-गच्छन्ति ॥ ७ ॥** (१६२)

अनन्तरसूत्रमवतारयति— **इतश्च** इति। सर्वशब्दासङ्कोचे अनुकूल-हेतुश्चास्ति इति भावः। **तन्निष्ठस्य मोक्षोपदेशात्**। तच्छब्दार्थमाह —[1]**सत्** इति। **शरीरपात** इति। '**विमोक्ष्ये**' इत्यत्र कस्मात् इत्याकांक्षायाम् '**अस्माच्छरीरात्**' इत्यैकार्थ्यात् शरीरादिति सिद्धमिति भावः। ततः किमित्यत्राह— **यदि च** इति। कथमनुपपत्तिरित्यत्राह **यथा** इति। **अचेतन-**

1. सत् इति—क.

संपत्तिः— [1]संसारित्वम् । ततः किमित्यत्राह— न च इति । अमुत्र रक्षाकृत्त्वं तदर्थः ॥ ७ ॥

इतश्च न प्रधानम् —

## हेयत्वावचनाच्च ॥ १-१-८ ॥

यदि प्रधानमेव कारणम् ... .... 'तत्त्वमसि' 'तस्य तावदेव चिरम्' इत्युपदिश्यते ॥ ८ ॥ (१६३)

इतश्च इति । सदुक्तिर्न तादात्म्यानुसन्धानाय, किन्तु हेयतया [2]इति शङ्कया सङ्गतिः ॥

हेयत्वावचनाच्च । सूत्रार्थफलितमाह— प्रत्युत इति । न हि 'स्थूलोऽहम्' इति धीवत् [3]निषिध्यत इति भावः । औत्तरहेतुसमाप्तौ सौत्रः चशब्दः ॥ ८ ॥

इतश्च न प्रधानम् —

## प्रतिज्ञाविरोधात् ॥ १-१-९ ॥

प्रधानकारणत्वे ... ... प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते ॥ ९ ॥ (१६३)

उपक्रमप्राबल्यात् [4]उक्तहेतुदौर्बल्यशङ्कां परिहरति— प्रतिज्ञाविरोधात् इति । त्वदुक्तमेव अस्मदनुगुणमिति भावः । शब्दार्थमाह— प्रधान इति । कथमित्यत्राह— वाक्य इति । ततः किमित्यत्राह— तच्च इति । ततोऽपि किमित्यत्राह— तत् तु इति ॥ ९ ॥

---

1. सांसारिकम्-क. 2. इति सङ्गतिः-क.
3. निवर्त्यते-अ. 4. उक्तदौर्बल्य-अ.

इतश्च न प्रधानम् –

## स्वाप्ययात् ॥ १-१-१० ॥

**तदेव सच्छब्दवाच्यं प्रकृत्याह ... ... 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' इति चाह— इति ॥ १० ॥** (१६३–१६४)

सुषुप्तौ लयश्च [1] कार्यकारणत्वनिबन्धन इति सोऽनन्तरं सङ्गतः ॥

**स्वाप्ययात्** । अर्थान्तरत्वव्यावृत्त्यर्थमाह— **तदेव** इति । **यत्र**— यदा । **स्वमपीत**शब्दविवरणं **स्वस्मिन् प्रलीनः** इति । ततः किमित्यत्राह — **प्रलयश्च** इति । सूक्ष्मदशापत्तिः लयः । जाग्रज्जीवविशिष्टः परः सुषुप्त-जीवविशिष्टे स्वस्मिन् लीनः, तदवस्थोऽभूदित्यर्थः । स्वशब्दस्य आत्मीयादि-परत्व[2]व्युदासार्थं चेतनपरत्ववैशद्यार्थं स्वरूपैक्यशङ्काव्युदासार्थं चाह— **तथा** इति । जीवव्यावृत्तीश्वरानुत्तीर्णत्वदेवताविशेषसिद्ध्यर्थाः **सर्वज्ञ** आदिशब्दाः । व्याख्यान्तरव्यावृत्त्यर्थमाह— **तदाह** इति । **असंपत्तिः** — 'सत आगम्य' इत्युक्तो निर्गमः । अन्यत्रासंपत्तिर्वा । **एतत्** — ब्रह्मकारणत्वम् ॥ १० ॥

इतश्च न प्रधानम् –

## गतिसामान्यात् ॥ १-१-११ ॥

**'आत्मा वा इदमेक एव ... ... तस्मात् अत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥ ११ ॥** (१६४–१६५)

**गतिसामान्यात्** । 'आत्मशब्दात्' इत्युक्तत्वात् तद्वन्ति वाक्यान्याह — **आत्मा** इति । **'तस्य ह वा'** इत्यत्र च **'आत्मा वा**

1. कार्यकारणभावनिबन्धन–क.

2. ... व्युदासार्थमचेतनपरत्वव्युदासार्थं चेतनपरत्व–क.

**अरे द्रष्टव्यः'** इति श्रूयते । सामान्यमर्थद्वारकमित्याह— **सत्** इति । ततः किमित्यत्राह— **तेषु च** इति ॥ ११ ॥

**इतश्च न प्रधानम्—**

## श्रुतत्वाच्च ॥ १-१-१२ ॥

**श्रुतमेव ह्यस्यामुपनिषदि ... ... नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम् ॥** (१६५-१६६)

न परमुपनिषदन्तरेषु, इहापीत्याह— **श्रुतत्वाच्च** । सार्वज्ञ्यसर्वशक्तित्वविषयवाक्ये 'तदैक्षत बहु स्याम्' इति पूर्वमेवोपात्ते । **'सदायतनाः'** इत्याधारत्वम् । उक्तगुणकस्य आत्मत्वं दर्शयति — **ऐतदात्म्यम्** इति । **सत्यकामत्वम्—यच्च** इति । **अपहतपाप्मत्वादिकम्** उक्तम् **एष आत्मा** इति । उपात्तवाक्यानामुक्तार्थपरत्वं [1] द्रढयितुं श्रुत्यन्तरैः संवादयति— **तथा च** इति । उक्तगुणवैशद्यमनुक्तगुणज्ञापनं च [2] कृतं भवति । न तु सूत्रविषयतया श्रुत्यन्तरोपादानम् ॥

अशब्दस्य अप्रतिपाद्यत्वं निगमयति — **तस्मात्** इति । ब्रह्मणः प्रतिपाद्यत्वं निगमयति— **अतः** इति । निमित्तोपादानभूतस्य ईश्वरत्वमाह — **सर्वज्ञ** इत्यादिभिः । शोधकार्थमाह— **निरस्त** इति । गुणेभ्योऽप्याश्रयमहत्त्वाय **महार्णव**शब्दः । **पुरुषोत्तमनारायण**शब्दौ चिदचिद्वैलक्षण्यतच्छरीरकत्वपरौ, अनुवाकद्वयस्मारकौ । गगनाद्यबहिष्काराय **निखिल**शब्दः । सर्वविधकारणत्वाय **एक** शब्दः ॥

**अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि ... ... ईक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम् ॥ १२ ॥** (१६६-१६७)

1. दृढयितुं—अ. 2. कृतम् । न तु—अ.

सूत्राणां परपक्षाननुगुणत्वं प्राक् संक्षिप्तं विस्तरेणाह— **अत एव** इति । **वेदितव्यः**—निरासः फलित इत्यर्थः । **पारमार्थिक** इति । अन्यथा शुक्तित्वापारमार्थ्ये रजतवत्, प्रधानमेव ब्रह्म स्यादिति भावः । नाचित्तुल्यता साक्षित्वादित्यत्राह— **निर्विशेष** इति । व्यावर्तकापारमार्थ्ये व्यावृत्तिरेव नेति भावः । साक्षित्वं चापारमार्थिकत्वेन हि श्रूयत इत्यत्राह— **वेदान्त** इति । आरोपिताकारो न तत्त्वावेदकमानविषय इति भावः । चेतनत्वमस्तु, ततः किमित्यत्राह— **चेतनत्वम्** इति । न तत्तुल्यत्वं, प्रकाशरूपत्वादित्यत्राह— **किं च** इति । तत्क्षमत्वमुपगम्य दूषयति— **तन्न** इति । तत्क्षमत्वं च नेत्याह— **शक्तिमत्त्वं च** इति । दूषणान्तरमाह— **किं च** इति । **वस्तुत्वं** [1] तुच्छव्यावृत्तिः । परपक्षं सन्दूष्य स्वपक्षं निगमयति— **तस्मात्** इति ॥ १२ ॥

इति ईक्षत्यधिकरणम्—५

## ६. आनन्दमयाधिकरणम् ॥

**एवं जिज्ञासितस्य ब्रह्मणः चेतनभोग्यभूत .... .... निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते—**

## आनन्दमयोऽभ्यासात् ॥ १-१-१३ ॥

**... ... प्रत्यगात्मनो जीवशब्दाभिलपनीयादन्यः परमात्मा, उत स एव इति ॥** (१७२-१७३)

अवान्तरसङ्गतिमाह— **एवम्** इति । **आनन्दमयोऽभ्यासात्** । 'तस्माद्वा एतस्मादात्मनः' इत्यादेरुत्तरत्र उदाहरिष्यमाणत्वात् आत्मशब्दव्याख्यानोपक्रमवाक्यं 'स वा एष' इत्यादिकमुपात्तम् । **तत्र** इत्यादि । स्पष्टम् ॥

---

1. तुच्छत्वव्यावृत्ति.–अ.

## पूर्वपक्षः

**किं युक्तम्? प्रत्यगात्मेति। कुतः? ... ... प्रक्रान्तं ब्रह्म; तदेवानन्दमय इत्युपदिष्टमिति निश्चीयते ॥** (१७३-१७४)

शारीरत्वमस्तु; ततः किमित्यत्राह — **शारीरो हि** इति। अधिकरणारंभमाक्षिपति — **ननु च** इति। प्रकरणाविच्छित्तिमाह — **अनुक्रम्य** इति। ईक्षाविशेषः कथमित्यत्राह — **ईक्षा** इति। **एव** कारोऽस्वारस्यसूचकः। साक्षित्वमेवेक्षितृत्वमिति भावः। [1] ननु ज्ञातस्य न लक्षणापेक्षा; नित्यप्राप्तस्य ज्ञातस्य परिच्छिन्नज्ञानस्य जीवस्य प्राप्यत्वं लक्षणोक्तिः तद्विशेषरूपानन्त्यं च न युज्यन्त इति परमात्मत्वसिद्धिरित्यत्राह — **अतः** इति। सामानाधिकरण्यबलात् लक्षणोक्तिरिति कल्प्यम्। प्राप्यत्वादि चाचिद्वियुक्ते युज्यत इत्यर्थः। वियुक्तस्य प्राप्यत्वं कण्ठोक्तं चेत्याह — **तद्रूप** इति। न वियुक्तविषयत्वम्, अन्नरसमयाद्यन्तरत्वविज्ञानमयान्यत्वापरिच्छिन्नानन्दैः परत्वसिद्धिरित्यत्राह — **तथा हि** इति। **शरीरम्** उपलक्षणम्; अन्नमयोक्तिः **बुद्ध्यवतरणाय**। प्राणमयादिसाहचर्यात् 'विज्ञानं यज्ञं तनुते' इत्यैकार्थ्याच्च मयट् स्वार्थिकः। 'विज्ञानसारथिः', 'बुद्धिं तु सारथिम्' इति प्रयोगात्, करणे व्युत्पत्त्या अन्तःकरणं विज्ञानमिति न जीवादन्यत्वम्। अमितानन्दस्तु निष्कृष्टस्येत्यर्थः। **अतः** इत्युपसंहारः ॥

**ननु च—'ब्रह्म पुच्छं प्रतिष्ठा' इत्यानन्दमयादन्यत् ब्रह्मेति प्रतीयते। ... ... सुखैकतानमानन्दमय इत्युच्यत इति आनन्दमयः प्रत्यगात्मा ॥** (१७४–१७६)

आनन्दमयस्य निष्कृष्टजीवपरत्ववादिनं सांख्यं ब्रह्माज्ञानवादी चोदयति — **ननु च** इति। अवयविनोऽ[2]वयवभूतमन्यदिति भावः। परिहरति — **नैवम्**

---

1. ननु ज्ञातस्य लक्षणापेक्षा-अ. 2. वयवममन्यदिति–अ.

इति । आनन्दमयस्य [1]ब्रह्मत्वे हेत्वन्तरमाह — **यदि च** इति । **न ह्यनयैव** वचनव्यक्त्या [2]वाच्यम् अन्यत्वमित्यत्राह— **एतदुक्तम्** इति । प्रकरणवशात् तथैव भवितव्यमित्यर्थः । स्वोक्तस्य स्वेनैव व्याख्यानसंभवज्ञापनाय 'ब्रह्मवित्' इत्याद्युपात्तम् । मन्त्रो हि तद्विवरणम । आत्मोक्तिरानन्दमये समाप्यताम्, तस्य कथं ब्रह्मत्वमिति शङ्का निरस्यते— **तदेव** इति । '**तत्**' '**एतत्**' शब्दौ प्रकृतब्रह्मपराविति भावः ॥

**ननु च** इति । यद्यानन्दमयः प्रधानः, तस्मिंश्च आत्मोक्ति[3]विश्रान्तिः, तदा तयोरन्यतरशब्देन निर्देष्टव्यम् । तदभावात् श्लोकः पुच्छविषयः । न च पर्यायत्वादविरोधः प्रसिद्धस्याज्ञानाशङ्कानुपपत्तेरित्यर्थः । परिहरति— **नैवम्** इति । पुच्छविषयत्वं प्रकरणादुक्तम । अज्ञानाशङ्कासंभवमाह—**आनन्दमयस्य** इति । प्रतिबन्दीमभिप्रयन्नाह— **पुच्छ** इति । 'आनन्दो ब्रह्म' इत्युक्तेः, आनन्दस्य च प्रसिद्धत्वादित्यर्थः । [4]अवयवित्वायोगमाशंक्य, अवयवत्वायोग-प्रतिबन्द्या परिहरति— **शिरः** इति । सत्यादिवाक्येन कृत्स्नव्यावृत्तिसिद्धौ किमत्र क्रियते इत्यत्राह—**एवं च** इति । ब्रह्मणः कथं विकारत्वमित्यत्राह— **ततश्च** इति । **ततः**— अनुपपत्तीनां परिहृतत्वात् ॥

[5]अमितानन्दरूपस्य प्रत्यगात्मनः कथं दुःखित्वसुखतारतम्ये इति शङ्कां च परिहरन् पूर्वपक्षमुपसंहरति— **तस्मात्** इति । 'शुद्धयन्ताम्' इत्युक्तशोध्यत्वं यथावस्त्विति परमात्मनि प्रसादनीयत्वरूपमनुसन्धेयम। अन्यत्र कण्ठोक्तेः । 'तस्य च वशीकरणं तच्छरणागतिरेव' इति हि वक्ष्यते ॥

---

1. बृहत्त्वे–अ.
2. वाच्यत्वम्–अ.
3. विश्रान्तिः तयोरन्य–अ.
4. अवयवत्वायोगम्-अ.
5. अपरिच्छिन्नानन्दरूपस्य ... दुःखत्व-क.

## सिद्धान्तः

**एवं प्राप्ते प्रचक्ष्महे— आनन्दमयोऽभ्यासात्। ... ... सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति ॥** (१७६)

अस्मिन् [1]पूर्वपक्षे प्राप्ते सूत्रमवतारयति — **एवं प्राप्ते** इति। उत्तराधिकरणसूत्रस्थान्यशब्दानुषङ्गलब्धार्थमाह— **परमात्मा** इति। हेतुपदं व्याचष्टे — **सैषा** इति। 'यतो वाचः' इत्यादिवाक्यमभिप्रेत्याह— **निरतिशय** इति। **अभ्यस्यमानः — अभ्यासः**— गुणनम्; 'स एको ब्रह्मण आनन्दः' इति गुण्यमान इत्यर्थः। अस्य वाक्यस्य कथं न चतुर्मुखानन्दपरत्वमिति चेत्, उच्यते— मुख्यत्वात् परमात्मनि, प्रकरणात् षष्ठ्यन्तनिर्देशतः तच्छब्दात्, प्रकरणोपसंहरणतः, पुल्लिङ्गतच्छब्दतः पक्षस्थात् गुणनात् प्रजापतिपदात् प्राग्वत् बहुत्वाश्रुतेः [2]गत्यानन्त्यपरेषुवाक्यनयतः ब्रह्मणः स एको गुण इति। मुक्ते संभवति इत्यत्राह— **निखिलहेय** इति। स्वतस्त्वाभावात् पृथगकामहतोक्तेः, जगद्व्यापाराभावाच्च नेति भावः॥

**यथाऽऽह— 'तस्माद्वा एतस्माद्विज्ञानमयात् ... ... एतत् सर्वं हृदि निधाय सूत्रकारः स्वयमेव 'भेदव्यपदेशात्' इत्यनन्तरमेव वदति ॥** (१७६–१७७)

न परं वस्तुसामर्थ्यात् जीववैलक्षण्यं, कण्ठोक्तं चेत्याह— **यथाऽऽह** इति। अन्तःकरणपरत्वं व्युदस्यति— **विज्ञान** इति। 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' इत्यादिद्योतको **हि**शब्दः। प्रकृत्यस्वारस्यं चाभिप्रेतम्। प्रत्ययवैयर्थ्यं कण्ठोक्तम्। नात्र मयडर्थसंभवः, धीमात्रं ह्यात्मेत्यत्राह— **बद्ध** इति। [3]श्लोकस्थ 'विज्ञान'पदं व्याख्यातुं पृच्छति— **कथम्** इति। सौत्रौ

1. पूर्वपक्षे सूत्रम्–क.
2. अन्ध्यानन्त्यरवीषुसाम्यनयतः ब्राह्मः–म.
3. श्लोकविज्ञान–अ.

निर्वाहौ दर्शयति — **ज्ञातुः** इति । शाब्दप्रक्रियया द्विधा निर्वक्ति— **कृत्य** इति । प्रथमे कर्त्रर्थत्वं कल्प्यम् । द्वितीये तु गणान्तर्भाव इति 'आश्रयण'-शब्दोक्तिः । [1]ल्युशिरस्कस्य विशेष्यनिघ्नत्वेऽपि [2]नपुंसकान्तत्वहेतुर्वक्ष्यते । ज्ञातृपरत्वनिश्चायके सति ह्येवं निर्वाह इत्यत्राह— **अत एव च** इति । **अतः**— ज्ञातृपरत्वात् । कर्तृत्वमौपचारिकमित्यत्राह — **अचेतनेषु** इति । औपचारिकत्वमेव दोषः; प्रकरणस्य तथाविधत्वे स सह्यः तच्च न, । श्रेयस्साधनकर्तृत्वस्यौपचारिकस्यादर्शनादित्यर्थः । अन्नमयाद्यपि हि यज्ञोप-करणम् । 'अद्यतेऽत्ति' [3]इति न श्रेयस्साधनकर्तृत्वं, ज्ञातृपरत्वे वाक्यान्तरस्थं प्रयोगं दर्शयति — **अत एव** इति । न तत्रान्तःकरणपरत्वम्, अचितस्तस्य निलयनत्वसत्यत्वायोगात् । न च परमात्मपरत्वं, व्याप्यत्वायो-गादिति भावः । शाखान्तरस्थप्रयोगं[4] दर्शयति — **तथा** इति । तत्रापि नान्तःकरणपरत्वम्, आत्मशब्दस्थानीयत्वात्; न च परमात्मपरत्वम् अन्यनियाम्यत्वायोगादिति भावः ॥

ज्ञानमात्रपरत्वमुपगम्याह— **यद्यपि** इति । ब्राह्मणेन श्लोकस्यैकार्थ्यं तु तदुक्तैकदेशविषयतयाऽपि युक्तमिति भावः । उक्तार्थस्य सौत्रतामाह—**एतत्** इति । साध्यौपयिकत्वात् सर्वमभिप्रेतमित्यर्थः ॥

**यदुक्तम्— जगत्कारणतया निर्दिष्टस्य 'अनेन जीवेनात्मना ... ... न हि परमार्थशुक्तिकाज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति ॥** (१७७-१७९)

अस्याधिकरणस्य सद्विद्योक्तेक्षणस्य चिद्वैलक्षण्यनिश्चायकत्वप्रतिबन्धक-सामानाधिकरण्याधीनोत्थानत्वात् [5]सामानाधिकरण्यं शारीरत्वेन सह पूर्वपक्ष-

---

1. विशेषणस्य विशेष्य–क. 2. नपुंसकत्वहेतुः–क.
3. इति तु न-अ. 4. प्रयोगं च–क.
5. सामानाधिकरण्यशारीरत्वेन सर्वपूर्वपक्षे हेतुतया–अ.

हेतुतया सूत्रकृताऽभिप्रेतमिति तयोः परिहारप्रकारश्च [1]उत्तरत्र सिद्ध इहोपजीव्यतयाऽभिप्रेत इत्यभिप्रेत्य तयोः पूर्वपक्षहेत्वोः [2]प्रथमधीस्थक्रमेण चरमं परिहर्तुमनुवदति— **यदुक्तम्** इति । **सृष्टियोगानुपपत्तेः** इति । प्रलये करणकलेवरविरहादिति भावः । समानविभक्त्यवगतैक्यं कथमिति चोदयति— **कारण** इति । प्रातिपदिकावगतविशेषणान्वयः कथमिति प्रतिवक्ति— **कथं वा** इति । शङ्कते— **अन्यतरस्य** इति । **कस्य** इत्यादिना विकल्प्य प्रथमं दूषयति— **विप्रतिषिद्धम्** इति । तदुपपादयति— **अविद्या** इति । ततः किमित्यत्राह— **तत्** इति । मिथ्यात्वादविरोधमाशंक्याह— **तथापि** इति । परिहरति— **मिथ्या** इति । ततः किमित्यत्राह— **निरसनीय** इति । मिथ्यात्वमत्यन्ताभावश्चेन्न शास्त्रारंभः; ज्ञानबाध्यत्वं चेत् तत्रापि [3]पुरुषार्थरूपत्वे शास्त्रानारंभणीयता; अपुरुषार्थत्वे निरसनीयहेययोगात् विप्रतिषेध एवेत्यर्थः । तर्कविरोधेऽपि शास्त्रबलात् [4]स्वीकार्यत्वं शङ्कते— **किं कुर्मः** इति । दूषयति— **श्रुत** इति । **अनुपपन्नम्**— तर्कपराहतम् । **विरुद्धम्**— मानविरुद्धम् । [5]पूर्वविकल्पे द्वितीयं शिरः शङ्कते— [6]**अथ** इति । दूषयति— **हन्तैवम्** इति । शास्त्रस्य अपुरुषार्थपर्यवसायित्वेनाप्रामाण्यम् [7]आपद्यत इत्यर्थः । उभयप्रहाणं शङ्कते— **अथ** इति । सोपालंभं दूषयति— **अहो भवताम्** इति । पदद्वय [8]वाक्यैतत्प्रकरणप्रकरणान्तरोपनिषदन्तरमानन्तरतर्कसामानाधिकरण्यपर्यालोचना साध्वीत्यर्थः । प्रथमम् [9]एतत्प्रकरणोपक्रमविरोधं दर्शयति— **एक** इति । **परमार्थविषयं तदन्तर्गतम्** इत्युक्तमर्थं व्यतिरेकेणोपपादयति— **न हि** इति ।

---

1. उत्तरत्र सूत्रसिद्ध-क. 2 प्रथमं सि (बु ?) द्धिस्थ-अ.
3. पुरुषार्थरूपके-अ. 4. स्वकार्य-अ.
5. पूर्वकल्पे-अ. 6. अथेति । शास्त्रस्य-क.
7. आपाद्यते-अ. 8. वाक्यैतत्प्रमाण-अ.
9. एतत्प्रकरणाविरोधं-क.

**अथोच्येत— एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अयमर्थः— ... ... 'तत्त्वम्' इति द्वयोरपि पदयोः मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥**　　(१७९-१८१)

शङ्कते— **अथ** इति । परिहरति— **न** इति । कार्यस्य [1]एकविज्ञाने विषयतयाऽन्तर्भावोऽभिमतश्चेत्, मिथ्यात्वेन इत्यध्याहारो धीवैरूप्यं च; अनन्तर्भावे तु अज्ञाते ज्ञातत्वोक्तिः लाक्षणिकी स्यादिति भावः । न चैते दोषाः [2]स्वपक्षे सन्ति, एकधर्मिविषयत्वात् । साक्षादर्थमाह— **येन** इति । [3]न तु सर्वत्वाकारेण ज्ञातत्वम्; किं तु ज्ञातत्वसत्त्वे एकाश्रयनिष्ठे 'सोऽयं प्रागेव ज्ञातः' इतिवत् न हि [4]प्रागिदंताज्ञानम् । न परं प्रतिज्ञावाक्यं, दृष्टान्तवाक्यमपि न घटते इत्याह— **कारण** इति । तदुपपादयति— **मृत्पिण्ड** इति । न हि शुक्तिधिया रूप्यनिवृत्तिर्निदर्शिता इति भावः । तत्रापि मिथ्यात्वं शङ्कते— **तत्रापि** इति । परिहरति— **मृत्** इति । अनुमानादिना सिद्धमित्यत्राह— **न च** इति । **अननुगृहीतम्** इति दृष्टान्ततयोक्तम् । दार्ष्टान्तिकवाक्याननुगुणत्वमाह— **तथा** इति । **स्वायतनत्वेन** अर्थसिद्धम् **स्वप्रवर्त्यत्वादि** । श्रुत्यन्तराननुगुणत्वमाह— **तत्संबन्धितया** इति । अनूदितत्वनिरासाय **सकलेतरप्रमाणाविषयाः** इत्युक्तम् । [5]पदद्वयापर्यालोचनमाह— **एवम्** इति । पूर्वं पदयोर्निर्विशेषपरत्वे प्रकरणविरोधः उक्तः; इह तु तयोर्निर्विशेषवस्त्वनभिधायकत्वम् । [6]तर्कापर्यालोचनमाह— **निर्विशेष** इति । सामानाधिकरण्येनालोचनमाह— **एवं च सति** इति । विशिष्टस्य मुख्यार्थत्वात् तत्त्यागे न लक्षणेत्यर्थः ॥

---

1. एकविज्ञानविषयतया-क.
2. स्वपक्षे सत्यैकधर्मविषयत्वात्-अ.
3. तु सर्व-क.　　4. इदन्तया ज्ञातं-क.
5. पदद्वयपर्यालोचन-क.　　6. तर्कपर्यालोचन-क.

**अथोच्येत — समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया ... ... सर्वत्र सामानाधिकरण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति ॥ (१८१)**

परमतं शङ्कते— **अथोच्येत** इति । **समान** इत्यादिग्रन्थः पक्षविषयः, 'यो यो धूमवान् स सोऽग्निमान्' इतिवत् [1]सामान्यविषयो वा । **तात्पर्या-संभवात्** इति । अन्यथा विशेषणबहुत्वादैकार्थ्यासिद्धेरिति भावः । लक्षणा-मभ्युपयतस्तस्यादोषत्वाभावे यो हेतुः स एव लक्षणानभ्युपगमेऽपि हेतुरिति सूचयति **एवकारः** । **अनुल्लङ्घनं** वा । **न लक्षणाप्रसङ्ग** इति । वाच्ये [2] प्रधानांशोक्तेरिति वक्ष्यमाणहेतुरभिप्रेतः । उपपादयति — **यथा** इति । कथमविवक्षेत्यत्राह — **तद्विवक्षायाम्** इति । प्रसक्तस्यानिष्टत्वमाह — **तत्तु** इति । यौगपद्यपक्षे उद्देश्योपादेयविभागाभावप्रसङ्गं सिद्धं कृत्वा क्रमपक्षेऽन्यो-न्यसमवायप्रसङ्ग उक्तः । विशेषणविवक्षायाः स्फुटतरत्वायोदाहरणान्तरमाह — **तथा** इति । तर्हि लक्षणेत्यत्राह — **यद्यपि** इति । तथाऽप्यस्वारस्यमित्य-त्राह — **सर्वत्र** इति । सामानाधिकरण्यव्युत्पत्तेरित्थंभूतत्वान्न स्वारस्यमित्यर्थः ॥

**तदिदमसारम् - सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थ-संसर्गविशेषमात्रं ... ... नीलोत्पलादिषु तु विशेषणद्वयान्वया-विरोधात् एकमेवोभयविशिष्टं प्रतिपाद्यते ॥ (१८१-१८२)**

एतन्निरस्यति— **तदिदमसारम्** इत्यादिना । प्रथमं चरमोक्ततया धीस्थं व्युत्पत्त्यन्तरं व्युदस्यति — **सर्वेषु** इति । **सर्वेषु**— समानाधिकरणेषु व्यधिकरणेषु चेत्यर्थः । क्लृप्तव्युत्पत्त्या [3] स्वार्थबोधे संभवति नान्यक्लृप्ति-र्न्याय्येत्यर्थः । तर्हि वाक्यभेदः कथमिति शंकापाकरणार्थः **संसर्गविशेष**

1. सामान्यविषये वा-**अ.**
2. प्रधानांशोक्किरिति-**क.**
3. स्वार्थबाधे-**क.**

शब्दः । ततः किमित्यत्राह— **तत्र** इति । ऐक्यधीरेव शाब्दी, विशेषणान्वयधीस्त्वैन्द्रियिकीति, अतीन्द्रिये तु न सा, तत्र त्वैक्यधीरेवेति शङ्काव्युदासाय प्रत्यक्षविषयं परोक्षविषयं चोदाहरणद्वयं दर्शयति—**यथा** इति। [1]आनीयते—विशेषणाप्रतीतौ अनीलमप्यानीयेतेति भावः । लोकवेदाधिकरणनयमुपजीव्याह —**एवम्** इति । मिथः समवायप्रसङ्गं परिहरति— **न च** इति । उत्तरत्र विस्तरेण वक्ष्यमाणत्वादत्र परिहारः संक्षिप्तः । [2]यथाऽनुपपत्तिः न तथा वाच्यमित्यर्थः। पृथक् स्मारितार्थानां पदानां यथायोग्यं परामर्शनीयत्वात् [3] स्मारणपरामर्शदशयोः न तत्प्रसङ्गः। वाक्यार्थाभिधानं तु युगपदिति न तत्रापि प्रसङ्गः । [4]ज्ञाताज्ञातविभागस्तु परामृष्टसिद्ध इति भावः। स्वोक्त्यनुगुणं लक्षणग्रन्थमाह—**तथा हि** इति । [5] न हि [6] विशेषणान्तरविशिष्टे विशेषणान्तरान्वयोक्तिः सामानाधिकरण्यमित्युक्तमिति भावः । अत एव युगपत्पक्षे विशेषणविशेष्यैक्यप्रसक्तिश्च परिहृता । न हि विशेषणविशेष्ययोः ऐक्यबोधनं सामानाधिकरण्यमित्युक्तमिति भावः । विशेष्यमात्रैक्यस्य प्रत्यक्षसिद्धत्वात् तन्मूला व्युत्पत्तिश्च न विशेषणविशेष्यैक्यविषयेति साऽत्र नियामिका मन्तव्या । लक्षणग्रन्थं विवृणोति—**अन्वयेन** इति । नान्वयरूपार्थस्य निवृत्तिपरत्वं कल्प्यमित्यर्थः । सर्वत्र [7] यथाव्युत्पत्त्येवार्थश्चेत् वृत्त्यन्तरं व्युत्पत्त्यन्तरं वा क्वचिदपि न स्यादित्यत्राह — **यत्र तु** इति । मुख्यासंभवे वृत्त्यन्तरं, तदसंभवे व्युत्पत्त्यन्तरम् । वृत्त्यन्तरेऽपि अन्यतरस्यैवामुख्यत्वं, न द्वयोः । इतरस्य च न निर्विशेषार्थत्वम्, वृत्त्यन्तरोपस्थापितविशेषसमर्पकत्वादिति भावः । '**गौर्वाहीकः**' इतिवत् अत्रापि स्यादित्यत्राह—**नीलोत्पल** इति ॥

---

1. अनियते विशेषण–क. 2. यथा उपपत्तिः–अ.
3. स्मारणपरामर्शदर्शनयोन्न–अ. 4. ज्ञाताज्ञातविवेकस्तु –क.
5. न हीति–अ. 6. विशेषणान्तरविशिष्टेऽपि–क.
7. तथा व्युत्पत्त्यैव–क.

**अथ मनुषे — एकविशेषणप्रतिसंबन्धित्वेन निरूप्यमाणं ...**
**... देशद्वयसंबन्धविरोधस्तु कालभेदेन परिह्रियते ॥** ( १८२–१८३ )

विशेषणभेदे विशेष्यभेदं शङ्कते— **अथ** इति । **विशेषणान्तर-प्रतिसंबन्धित्वात्** हेतोः तस्मात् प्रतिसंबन्धिनो **विलक्षणम्** इत्यर्थः । **एकविशेषण-**[1]**प्रतिसंबन्धित्वेन** इति । घटत्वान्वयस्य पटत्वान्वयस्य च भेदात् घटपटयोः यथा नैक्यं, तद्वदत्रापीति भावः । तर्हि किंपरत्व-मित्यत्राह— **अपि तु** इति । परिहरति— **स्यादेतत्** इति । अत्राप्ययोग्यता स्यादित्यत्राह— **अयोग्यता च** इति । उपपादकत्वं विवृणोति— **अन्यथा** इति । उपलक्षणतया निमित्तमित्यत्राह— **विशेषणानाम्** इति । **अनादरः**— तात्पर्याभावः । तर्हि त्वत्पक्षेऽपि जन्मादिषु ब्रह्मोपलक्षणेषु [2]एकतरवैयर्थ्यं स्यात् इत्यत्राह— **उपलक्षण** इति । तत्र जन्माद्यनुगुणज्ञानशक्त्याद्युपलक्ष्या-कारभेदात् न वैयर्थ्यम्, न तथा त्वया वक्तुं शक्यं [3]सविशेषत्वापत्ते-रित्यर्थः । 'सोऽयम' इत्यादौ विरोधं परिहरति— **सोयम्** इति । देशकालान्तरसंबन्धिनः सन्निकृष्टदेशकालसंबन्धित्वमेव विरोध इति शङ्कायाम्, एकस्य किं कालद्वयसंबन्धो विरुद्धः, उत देशद्वयसंबन्धः इति विकल्पं मत्वा, प्रथमं शिरो दूषयति— **अत एव हि** इति । **अत एव**— एकस्य कालद्वय-संबन्धाविरोधादेव । **प्रतीतिविरोधे**— कालद्वयसंबन्धप्रतीतिविरोधे । द्वितीयं व्युदस्यति— **देशद्वय** इति ॥

**यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचि-त्वम् ... ... तस्मात् एकहायन्यन्वयनियमोऽरुणिम्नो न स्यात् — इति ॥** ( १८३–१८४ )

---

1. प्रतिसंबन्धिना इति । पटत्वा–अ.
2. एकेतर-अ.
3. सविशेषणत्व-क.

एवं सामानाधिकरण्यस्य [1] प्रवृत्तिनिमित्तभेदेन ऐकार्थ्यबोधकत्वं लोकसिद्धमिति दर्शितम्। वेदसिद्धं च इत्याह—**यतः** इति। 'यतः' 'अतः' इत्यनेन प्रागुक्तन्यायानामरुणाधिकरणे विवक्षितत्वं सूचितम्। 'अरुणया' इत्यादिपदानां न सामानाधिकरण्यमित्यत्राह— **तदुक्तम्** इति। सूत्रं न त्वदुक्तार्थपरमित्याशङ्कायामर्थान्तरं त्वसमीचीनव्याख्यारोपितम्, अस्मदुक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकृदभिमतौ इत्यभिप्रायेणाह— **तत्रैवम्** इति। अत्र तु गुणपदस्य [2] द्रव्यपर्यन्तत्वं पूर्वपक्षे राद्धान्ते चानुयायि। आकृत्यधिकरणे तु एकैकप्रातिपदिकार्थश्चिन्तितः; इह तु तत्तत्स्थसमानविभक्त्यर्थ इति भिदा। किमारुण्यमेकहायनीमात्रान्वयि, उत प्राकरणिकसर्वद्रव्यान्वयि; तदर्थं किमेकं वाक्यम् उत [3] भिन्नवाक्यम् इति इदं चिन्ताद्वयं व्याख्यान्तरेऽपि तुल्यम्। अधिकं चिन्त्यते— किम् 'अरुणया' इत्यादिपदानि व्यधिकरणानि उत न; तदर्थं कारकविभक्त्यन्तत्वं किं सामानाधिकरण्यविरोधि उत न इति। [4] विरोधीति पूर्वः पक्षः, नेति सिद्धान्तः। 'अरुणया' पदस्य द्रव्यपर्यन्तत्वे, विशिष्टकरणैकत्वेन क्रयस्य तत्साध्यतारूपार्थाभेदात् एकवाक्यत्वसिद्धिरिति वाक्यभेदाधीनपूर्वपक्षोत्थितिर्न स्यादित्यत्राह — **यद्यपि** इति। [5] सामान्येन द्रव्यमात्रपर्यन्तत्वेऽपि द्रव्यविशेषपर्यन्तत्वनियमो न स्यादित्यर्थः। कुत इत्यत्राह—**एक** इति। प्रागुक्तविशेषणविवक्षाधीनानुपपत्तिभिः[6] क्रियान्वयबोधोपक्षीणायाः कारकविभक्तेः मिथोऽन्वयाबोधकत्वाच्च विशेष्यैक्यं न सिध्येत्। अत्र मिथोऽन्वयो हि विशेष्यैक्यम्। तदभावात् वैयधिकरण्यं स्यात्। तत्र 'एकहायन्या क्रीणाति' इत्यनेन एकहायन्याः क्रयसंबन्ध

---

1. प्रवृत्तिनिवृत्तिभेदेन—क.
2. द्रव्यपर्यन्तत्वं पूर्वपक्षसिद्धान्ते-अ.
3. भिन्नवाक्यम्-इदं—अ. 4. विशेषणमिति—अ.
5. सामान्ये द्रव्य—अ. 6. विवक्षानुपपत्ति—अ.

उक्तः । तच्च 'अरुणया' इति वाक्येन तस्या अरुणिमसंबन्ध उक्तः स्यात् । अरुणिम्नो द्रव्यविशेषं विना क्रयसाधनत्वायोगात् । [1] ततश्च एकहायन्याः क्रयसंबन्धारुण्यसंबन्धरूपार्थद्वयस्य एकवाक्येन प्रतिपादयितुम् [2] अशक्यत्वात् इत्यर्थः । ततः किमित्यत्राह— **ततश्च** इति । स्ववाक्यस्थत्वाभावात् प्रकरणेन द्रव्यविशेषनिश्चये तस्य सर्वद्रव्यसाधारण्यात् आरुण्यं तत्स्थसर्वद्रव्यान्वयीत्यर्थः । स्त्रीलिङ्गत्वं कथमित्यत्राह— **अरुणया** इति । पूर्वपक्षमुपसंहरति— **तस्मात्** इति ॥

**अत्राभिधीयते — 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' ... ... भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्' इत्यादिषु इति ॥** (१८४-१८५)

सिद्धान्तपरं [3] सूत्रमवतारयति — **अर्थैकत्वे** इत्यादि । सूत्रस्याक्षरार्थमाह — **अरुणया** इत्यादिना । **अर्थैकत्वे** इत्यस्य पूरकपदान्तरमध्याहृतम् **आरुण्यविशिष्टद्रव्य** इति । द्वितीयपदं व्याचष्टे — **एकहायनीद्रव्यारुण्यगुणयोः** इति । **पदेनैव**, न तु वाक्येनेत्यर्थः । **'ऐककर्म्यात्'** इत्येतत् व्याचष्टे— **क्रयाख्य** इति । **अविरोधात्** — वाक्यभेदरूपविरोधाभावात् । **'नियमः स्यात्'** इत्यंशं व्याचष्टे — **अरुणिम्नः** इति । प्रकरणनिश्चेतव्याभावात् इति भावः ॥

गुणान्वयः पदेनैवावसेयोऽस्तु, ततः किं [4] वाक्यभेदायत्तानियमपरिहारस्य इति शङ्कायां प्राक् संक्षिप्तं विवृणोति— **यदि** इति । तर्हि सामानाधिकरण्यकृत्यं किमित्यत्राह— **एकहायनी** इति । कथं न गुणान्वयः सामानाधिकरण्यावसेयः इत्यत्राह — **विशिष्टद्रव्यैक्यम्** इति । **द्रव्यम्**—

1. अथ–अ. 2. अशक्तत्वात्–अ.
3. सूत्रमवतारयति–न तु वाक्येन–अ. (मध्ये ग्रन्थपातः)
4. वाक्यभेदायत्तनियम–क.

विशेष्यम् । विशेषणांशैक्यव्युदासाय **द्रव्य** शब्दः । लक्षणग्रन्थेन संवादयति— **भिन्न** इति । न हि 'विशेषणविशेष्यान्वये वृत्तिः सामानाधिकरण्यम्' इत्युक्तम् । एवं प्रातिपदिकतत्स्थसमानविभक्तिवाक्यैः गुणान्वयमिथोऽन्वयक्रयान्वयानां बोध्यत्वमुक्तम् । [1]"परैश्चोपेतमिति दर्शयति— **अत एव** इति । **अत एव**– कृत्यत्रयस्य यथोक्तप्रकारत्वादेव । 'एकहायनी' पदेन निराकांक्षत्वेऽपि [2]इतरपदस्य श्रूयमाणस्योत्थापिताकांक्षतया अन्वयो न्याय्यः यथा रक्तपदस्य इति चाभिप्रायः ॥

उक्तं विवृणोति— **पटस्य** इत्यादिना । अत्र तु विशेषणानि बहूनि [3]कारकविभक्त्यन्तानि चेति रक्तादिवाक्यवैषम्यान्नान्वयः तेषामित्यत्राह— **एवमेकेन** इति । **देवदत्तः** इति । चिद्वाचकत्वाचिद्वाचकत्ववत् इदं [4]वैषम्यमप्रयोजकमिति भावः । **दण्डी** इति बाह्यविशेषणम् । **शुक्लेन** इति करणकारकोदाहरणम् । **नीलोत्पलम्** इति समस्तं कर्मविभक्त्यन्तं च । तत्रापि अनेकपदान्वयं दर्शयति— **गाम्** इति । वैदिकं संप्रदानाद्युदाहरणम् **अग्नये** इति । पक्षेऽपि तथेत्याह— **एवम्** इति । कारकविभक्तेः क्रियान्वयबोधकत्वेऽपि [5]प्रथमाविभक्तिवत् संख्यान्वयबोधकत्वस्य 'पशुना' इत्यादौ दर्शनात् परस्परान्वयबोधकत्वं च युक्तम् । कारकविभक्तित्वैकवचनत्वाद्याकारभेदवत् [6]समानविभक्तित्वाकारभेदात् मिथोऽन्वयो युक्तः । पदान्तरपरामर्शविलम्बस्तु, विरोधाभावात् अकिञ्चित्करः, तदभावस्तु आर्थान्वयवादिभिरुपेत एव । न केवलमविरोधमात्रादन्वयसिद्धिः प्रयोगस्तु नियामकः कारकविभक्त्यन्तानां संख्याक्रियान्वयबोधनं प्रयोगसिद्ध इति [7]चरमसिद्ध्यभिप्रायेण प्रथमान्तकारकविभक्त्यन्तबहुवाक्योदाहरणम् ॥

---

1. अपरैश्च–क. 2. परपदस्य–अ.
3. कारकविभक्त्यन्तोक्तानि–अ.
4. वैषम्यं प्रयोजकं–अ. 5. प्रथमावत्–क.
6. समानविभक्तिस्वरूपाकारभेदात्–क.
7. चरम इत्यभिप्रायेण–क. (चरमयुक्त्यभिप्रायेण ?)

अथ विशेषणविवक्षाधीनानुपपत्तयः प्रागेव परिहृताः इति तत्रान्योन्यसमवायपरिहारं प्राक् संक्षिप्तं विस्तरेण वदन् [1] करणकारकरूपविषयनिरूपणस्य सर्वकारकविभक्त्यर्थत्वम् उक्तकृत्यद्वयस्य क्रमभावित्वाविवक्षां च दर्शयति— **एतदुक्तम्** इति । **यथा** इत्यादि । यथा व्यधिकरणवाक्येषु अन्योन्यसमवायादिचोद्यं युगपदभिधानेन सर्वैः कारकैः क्रियाया एव विशेष्यत्वात् परिहृतं, तथा समानाधिकरणवाक्येऽपि अनेकविशेषणैः एकस्य युगपत् विशेष्यत्वात् अविरोध इत्यर्थः ॥

**यत्तु – उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायी ...**
**... नैतदेवं, त्वंपदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात् ॥**
**(१८५–१८६)**

[2]अथ परोक्तपूर्वपक्षराद्धान्तानुगतं तयोरसाधारणं चार्थं व्युदस्यति— **यत्तु** इत्यादिना । परोक्तं प्रयोजकमुपगम्य [3]प्रयोज्यगुणमात्रपर्यन्तत्वं दूषयति— **तन्न** इति । तदपवादकतया [4]त्वदभ्युपगतसामानाधिकरण्यस्यात्र समर्थितत्वादित्यर्थः । प्रयोजकं दूषयति— **उपात्तद्रव्य** इति । अनैकान्तिकत्वादित्यर्थः । किं प्रयोजकमित्यत्राह— **पटस्य** इति । विषमविभक्तिनिर्देशकृतेत्यर्थः । इदमपि न प्रयोजकम्; पटस्य शुक्लो भाग इत्यत्रासमानविभक्तिनिर्देशेऽपि गुणिपर्यन्तत्वात् इत्याशंक्य प्रतिबन्द्यभिप्रायेणाह— **तत्रैव** इति । उपात्तद्रव्यकवाक्यस्थत्वस्य सामानाधिकरण्यमप[5]वादकतयोक्तम्, तदप्यप्रयोजकम् । सामानाधिकरण्याभावेऽपि उपात्तद्रव्यकवाक्यस्थगुणशब्दस्य गुणिपर्यन्तत्वदर्शनात् । नैवम् भागशब्देन सामानाधिकरण्यादिति चेत् भागशब्देनासमानविभक्तिनिर्देशोऽपि नास्तीति व्यभिचाराभावात् गुणमात्र-

---

1. कारणकारकविषय—अ. 2. अथ पूर्वपक्ष—क
3. प्रयोज्यकं गुण—अ. 4. त्वदभ्युपेत—अ.
5. वादकं त्वयोक्तं तदस्य प्रयोजकम्—क.

वाचित्वे स एव प्रयोजक इत्यर्थः। उपात्तद्रव्यकवाक्यस्थत्वं त्वनैकान्तिकमेव आकृतिनयात् । 'श्वेतो धावति', 'श्वेतमालभेत' इत्यादौ गुणशब्दो गुणिपर्यन्तः ; 'पटस्य शुक्लः' इत्यत्र उपात्तद्रव्यकवाक्यस्थत्वात् स गुणमात्रपरः । 'पटः शुक्लः' इत्यत्र तदपवादकं सामानाधिकरण्यमिति क्लृप्तित्रयम् । आकृतिनयोऽसमानविभक्तिश्च इत्यस्मत्पक्षे लाघवम् ॥

अथ परोक्तः पूर्वपक्षार्थः स्वसिद्धान्तयुक्त्या परिहृत इत्याह— **यत् पुनः** इति । **अवरुद्धतया**- निराकांक्षतया । राद्धान्तार्थं दूषयति— **राद्धान्ते च** इति । शाब्दान्वये सिद्धे नष्टाश्वदग्धरथनयात् आर्थत्वमनुपपन्नमित्यर्थः । वाक्यभेदेन पूर्वपक्षश्चेत् कथमुपात्तद्रव्यकवाक्यस्थत्वम्? अतोऽतिदुःस्थः पूर्वपक्षः आलिङ्गायोगाच्च । राद्धान्तश्च अतिदुःस्थः, करणद्वयाकांक्षाकल्पक'च' शब्दाद्यभावात् । स्वोक्ताधिकरणार्थमुपसंहरति— **अतः** इति ॥

एवमस्तु ; ततः किं प्रस्तुतसामानाधिकरण्यस्य इत्यत्राह— **तस्मात्** इति । **तस्मात्**—सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थपरत्वस्य लोकवेद-सिद्धत्वादित्यर्थः । तत् परमते न संभवतीत्याह— **तत् तु** इति । प्रवृत्ति-निमित्तज्ञानादित्यर्थः । तच्छब्दावगतगुणवत् त्वंशब्दावगतगुणोऽप्यभ्युपेत्यः । तदा परस्य सदोषत्वमिति शङ्कते— **अभ्युपगच्छतोऽपि** इति । परिहरति— **नैतत्** इति ॥

**एतदुक्तं भवति — सच्छब्दाभिहितं निरस्तनिखिलदोष-गन्धं .... .... सर्वे वाचकाः शब्दाः अचिज्जीवविशिष्टपरमात्म-वाचिनः इत्यवगतम् – इति ॥** (१८६)

कथमन्यवाचिशब्दस्यान्यवाचित्वम्? द्वारद्वारिभावविपर्ययश्च किं न स्यादित्यत्राह— **एतदुक्तम्** इति । **सच्छब्द** इति । कारणवाचिसच्छब्दः तदनुगुणगुणविशिष्टपरः इति भावः । सामानाधिकरण्यनिर्देशश्रुत्यन्यथानु-

पपस्या अन्तर्यामिपरत्वं कल्प्यम् इति फलितमित्यभिप्रायेण **निरस्त** इत्या-शुक्तम् । 'बहु स्याम्' इति सामान्येन नामरूपयोः [1]परमात्मीयत्वमवगतम् । सन्निधिसमाम्नातानामिव परमापूर्वशेषत्वम् । तत्र व्रीह्यादिद्वारा प्रोक्षणादेरिव तेजःप्रभृतिनामरूपयोः सद्वारकत्वं नामरूपव्याकरणश्रुत्या अवगतम् [2] । **प्रमुख** शब्दो वाय्वादिपरः । **देवादि** इति । नानुप्रवेशपूर्वदशोक्तिः, किं तु वक्ष्यमाणचिदचिद्विभागार्थं जगदाकारकथनम् । **जीववर्गम्** इति । श्रुतिस्थ 'विज्ञान' शब्दः प्रातिपदिकविभक्त्यर्थवर्णनम् न जीवपरयोः अन्यतरत्वं शरीरत्वे प्रयोजकमिति **चेतन** शब्दः । जीवव्यावृत्त्यर्थं **स्वेच्छयैव** इत्युक्तम् । नामरूपव्याकरणस्य स्वपर्यन्तत्वं स्पष्टयति — **एवम्** इति । 'स्वरूप' इति पाठे 'स्व'शब्दः ईश्वरपरः । 'रूप' शब्दः चिदचित्परः । **वस्तुत्वम्**— देवादित्वम् । 'जीवेनात्मना' इत्यस्यार्थं वक्तुं [3]तत्र प्रतिपन्नां-शमाह— **अनेन** इति । **मया** इति 'आत्म'शब्दव्याख्यानम् । 'मृदात्मकः' इतिवत् स्यादित्यत्राह— **ब्रह्म** इति । कुत इत्यत्राह— **इदम्** इति । ततः किं [4]प्रकृतस्य इत्यत्राह — **अतः** इति । **अतः** — तत्पर्यन्ततया श्रुतिसिद्धत्वात् ॥

**किं च 'ऐतदात्म्यमिदं सर्वम्' इति चेतनमिश्रं प्रपञ्चमिदं ... ... परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव ॥** (१८६–१८८)

आकृतिनयं शरीरवाचकेषु सञ्चारयिष्यन् चिदचितोः शरीरत्वाक्षेपकं वाक्यं दर्शयति— **किं च** इति । ततः किमित्यत्राह— **एवं च** इति । **चेतनाचेतनम्** इति । सर्वशब्दासङ्कोचपूर्ववाक्यश्रुत्यन्तरैकार्थ्यानि अभिप्रेतानि । शरीरत्वकण्ठोक्तिं दर्शयति— **तथा च** इति । '**अन्तः**'

1. परमात्मात्मीयत्व–अ. 2. श्रुत्यवगतम्–अ.
3. तत्प्रतिपन्नांश–अ. 4. प्रस्तुतस्य–अ.

इत्यादि शरीरलक्षणम् । विशेषणाभ्यां नृपनभोऽव्यावृत्तिः । ततः किं सामानाधिकरण्यस्य इत्यत्राह— **अतश्चेतन** इति । तत् कथम् इत्यत्राह— **यथा** इति ।

तल्लाक्षणिकमिति शङ्कायाम्, आकृतिनयविषयत्वमाह— **शरीरस्य** इति । जातिगुणवाचिपदानामिव इति हृदयम् । तेषामपि द्रव्यपर्यन्तत्वं कथमित्यपेक्षायाम्, आकृतिनयं वक्तुं [1] प्रकारं प्रकारिणो विविच्य दर्शयति— **प्रकारो हि** इति । तद्वाचिनः प्रकारिपर्यन्तत्वमुपपादयति— **तस्य** इति । **तद्वस्त्वपेक्षत्वेन** – प्रकारसापेक्षस्वरूपस्थितित्वेन । **तत्प्रतीतेः**– यथावस्थितप्रकारप्रतीतेः । एवं [2] न्यायः शिक्षितः । तत्फलमाह— **अत एव** इति ॥

**ननु —'खण्डो गौः खण्डः शुक्लः' इति जातिगुणवाचिनामेव पदानां ... ... ... जीवादन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एव आनन्दमयः परमात्मा ॥** (१८८–१८९)

**ननु** इत्यादिनोक्तं चोद्यं परिहरति — **नैवम्** इति । **द्रव्यं वा** इति । अविशिष्टः प्रयोग इति भावः । प्रयोजकमाह— **यस्य** इति । अननुगतं प्रयोजकीकृत्य व्याप्यमुख्यत्वाश्रयणमुपयुक्तम् इति[3] भावः । अनुगतमाह— **यस्य** इति । उक्तविपर्यये प्रयोजकमाह— **यत्र** इति । **इति निरवद्यम्** — सर्वप्रयोगानुगतितद्विषयव्यावृत्तिभ्यामव्याप्त्यतिव्याप्ती[4] नेत्यर्थः ।

उक्तं प्रकृतेन घटयति— **तदेवम्** इति । सामान्येन वैयधिकरण्येनोक्तस्य सामानाधिकरण्येन विशेष उपसंहारः इत्यर्थः । तेन दोषस्पर्शचोद्यस्य

1. प्रकारप्रकारिणौ–अ. 2. न्याये शिक्षिते–अ.
3. अयुक्तमिति–अ. 4. व्याप्तिर्नेत्यर्थः–अ.

परिहृतत्वमाह — **एवं च** इति । परपक्षे ये दोषाः ते स्वपक्षे न सन्तीत्याह — **अतः** इति । **प्रकरण** इति । 'तदैक्षत' इत्याद्यविरोधः । **सर्व** इति — भेदश्रुतिघटकश्रुत्यविरोधः । **ब्रह्मणि** इति — अर्थविरोधाभाव उक्तः । प्रागुक्त[1]जीवगतधर्मास्पर्शिफल दोषरूपाविद्याद्यभावः । सामानाधिकरण्यस्य सद्वारकत्वात् भेदापादकत्वमाह — **अतः** इति ॥

**यदुक्तम् – 'तस्यैष एव शारीर आत्मा' इत्यानन्दमयस्य ... ... अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः ॥ (१३) (१८९)**

अथ पूर्वपक्षोक्तं हेत्वन्तरं **यदुक्तम्** इत्यादिनाऽनूद्य परिहरति — **तदयुक्तम्** इत्यादिना । **कथम्** — शारीरात्मत्वं परस्येति कथं ज्ञातमित्यर्थः । अन्नमये शारीरात्मनोऽश्रुतत्वात्, प्राणमये 'यः पूर्वस्य' इत्यनुवादो न युक्त इति तस्य प्राप्तिं दर्शयति — **तस्माद्वा** इति । **अतः** — अर्थत श्रुत्यन्तराच्च इत्यर्थः । 'तस्यैष' इति वाक्ये प्राणमयस्याश्रुतत्वात तद्विषयत्वं ज्ञापयति — **प्राणमयम्** [2]इति । तत् व्याचष्टे — **पूर्वस्य** इति । उक्तं मनोमयादावतिदिशति — **एवम्** इति । आनन्दमयस्यात्मान्तरश्रवणान्न परमात्मत्वमित्यत्राह — **आनन्दमये तु** इति । 'आत्मेश्वरम्', 'न तस्येशे कश्चन' इतिवदिति भावः । **तत् कथम्** — प्रकरणवैरूप्यमस्वारस्यं चेति [3]भावः । परिहरति — **विज्ञान** इति । [4]आनन्दमयं प्रति श्रुते 'यः पूर्वस्य' इति वाक्ये 'पूर्व' शब्दविवरणरूपो **विज्ञानमय** शब्दः । ततः किमित्यत्राह — **एवम्** इति । प्रकरणादर्थसामर्थ्यप्राबल्यमभिप्रयन्नाह — **अभ्यास** इति । अभ्यस्तानन्दस्य 'आनन्दं ब्रह्मण' इति ब्रह्मसंबन्धित्वश्रवणात्, 'आनन्दो ब्रह्म' इति ब्रह्मण

---

1. जीवकृत-अ.  2. इति । व्याचष्टे-अ.
3. भाव । विज्ञान इति-क.  4. आनन्दमयपूर्वश्रुते-अ.

आनन्दशब्दवाच्यत्वात् [1] मयट्सहिततद्रहितयोः ऐकार्थ्येन 'आनन्द' 'आनन्दमय' शब्दयोः पर्यायत्वात् सिद्धजीवभावविज्ञानमयान्तरात्मत्वादिना च आनन्दमयस्य परमात्मत्वं निर्णीतम् । अतः शारीरात्मनः आनन्दमयस्य च परमात्मत्वसिद्धेः परमात्मन आत्मान्तरवत्त्वस्यामानकत्वाच्च षष्ठीस्वारस्यभङ्गेन अनन्यात्मपरत्वं सिद्धमित्यर्थः । शारीरात्मत्वं परस्यैव मुख्यमित्याह— **एवं च** इति । अकर्मकृतत्वात् **निरुपाधिकत्वम्** । तदेवोपपादयति— **अत एव** इति । **अभियुक्तैः**— बोधायनादिभिः । 'संहितमेतच्छारीरकम्' इति हि तदुक्तिः । सूत्रार्थमुपसंहरति— **अतः** इति ॥ १३ ॥

**आह— नायमानन्दमयो जीवादन्यः, विकारशब्दस्य ... ... मयट्प्रत्ययस्य श्रवणात् आनन्दमयो जीवादनतिरिक्त इति ॥ (१९०)**

[2]द्वितीयसूत्रस्थशङ्कां प्रस्तौति— **आह** इति । प्रत्ययस्य विकारार्थत्वं कथमित्यत्राह — **मयड्वा** इति । विकारावयवपरामर्शिना '**एतयोः**' इति पदेन विकारार्थत्वं ज्ञापितम् । वृद्धशरादीनां [3]'प्राग्दीव्यतोऽण्' इत्यधिकार-सिद्धाणप्रत्ययं व्युदस्यता नित्यं मयट् विहितोऽनेन सूत्रेण । वृद्धयादित्वात् आनन्दशब्दस्य वृद्धत्वम् । आकारश्च वृद्धिः । **ननु** इत्यादि । **स एव** इति । जीवपरत्वेऽपि विकारार्थत्वमयुक्तमिति भावः । अप्रथप्रायन्यायेन परिहरति — **नैवम्** इति । प्राचुर्यार्थेऽप्यभिन्नतासिद्धिमाह— **प्राचुर्य** इति । प्रयोगप्राचुर्यमाह— **किं च** इति । अवयवापेक्षया विकारः प्रसिद्ध इति तद्व्यावृत्त्यर्थं **प्रथमतरम्** इत्युक्तम् । जीवस्य विकारत्वार्हत्वमाशंक्याह— **जीवस्य** इति । अवस्थान्तरयोगो हि विकार इति भावः । निगमयति— **अतः** इति ॥

---

1. मयडन्ततद्रहितयोः–क.
2. द्वितीयसूत्रस्य शङ्कां–अ.
3. प्राग्दीव्यतोऽयुक्तमिति भावः–अ. (ग्रन्थपातः)

तदेतदनुभाष्य परिहरति –

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १-१-१४ ॥

... ... 'अन्नमयो यज्ञः', 'शकटमयी याला' इत्यादिषु दर्शनात् ॥ (१९०–१९१)

शङ्कायाः सूत्रस्थत्वात् **अनुभाष्य** इत्युक्तम् । **विकारशब्दान्नेति चेन्न प्राचुर्यात्** । कस्मिन् कस्य प्राचुर्यमित्यत्नाह— **परस्मिन्** इति । संभवतु प्राचुर्य, तत्स्वीकारे शब्दस्य तद्वाचकत्वं चापेक्षितमित्यत्नाह— **प्राचुर्यार्थे च** इति । विकारार्थत्वे को बाधक इत्यत्नाह— **एतदुक्तम्** इति । अर्थविरोधो बाधक इत्यर्थः ।

बाधकदृष्ट्या त्यज्यते चेत्, साधकसद्भावात् स्वीक्रियतामित्यत्नाह— **औचित्यात्** इति । प्रकरणं लिङ्गात् दुर्बलम् ; अर्थविरोधे [1]रूढिश्च दुर्बला यथा गङ्गापदादाविति भावः । औचित्यं च नेत्याह— **किं च** इति । [2]अर्थात् मयटो विकारार्थत्वं विवक्षितमिति शङ्कां शमयन् प्राणमयशब्दार्थमाह— **अतः** इति । प्रथमयोजनायां प्राणवृत्तिमान् इत्यर्थः । द्वितीययोजनैव साधीयसी । [3]प्रत्ययावैयर्थ्यार्थत्ववृत्तिमात्रपरत्वमाश्रितं प्राणशब्दस्य । प्राचुर्येऽपि प्रयोगबाहुल्यमाह– **न च** इति । [4]अवयवत्वापेक्षया प्रसिद्धिप्राचुर्यम् ॥

यदुक्तम्— आनन्दप्राचुर्यमल्पदुःखसद्भावमवगमयति इति ... ... ... ... **कर्मणा ज्ञानानन्दौ संकुचितावित्युपपादयिष्यते** । अतश्च आनन्दमयो जीवादन्यः परं ब्रह्म ॥ १४ ॥ (१९१)

---

1. प्रौढिश्च–क.
2. अर्थवन्मयटो–अ.
3. प्रत्ययावैयर्थ्य वृत्ति–क.
4. अवयवार्थापेक्षया–अ.

**यदुक्तम्** इत्यादिना पूर्वपक्षयुक्त्यन्तरमनूद्य परिहरति— **तदसत्** इति । समानाश्रयविजातीयाल्पत्वमन्तरङ्गतया प्रतियोगीति प्रा ग्मिति परस्य भावः । तद्दूषयति— **तत्प्रचुरत्वं हि** इति । प्राचुर्यं प्रमाणान्तरसिद्धं मानाविरुद्धमर्थं प्रतियोगितयाऽपेक्षते, [1]न तु प्रतियोगिविशेषसाधकमित्यर्थः । तत्सद्भावः केनावगम्यत इत्यत्राह— **इतर** इति । पराभिमतप्रतियोगिनः पक्षे बाधितत्वमाह— **इह च** इति । तर्हि किमत्र प्रतियोगीत्यत्राह— **तत्र** इति । यथा 'तेजःप्रचुरो गभस्तिमान्' [2]इत्युक्ते, न तद्गततिमिराल्पत्वं प्रतियोगि, किन्तु [3]चन्द्रादिगततेजोमान्द्यमेव, तद्वदिति भावः । जीवानन्दाल्पत्वं प्रतियोगीति न परं न्यायसिद्धं, कण्ठोक्तं चेत्याह— **उच्यते च** इति ॥

**यच्च** इति । मयड्वाच्यविकारः स्वरूपान्यथाभावरूप एव, **स** चात्र नेत्यर्थः । ज्ञानानन्दस्वरूपस्य कथं दुःखाज्ञानसंभव इत्यत्राह— **संसार** इति । सूत्रार्थं परमप्रकृतेन सङ्गमयति— **अतः** इति ॥ १४ ॥

---

**इतश्च जीवादन्यः आनन्दमयः [परं ब्रह्म] –**

## तद्धेतुव्यपदेशाच्च ॥ १-१-१५ ॥

**'को ह्येवान्यात् ... ... ... आनन्दमय एवात्र आनन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥ १५ ॥** (१९२)

**तद्धेतुव्यपदेशाच्च**— कर्मकर्त्रैक्यासंभव उक्तः । आनन्दो ह्यत्र आनन्दयितोक्तः, न त्वानन्दमय इत्यत्राह— **आनन्दमय एव** इति ॥ १५ ॥

1. न तु स्वयं प्रतियोगि–अ.

2. इत्युक्ते तद्गत–अ.

3. चन्द्रगत–क.

इतश्च जीवादन्यः आनन्दमयः –

## मान्त्रवर्णिकमेव च गीयते ॥ १-१-१६ ॥

**'सत्यं ज्ञानमनन्तम् ... .... .... .... अतो जीवादन्य आनन्दमयः ॥ १६ ॥ (१९२)**

उपक्रमगतं हेतुमाह—**मान्त्रवर्णिकमेव च गीयते** । मान्त्रवर्णिकस्य जीवादन्यत्वं कथमित्यत्राह— **तथा हि** इति । ततः किमित्यपेक्षायां मन्त्र-ब्राह्मणयोः घटकवाक्यमाह— **तदेषा** इति । अभिमुखीकरणस्य चेतनधर्मत्व-व्युदासायाह— **प्रतिपाद्यतया** इति । 'उक्ता' इत्युक्ते पौरुषेयत्वशङ्कां व्युदस्यति— **अध्येतृभिः** इति । किमुक्तमित्यत्राह— **ब्राह्मण** इति । नित्य-निर्दोषत्वाविशेषान्न प्राबल्यदौर्बल्योक्तिर्युक्तेति भावः । मन्त्रवर्णेन भेदसिद्धिं दर्शयति— **जीवस्य** इति । मान्त्रवर्णिकं जीवादन्यदस्तु, तस्यैवानन्दमयत्वं कथमित्यत्राह— **अनन्तरं च** इति ॥ १६ ॥

**अत्राह— यद्यप्युपासकात् प्राप्यस्य भेदेन भवितव्यम् ... ... ... ... तस्मात् अनतिरिक्त आनन्दमय इति ॥ (१९२–१९३)**

अनन्तरसूत्रस्य शङ्कामाह— **अत्राह** इति । आच्छादिका विक्षेपिका च **समस्तार्थः**। ज्ञानत्वं वाङ्मनसनिवृत्तिश्च निर्विशेषत्वे हेतुः; अवस्था-भेदेनापि उपासकप्राप्यभेदोपपत्तेः न जीवान्यत्वमित्यर्थः ॥

अत उत्तरं पठति –

## नेतरोऽनुपपत्तेः ॥ १-१-१७ ॥

**परमात्मन इतरो जीवशब्दाभिलप्यो ... ... ... मुक्तात्म-स्वरूपादन्यत्वं सुस्पष्टमेव ॥ १७ ॥ (१९३–१९४)**

**नेतरोऽनुपपत्तेः**—उपाध्यनुक्त्या **निरुपाधिकत्वं** सिद्धम्। श्रुतिसिद्धं चेत्याह — **इदमेव** इति । विपश्चिच्छब्दार्थमाह — **विविधम्** इति । 'विपश्यच्चित्' इति वाच्यमित्यत्राह— **पृषोदर** इति । स्वमतेन मुक्तस्य विपश्चित्त्वानुपपत्तिरुक्ता, परमतेऽपि तामाह— **निर्विशेष** इति । इतिशब्दः सौत्रपञ्चमीव्याख्यानम् । न परं विपश्चित्त्वविरोधः, सर्वप्रमाणविरोधश्चेत्याह— **न केनापि** इति । ज्ञानत्वोक्तिरूपार्थगुणनिषेधः प्रागेव परिहृतः । [1]वाङ्मनसनिवृत्तिरूपस्त्वत्र परिह्रियते— **यतो वाचः** इत्यादिना । ततः किमित्यत्राह— **तथा च** इति । ब्रह्मणस्तुच्छत्वं पूर्वापरविरुद्धमिति चेत् निर्विशेषत्वमपि तथा इत्यभिप्रायेणाह— **ब्रह्मवित्** इति । प्रकरणविरोध उक्तः; स्ववाक्यविरोधमाह— **यतो वाचः** इति । **विद्वान्** इति मनोनिवृत्ति-व्याहतिः । **अनर्थकम्** — व्याहतार्थम् । व्याहतिः परिजिहीर्षिता चेत्, समुद्रघोषवत् [2]वाक्यतैव न स्यात् । वाक्यत्वे व्याहतिरवर्जनीयेत्यर्थः । स्वयं तदर्थमाह — **अतः** इति । **शत** इति । निर्विशेषत्वे अभिमते क्रमेण गुणापचयो वाच्यः, न त्वतिशय इति भावः । वाङ्मनसनिवृत्तिरस्ति चेत् कथं वेदनवचनमित्यत्राह— **एवम्** इति । **अनुपपत्तेः** इति सौत्रपदस्य अर्थान्तरमाह— **किं च** इति ॥ १७ ॥

**इतश्चोभयावस्थात् प्रत्यगात्मनोऽन्य आनन्दमयः—**

## भेदव्यपदेशाच्च ॥ १-१-१८ ॥

**'तस्माद्वा एतस्मात् ... ... मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायते ॥ १८ ॥** (१९४)

**भेदव्यपदेशाच्च** । **अन्नप्राणमनोभ्य इव** इति । न हि

1. वाङ्निवृत्ति-अ. 2. वाक्यमेव-अ.

तत्रावस्थाभेदेनान्यत्वमिति वाच्यम्, इहापि तद्वदिति भावः । अत्र वक्तव्यमाद्यसूत्र एव उक्तम् ॥ १८ ॥

इतश्च जीवादन्यः —

## कामाच्च नानुमानापेक्षा ॥ १-१-१९ ॥

**जीवस्याविद्यापरवशस्य ... ... ततश्च जीवादन्य आनन्दमयः ॥ १९ ॥**

**कामाच्च नानुमानापेक्षा** — स्थूलशरीरावस्थाचित्संसर्गापेक्षा इत्यर्थः । शङ्काहेत्वभावात् **अपेक्षा**शब्दवैयर्थ्याच्च न प्रधानव्यावृत्तिपरत्वं युक्तमिति भावः ॥ १९ ॥

इतश्च —

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १-१-२० ॥

**अस्मिन्–आनन्दमये ... ... स स एवेत्यनुन्मत्तः को ब्रवीति इत्यर्थः ॥** (१९५)

**अस्मिन्नस्य च तद्योगं शास्ति** — इदमुपेयपरमिति भिदा । कस्मिन् कस्य केन योग इत्यत्राह — **अस्मिन्** इति । किं शास्त्रम्, शास्त्यर्थः कः, कथं सूत्रार्थस्य हेतुत्वमित्यत्राह — **रसो वै सः** इति । **उच्यमाने** इति [1]शास्त्यर्थोक्तिः । हेतुत्वं दर्शयति — **यल्लाभात्** इति । **को ब्रवीति** इति वर्तमानव्यपदेशः स्फुटतरत्वादिति भावः ॥

**एवमानन्दमयः परब्रह्मेति निश्चिते सति .... .... ब्रह्मणः जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥ २० ॥**
(पृ. १९५–१९६)

---

1. शास्त्रार्थोक्तिः–अ.

नात्रानन्दमये आनन्दयोगं शास्ति शास्त्रम्, अपि स्वानन्द इत्याशङ्क्य 'आनन्द' 'आनन्दमय' शब्दयोरैकार्थ्यमाह — एवम् इति। यथा इति। अपर्यवसानात् [1] अनुकूलत्वसिद्धिरूपत्वाच्चेति भावः। व्यतिरेकनिर्देशहेतुमाह— अत एव इति। अतः— आनन्दानन्दमयपदैकार्थ्यात्। हेत्वन्तरमाह — अत एव च इति। स्थानप्रमाणमाह — उत्तरे च इति। अधिकरणार्थमुपसंहरति — अतः इति॥ २०॥

इति आनन्दमयाधिकरणम्—६

---

## ७. अन्तरधिकरणम् ॥

**यद्यपि मन्दपुण्यानां जीवानां कामात् ... ...**

## अन्तस्तद्धर्मोपदेशात् ॥ १-१-२१ ॥

**इदमाम्नायते छान्दोग्ये – 'य एषो ... ... यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" इति ॥**　　(२०१)

**अन्तस्तद्धर्मोपदेशात्** — अवान्तरसङ्गतिमाह — **यद्यपि** इति। जीवमात्रस्य जगत्सृष्ट्याद्ययोगेऽपि जीवविशेषस्य तत् युक्तम्। आनन्दवल्ल्यां प्रतिपाद्यस्य हि 'यश्चासावादित्य' इति आदित्यान्तर्वर्तित्वमुक्तं, तस्य च करचरणादिलक्षणदेहविशेषः श्रुतः, स च कर्मकृत इति शङ्कोदयात् पूर्वाधिकरणशेषत्वेन अन्तरधिकरणमारभ्यत इति सङ्गतिरिति भावः॥

विषयमाह — **इदम्** इति। **गेष्णौ** — गानविशेषौ। **अमुष्य** आदित्यस्य; देवतायामुपासनम् **अधिदैवम्**। देह उपासनम् **अध्यात्मम्**॥

---

1 अनुकूलस्वसिद्ध—अ.

## पूर्वपक्षः

**तत्र सन्दिह्यते-किमयमक्ष्यादित्यमण्डलान्तर्वर्ती .... .... मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपदेशपराणि इति ॥　　(२०१-२०२)**

**आदित्यादि** इति आदिशब्देन करचरणादिमद्देहसंबन्धपरवाक्यान्तराणामपि तुल्यन्यायता द्योतिता । सूत्रे **अन्तःशब्दः** अक्ष्यादित्यमण्डलसाधारणः । **जीवानामेव** इत्येतदुपपादयति—**कर्म** इति । प्रियाप्रिययोगार्थत्वमुपपादयति — **अत एव** इति । ज्ञानाद्यतिशयलोककामेशत्वादि कथमित्यत्राह— **संभवति च** इति । तत्संभवमुपपादयति — **मनुष्येषु अपि** इति । जीवबहुत्वात् व्याहृतिः, कर्मकृतत्वात् क्षयित्वं च इत्यत्राह— **अतः** इति । कारणशोधनोपायोपेयपरगिरां जीवपरत्वमाह— **जगत्** इति । **उपचितपुण्यविशेषे** इति । 'पाप्मभ्य उदितः' इति [1]पापमात्रं हि निषिद्धम्, न तु पुण्यमिति भावः ॥

## सिद्धान्तः

**एवं प्राप्तेऽभिधीयते-अन्तस्तद्धर्मोपदेशात्- ... ... अकर्मसंपाद्याः स्वाभाविका धर्मा जीवस्य न संभवन्ति ॥　　(२०२-२०३)**

राद्धान्तमाह—**अन्तः** इति । परमात्मनि सिद्धे हि तद्धर्मत्वमिति हेतोः साध्याविशिष्टत्वव्युदासायाह—**जीवेषु** इति । '**पाप्मभ्य उदितः**' [2]इत्युक्तिमद्वाक्ये **अपहतपाप्मत्वम्** इत्युक्तिः औपनिषदवाक्यान्तरस्मारणार्था । पाप्मशब्दं विवृण्वन् [3]बद्धव्यावृत्तिमाह— **अपहत** इति । **अपहतकर्मत्वम्** — पाप्मशब्दो मुमुक्ष्वपेक्षयाऽनिष्टफलदपुण्यपापात्मककर्मपर इत्यर्थः । 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते', 'स न साधुना कर्मणा भूयान् नो

1　पापमात्रमिह-अ.　　　2　इत्युक्तिमद्वाक्यैः-अ.

3　बन्धव्यावृत्ति-अ.

एवासुधुना कर्मणा कनीयान्' इत्यादिश्रुतिप्रसिद्धिद्योतको हि शब्दः। 'अपहत' शब्दं विवृण्वन् मुक्तव्यावृत्तिमाह — **कर्म** इति । जीवव्यावृत्तिं स्फुटयति — **कर्माधीन** इति ।

**तत्पूर्वकम्** — अपहतपाप्मत्वपूर्वकत्वात् स्वाभाविकमित्यर्थः । सङ्कल्पस्य अन्तरात्मत्वस्य च तत्पूर्वकत्वे वाक्यद्वयं दर्शयति — **यथाह** इति । तत्पूर्वकत्वकण्ठोक्त्यभावेऽपि सर्वशाखाप्रत्ययनयात् तत्पूर्वकसत्यसङ्कल्पपूर्वकत्वाच्च अन्यत्रापि तत्पूर्वकसिद्धिमभिप्रेत्याह — **सोऽकामयत** इति । **वाङ्मनस** इति । परिच्छेदकपरिमितिकृतं परिच्छेद्यस्य परिमितत्वमित्यर्थः ॥

**यत्तु — शरीरसंबन्धान्न जीवातिरिक्त इत्युक्तम्, तदसत्, ... ... परमात्मा परं ब्रह्म पुरुषोत्तमो नारायणः — इति ॥ (२०३)**

**यत्तु** इति पूर्वपक्षयुक्तिमनूद्य परिहरति — **तदसत्** इति । तत्पूर्वकत्वेन प्रतिपादनात् गुणान्तराणामिव देहस्यापि [1] अकर्मकर्तृत्वं स्वीकार्यमित्यर्थः । अन्यथासिद्धत्वान्न जीवत्वसाधक इति यावत् । इच्छाया असंभवं शङ्कते — **अथ** इति । कर्माचरणहेतुः स्वरूपानभिज्ञत्वम् । परिहरति — **स्यात्** इति । अभिमतत्वेऽननुरूपत्वम्, अनुरूपत्वेऽनभिमतत्वं च व्यावर्तयति — **स्वाभिमतः स्वानुरूपः** इति । विग्रहादरः स्वरूपानन्दवैकल्यसूचकः इत्यत्राह — **सर्वम्** इति ॥

कथं सर्वमुपपन्नमित्यत्राह — **एतदुक्तम्** इति । स्वरूपवत् गुणवच्च मानसिद्धत्वात् देहोऽभ्युपेत्य इत्यभिप्रायेणाह — **परस्यैव** इति । हेयप्रतिभटत्वमङ्गलगुणाकरत्वैकरूप्यम् — **एकरूपत्वम्** । अनित्यत्वादिविषयव्याप्तिमूलतर्कागोचरत्वम् — **अचिन्त्यत्वम्** । [2] **दिव्यशब्दो** द्रव्यसंस्थानवैलक्षण्य-

---

1. अकर्मकृतत्वं-अ. 2. अचिन्त्यदिव्यशब्दो-अ.

परौ। तस्य कथं निकृष्टदेवादिसाजात्यमित्यत्राह — **तदेव** इति। स्वरूपानन्दवैकल्यमपि न, स्वसंबन्धिभोग्यतायाः स्वभोग्यतातिशयनिबन्धनत्वादिति[1] फलितम्। **निरस्त** इत्यादेः प्राक् सौलभ्योपयोगिगुणोक्तिः। निर्दोषत्वतदुपपादकतद्विवरणरूपकर्मसंबन्धप्रत्यनीकत्वनिरस्तसमाभ्यधिकात्मत्वपरं **निरस्त** इत्यादिपदत्रयम्। **परं ब्रह्म** इति सामान्यशब्दः। भेदश्रुतिघटकश्रुत्यर्थगर्भं विशेषोपस्थापकम् अन्यत् पदद्वयम्॥

**'यतो वा इमानि भूतानि जायन्ते' ... ... अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव ॥ २१ ॥**
(२०३–२०५)

उक्तार्थे मानानि दर्शयति— **यतो वा** इति। कारणस्वरूपशोधकमानोक्तिर्दृष्टान्तार्था। गुणविभागोक्तिस्तदर्था[2] विवादशमनार्था च। **प्राकृतहेयदेहसंबन्धं कल्याणरूपं च** इति सामान्यविशेषगोबलीवर्दनयावभिप्रेतौ॥

[3]प्रागुक्तार्थस्य **तदिदम्** इत्यादिना पुनः कथनं वक्ष्यमाणवाक्यस्यैतदर्थत्वज्ञापनार्थम्। उपासकानुग्रहार्थत्वप्रतीतिः कथमित्यत्राह— **साधवः** इति। **आनुषङ्गिकस्तु** इति। **च** शब्दोऽन्वाचय इति भावः। आनुषङ्गिकत्वमुपपादयति— **सङ्कल्प** इति। त्रिगुणात्मकत्वव्यावृत्त्यर्थमाह— **प्रकृतिस्वभाव** इति। अविद्यात्वव्यावृत्त्यर्थमाह— **माया वयुनम्** इति। उक्तं स्फुटयितुमाह— **आह च** इति। ईदृग्रूपत्वमपि सूत्राभिप्रेतमित्याह— **अतः** इति। सूत्रार्थमुपसंहरति— **अतः** इति॥ २१॥

## भेदव्यपदेशाच्चान्यः ॥ १-१-२२ ॥

**आदित्यादिजीवेभ्यो भेदो व्यपदिश्यते ... ... अतः सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम्॥ २२॥** (२०५)

1. निर्बन्धत्वादिति-अ.
2. तदर्थं विवादशमनार्थं च-अ.
3. प्रागुक्तस्य-क.

भेदव्यपदेशाच्चान्यः — आदि शब्दोपात्तजीववैलक्षण्यायाह — य आत्मनि इति । कारणदशायामपि भेदं दर्शयति — यस्याक्षरम् इति । मृत्युः — [1] चित्संसृष्टाचित्समष्टिः । अधिकरणार्थमुपसंहरति — अतः इति ॥

इति अन्तरधिकरणम्—७

---

## ८. आकाशाधिकरणम् ॥

'यतो वा इमानि भूतानि जायन्ते' .... ... उक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते — आकाशस्तल्लिङ्गात् — इत्यादिना पादशेषेण ॥ (१०८)

चिदचिद्विलक्षणस्य [2] वेदान्तवेद्यत्वनिश्चयात्, उत्तराधिकरणानामनारम्भणीयत्वशङ्कां व्युदस्यन् सङ्गतिमाह — यतो वा इति । पादशेषोऽधिकरणचतुष्टयात्मकः । तत्र प्रथमे [3] अर्थान्तरसाधारणशब्देन प्रत्यवस्थानम्; अर्थविरोधेन परिहारः । अविरोधेन प्रत्यवस्थानं, विरोधोद्घाटनेन सिद्धान्तो द्वितीये । विरोधिलिङ्गाभावेन अल्पानुकूललिङ्गेन च प्रत्यवस्थानं तृतीये, विरोधलिङ्गदर्शनेन सिद्धान्तः । अनुकूललिङ्गभूयस्त्वेन प्रत्यवस्थानं चतुर्थे, तन्निरासेन सिद्धान्त इति भिदा । सङ्गतिश्चानेन फलिता ॥

## आकाशस्तल्लिङ्गात् ॥ १-१-२३ ॥

इदमाम्नायते छान्दोग्ये— 'अस्य लोकस्य का गतिरिति ... ... ज्यायानाकाशः परायणम्' इति ॥ (२०८)

सिद्धान्तोपयोगात् अस्य इत्यादिकमुपात्तम् ॥

---

1. अचित्संसृष्टचित्समष्टिः—अ. 2. वेदान्तविषयत्व—अ.
3. अर्थान्तरासाधारणशब्देन—अ.

## पूर्वपक्षः

**तत्र सन्देहः— किं प्रसिद्धाकाश एवात्र आकाशशब्देन ...**
**... ... अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्म इति ॥** (२०९–२१०)

[1] पूर्वपक्षहेतुमाह— **शब्द** इति । **एव**शब्देन यूपादिव्यावृत्तिः । **प्रसिद्धाकाश एव** इति । रूढिर्योगात् प्रबलेति भावः ।

अर्थविरोधेन चोदयति — **ननु** इति । परिहरति — **सत्यम्** इत्यादिना । **आकाश एवेति** इति । 'यतो वा इमानि' इति प्रकरणस्थानन्दशब्दस्तु आकाशसामानाधिकरण्यात् अनिश्चायक इत्येतदनुगुण इत्यभिप्रायः । **तमेव विशेषम्** इति छागपशुन्यायोऽभिप्रेतः । 'आत्म' शब्दो विशेषसमर्पक इत्याशंक्य रूढ्याऽवयवशक्त्या च साधारण्यमाह— **आत्मा वा** इत्यादिना । ईक्षणादिगौणत्वमाह — **अतः** इति । ईक्षणाधीन-चिदचिद्वैलक्षण्यनिश्चयानुगुणम् 'आकाश'शब्दो नेय इत्यत्राह — **यदि हि** इति । विलम्बिताल्लिङ्गात् शीघ्रप्रवृत्ता श्रुतिर्बलीयसीति भावः ॥

**ननु** इति चोद्यम् । परिहरति — **सत्यम्** इति । **वायूक्तिः** दृष्टान्ततया । **आत्म** शब्दः स्वरूपपरः इत्यर्थः । कथमस्वारस्येन निर्वाह इत्यत्राह — **सर्वाणि** इति । अवकाशदानेन स्थितिः **आदि** शब्दोक्ता । **निर्वहिता इत्येवमादि** इत्यत्र 'खं ब्रह्म' इत्यादि विवक्षितम् ॥

## सिद्धान्तः

**एवं प्राप्ते ब्रूमः — आकाशस्तल्लिङ्गात् । आकाशशब्दाभिधेयः ... .... 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥ २३ ॥** (पृ. २१०–२११)

---

1. पूर्वपक्षे हेतुमाह–अ.

**आकाशस्तल्लिङ्गात्** । अनूदितत्वात् **लिङ्गात्** इत्युक्तिः । लिङ्गिसंबन्धितया मानान्तरसिद्धधर्मो हि लिङ्गम् । निखिलकारणत्वाद्यनुपपत्तिं विवृणोति — **निखिल** इति । अत्र निमित्तत्वानुपपत्तिरप्यभिप्रेता ॥

**यदुक्तम्** इत्यादिना पूर्वपक्षयुक्तिमनूद्य दूषयति — **तदयुक्तम्** इति । अनुवादिवचः [1]प्रापकविरुद्धं वक्तुं नालमित्यर्थः । **आ काशते** इति — स्वस्मै इत्यर्थः । **आ काशयति** — सर्वं ह्यात्मने इत्यर्थः । रूढिप्राबल्यमप्यर्थाविरोधे सतीति भावः । अस्य प्रसिद्धवन्निर्देशस्य 'यदाग्नेय' इत्यादिवाक्यसाम्यमाशंक्यायोग्यत्वसाचिव्यं [2]वैषम्यमाह — **किं च** इति । **विशेषणसमर्पणक्षमेणापि** इति । एकपदश्रवणदशायामित्यर्थः । परामर्शदशायां ह्ययोग्यत्वं प्रतीयते । योग्यार्थत्वविधिरूपत्वाभ्यां सह भूयस्त्वं चाह — **एवम्** इति । अयोग्यार्थत्वात् श्रुत्याभासोऽयं सेचनपदसमभिव्याहृताग्निपदवत् इति फलितम् ॥

आत्मशब्दसाधारण्यमनूद्य स्वतः प्राप्त्या विशेषपरत्वेन परिहरति — **तत्र** इति । न परमर्थान्तरसाधकाभावः, स्वतः प्राप्तस्य साधकं चाह — **स ईक्षत** इति । निगमयति — **एवम्** इति ॥ २३ ॥

इति आकाशाधिकरणम्—८

## ९. प्राणाधिकरणम् ॥

## अत एव प्राणः ॥ १-१-२४ ॥

**इदमाम्नायते छान्दोग्ये — प्रस्तोतर्या देवता .... कल्याणगुणगणं परं ब्रह्मैव आकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥ २४ ॥**

(२१२-२१३)

1. पौरोवादिकविरुद्धं-क. 2. साचिवैषम्यमाह-ख.

**अत एव प्राणः** । उक्तन्यायातिदेश इति सङ्गतिः । अतिदेशफलं दर्शयति — **अधिकाशङ्का तु** इति । आदिशब्दात् निवृत्तिलयौ । **जगत्कारणतया** इति । स्थित्यादिहेतुत्वात् जनिहेतुत्वमर्थसिद्धमिति भावः । **शिलाकाष्ठादि** इति । आदिशब्दात् आकाशादिः । निगमने आकाश-प्राणसमभिव्याहारात् अधिकरणद्वयस्यावान्तरैकपेटिकात्वं सूचितम् ॥ २४ ॥

इति प्राणाधिकरणम्—९

---

## १०. ज्योतिरधिकरणम् ॥

**अतः परं जगत्कारणत्वव्याप्तेन येन केनापि ... ... ... ज्योतिश्चरणाभिधानात् इत्यादिना ॥**

पेटिकान्तरसङ्गतिं पेटिकाद्वयं चाह — **अतः परम्** इत्यादिना । **येन केनापि** इति । आक्षेपकगुणविशेषनियमो नेति भावः । [1]पूर्वपेटिका कारणत्वाभिधायिवाक्यविषया ; इयं तु तद्व्याप्तलिङ्गवद्वाक्यविषयेति भिदेत्यर्थः । उभयोरनुगताकारं दर्शयति — **अर्थान्तर** इति ॥

## ज्योतिश्चरणाभिधानात् ॥ १-१-२५ ॥

**इदमाम्नायते छान्दोग्ये — 'अथ यदतः परो दिवो ... ... ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगात् जगत्कारणं ब्रह्म इति ॥**

(२१४–२१५)

विषयमाह — **इदम्** इति । विश्वसर्वशब्दौ व्यष्टिसमष्टिविषयौ । **पृष्ठेषु** — उपरितनेषु । आदित्यादिज्योतिः कारणमिति [2]न व्याहतिः ।

---

1. पूर्वा पेटिका—अ    2. अव्याहृतिः—अ.

कृत्स्नकारणत्वं हि परलिङ्गं, न तु कारणत्वमात्रम् । एकैकसमष्टिव्यष्टि-विवक्षया **समस्तचिदचिद्वस्तुजातशब्दः** । **अमितभाः** — कारणत्व-व्याप्तिज्ञापकपरविद्याप्रकरणोक्तविशेषणम् । [1] **सर्वज्ञः** इति । 'यः सर्वज्ञः' 'न तत्र सूर्यः' इति हि श्रूयते । पुंसूक्तप्रत्यभिज्ञानादुक्तं **पुरुषोत्तमः** इति । **प्रसिद्धवत्** इति । अवान्तरसङ्गतिश्च [2] सूचिता । **स्ववाक्य** इति विरोधि-लिङ्गाभावोक्तिः । **कौक्षेय** [3] इत्यल्पानुकूललिङ्गोक्तिः ॥

## सिद्धान्तः

**एवं प्राप्ते प्रचक्ष्महे— ज्योतिश्चरणाभिधानात् । ... ....**
**'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' इति ॥ २५ ॥** (२१५)

**ज्योतिश्चरणाभिधानात्** । इह **निरतिशयदीप्तिः** [4] कारणत्व-व्याप्तधर्मः । चरणोक्तिर्हि पूर्ववाक्ये, तत् कथमस्य परविषयत्वम्, [5]ऐकार्थ्याच्च तत् कथमित्यत्राह— **एतदुक्तम्** इति । पूर्वपक्षयुक्तिं परिहरति— **कौक्षेय** इति ॥ १५ ॥

## छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पण-निगमात् तथा हि दर्शनम् ॥ १-१-२६ ॥

**पूर्वस्मिन् वाक्ये 'गायत्री वा इदं सर्वम्' ...... 'संपद्यन्ते' इत्यारभ्य 'सैषा विराडन्नात्' इत्युच्यते ॥ २६ ॥** (२१५-२१६)

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथा हि दर्शनम्** । कोऽर्थ इत्यत्राह— **अपि तु** इति । **निगम्यते**— निश्चीयते ।

1. सर्वज्ञः इति च—अ. 2. फलिता—क.
3. इत्यल्पानुकूला लिङ्गोक्तिः—क.
4. कारणत्वव्याप्तिधर्मः. 5. ऐकार्थ्याच्चेत् तत्—अ.

केनाकारेण सादृश्यमित्यत्राह— **संभवति च** इति। त्रिपदा हि गायत्री इत्यत्राह — **चतुष्पदा च** इति। **तथा हि** इत्यादि सूत्रखण्डं व्याचष्टे — **तथा हि** इति। 'अन्नमत्ति' इति **अन्नात्** ॥ २६ ॥

**इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—**

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १-१-२७ ॥

**... ... इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते ॥ २७ ॥** (२१६)

**भूतादिपादव्यपदेशोपपत्तेश्चैवम्।** [1] उपक्रमानुरोधेन सर्वात्मकत्वास्वारस्यं न्याय्यमिति [2] शङ्कायां तत्राप्यस्वारस्यमिहोक्तम्। अत्रोक्तम—गायत्री नाम [3] साम श्रुतिशिरसि परं [4] ज्योतिरध्यायि सिद्ध्येत्। चातुष्पद्यं तु भूतक्षितितनुहृदयैः। षड्विधं तद्विधाभिः। वाक्प्राणात्माभिधानं तदनुगुणतया वर्ण्यते तत्र यद्वत् [5] षाड्विध्यार्थत्वपक्षे स्वरसनिगमनश्रुत्यधीनं **तदेतत्** इति। एवं [6] ब्राह्मणमन्त्रोक्तसर्वात्मत्वचतुष्पात्त्वानुपपत्ती उक्ते ॥ २७ ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥१-१-२८॥

**पूर्ववाक्ये 'त्रिपादस्यामृतं दिवि' ... ... स एव ज्योतिःशब्दाभिधेय इति निरवद्यम् ॥ २८ ॥** (२१६-२१७)

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्।** न ह्यात्मस्वरूपे दीप्तिरस्ति। तत् कथं 'ज्योतिर्दीप्यते' इत्युक्तिरित्यत्राह—**एतावान्** इति ॥ २८ ॥

इति ज्योतिरधिकरणम्—१०

---

1. उपक्रमानुरोधो–**अ**.
2. शङ्कायां न तत्र–**अ**.
3. सेयं श्रुति–**क**.
4. ज्योतिरध्याधि–**अ**.
5. षाड्विध्यार्थत्वपक्षस्वरसे–**क**.
6. ब्राह्मणमन्त्रोक्ते–**क**.

## ११. इन्द्रप्राणाधिकरणम् ।

निरतिशयदीप्तियुक्तं ज्योतिःशब्दाभिधेयं .... .... परमपुरुष एवेत्याह — (२२०)

सङ्गतिमाह— **निरतिशय** इति । कथं परमपुरुषस्य ज्योतिःशब्दोक्तत्वम् ? इन्द्रो हि वेदान्तवेद्यः प्रतीयत [1] इति शङ्कया सङ्गतिः ॥

## प्राणस्तथाऽनुगमात् ॥ १-१-२९ ॥

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां ... ... सामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ॥ २९ ॥ (२२०–२२१)

**प्राणस्तथाऽनुगमात्** । उपदिष्टमस्तु ; ततः किमित्यत्राह— हिततमश्च इति । राद्धान्तमाह— **अयमिन्द्रप्राण** इति ! **तथा** पदं [2] व्याचष्टे— **तथा सति** इति । [3] **तथा** सत्येव **अनुगमात्** इति सूत्रार्थः । **अनुगमः** — [4] धर्मितया अनुवृत्तिः ॥ २९ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् ॥ १-१-३० ॥

यदुक्तम् — इन्द्रप्राणशब्दनिर्दिष्टस्य 'आनन्दोऽजरोऽमृतः' ... ... तदेवमध्यात्मसंबन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्र इन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥ (२२१–२२२)

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्** ।

1. इत्याशङ्कायां-क. 2. आचष्टे-अ.
3. तथात्वेनानुगमात्-अ. 4. धर्मतया-अ.

**आदिशब्देन** सालावृकयतिदानोक्तिः। उपक्रमप्राबल्यादित्यर्थः। '**गौणश्चेन्न**' इतिवत् नञोऽश्रवणात् **परिहरति** इत्युक्तम्। न केवलमुपसंहारे, [1] पूर्वमप्यस्तीति ज्ञापनाय '**स एष प्राण**' इत्यानुपात्तम्। पूर्ववाक्यस्यार्थमाह — **भूत** इति। अवयविप्राबल्यं फलितम्॥

फलितत्वादपि कण्ठोक्तत्वं वरमिति स्वाभिमतयोजनामाह — **अथवा** इति। इदानीम् **अध्यात्मशब्द** आत्मनि वर्तमानपरः। धर्मभूयस्त्वं दर्शयति — **तथा हि** इति। उपक्रमापेक्षया दौर्बल्यमवयवभूतोपसंहारस्य, न तु अवयविस्वारस्यस्य; तत् तु प्रबलमित्यर्थः॥ ३०॥

**कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य ... ...**

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ १-१-३१॥**

**... ... मत्तः सर्वमहं सर्वं मयि सर्वं सनातने॥'** इत्यादि वदति॥ ३१॥ (२२२–२२३

उत्तरसूत्रशङ्कामाह — **कथं तर्हि** इति। त्वाष्ट्रवधादिश्रवणात् अवयवशक्त्या निर्वाहो न घटत इति भावः। **शास्त्रदृष्ट्या तूपदेशो वामदेववत्**। न हि मानविशेषेण मेयमन्यद्भवति। किं तच्छास्त्रमित्यत्राह — **एतदुक्तम्** इति। जीवेऽप्यनुप्रवेशस्य स्पष्टयायाह — **य आत्मनि** इति। सूत्रखण्डं व्याचष्टे — **यथा** इति। **पश्यन्** इत्यनेन '**तद्धैतत् पश्यन्**' इत्येतत् व्याख्यातम्। उक्तं विशदयति — **यथा च** इति॥ ३१॥

**अस्मिन् प्रकरणे जीववाचिभिः शब्दैः ...**

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥ १-१-३२॥**

---

1, पूर्वमप्यस्तीति...वर्तमानपरः। धर्मभूयस्त्वं–अ. (मध्ये ग्रन्थपातः)

'न वाचं विजिज्ञासीत ... ... अतोऽत्र इन्द्रप्राणशब्द-निर्दिष्टो जीवादर्थान्तरभूतः परमात्मैव इति सिद्धम् ॥ ३२ ॥

इति इन्द्रप्राणाधिकरणम्—११

**इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये**
**प्रथमस्याध्यायस्य प्रथमः पादः ॥**

अनन्तरसूत्रमवतारयति — **अस्मिन्** इति। त्वाष्ट्रवधाद्युक्तौ च कारणमित्यभिप्रेतम्। उपरितनग्रन्थानुगुण्यात् प्रयोजनतया कारणं विवक्षितम् **उपदेष्टुम्** इति वक्ष्यमाणत्वात्। **चोद्यपूर्वकम्** इति। न तूक्तप्रतिक्षेपार्थं चोद्यं, किं तु प्रयोजनप्रश्नः चोद्यमुखेन कृत इत्यर्थः।

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात् आश्रितत्वादिह तद्योगात्।** **न वाचम्** इति– न परं मदुक्तार्थम्; मां च विजानीहि इत्यर्थः। **मुख्य**शब्दात् इन्द्रियव्युदासः। **त्रैविध्यं** विवृणोति– **निखिल** इति। [1]**स्वरूपेण**– अद्वारकगुणविशिष्टानुसन्धानमित्यर्थः। त्रैविध्ये मानसिद्धे सति अयं निर्वाह इति शङ्कायाम् **आश्रितत्वात्** इत्येतत् व्याचष्टे– **तदिदम्** इति। 'ब्रह्मवित्' इति प्रक्रमात् त्रैविध्योक्तिः वेद्यतयेति भावः। **इह** इत्यादिकं व्याचष्टे— **इह** इति। 'आनन्दोऽजरः,' 'मामुपास्व,' 'प्राणोऽस्मि' इत्युक्त्या तदुपपद्यते इत्यर्थः॥

सामान्येन चिदचिद्विशिष्टधीर्हि अन्यत्र श्रुता; न तु तद्विशेषविशिष्ट-विषया इत्यत्राह—**एतदुक्तम्** इति। **यत्र** इति। नायं नयः केवलं प्रतर्दन-विद्यामात्र इति भावः। विशिष्टधीविवक्षाज्ञापकद्वयमाह—**परमात्मासाधारण**

1. स्वरूप इति-क,

इति । मानसिद्धत्वाविशेषात् चिदचिद्विशेषविशिष्टविषयधीः कार्येत्यर्थः । अधिकरणार्थं निगमयति—अतः इति ॥ ३२ ॥

इति इन्द्रप्राणाधिकरणम् — ११.

---

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत-
श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन
श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रदीपिकायां
प्रथमस्य अध्यायस्य प्रथमः पादः ॥



# प्रथमाध्याये द्वितीयः पादः ॥

## १. सर्वत्र प्रसिद्ध्यधिकरणम् ।

**प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसा ... स्पष्टलिङ्गकानि तृतीये ; वस्तुप्रतिपादनच्छायानुसारीणि चतुर्थे ॥** (२२९-२३०)

प्रत्यधिकरणमनुगतस्य प्रथमपादार्थस्य त्रिपादीसङ्गत्यर्थं बुद्धिस्थत्वाय त्रिपादीसूत्रविषयभूतवाक्यानां [1] प्रागुक्तन्यायाविषयतया तस्या **आरम्भणीयत्व-सिद्धये** च प्रथमपादाधिकरणार्थानुक्रमः । शास्त्रारम्भसिद्ध्यर्थायाः चतुस्सूत्र्या अर्थात् प्रथमपादे सङ्गतिः । 'जन्मादि' त्रिसूत्र्याः प्रथमाधीनारंभत्वात् [2] प्राथमिकार्थानुक्रमे **शास्त्रारंभसिद्धये** इत्युक्तम् । 'जन्मादि' त्रिसूत्र्याः प्रथमपादे विशेषसङ्गतिश्चास्ति, चिदचिद्विलक्षणवस्तुलक्षणजन्मादिपरत्वात् । चिदचिद्विलक्षणवस्तुसद्भावो हि प्रथमपादार्थः । **शास्त्रारंभ** इति पदमुत्तरत्रा-नुषङ्गेण [3] चतुस्सूत्र्यर्थं वा ॥

प्रथमाधिकरणार्थमाह — **अधीत** इति । जन्माद्यधिकरणार्थमाह — **अनन्त** इति । **महानन्दैककारणम्** इति 'तद्विजिज्ञासस्व' इति फलितार्थ उक्तः । **अब्रूमहि** इत्यन्तं [4] स्पष्टार्थम् । तत्तत्पदानां प्रयोजनवत्त्वं पूर्वानुरोधे-नानुसन्धेयम् ॥

पादार्थमाह — **तदेवम्** इति । **अतिपतित** इति कुतर्काणां धर्मि-ग्राहकबाधोऽभिप्रेतः । चिदचिद्विलक्षण[5]कारणास्तित्वं पादानुगतार्थ उक्तः । **अतः परम्** इति । उक्तस्य ब्रह्मकारणत्वस्यान्ययोगव्यवच्छेदः क्रियते इत्यर्थः ॥

1. प्रागुक्तन्यायविषयतया–अ.
2. प्राथमिकानुक्रमे–अ.
3. चतुस्सूत्र्यर्थः–अ.
4. स्फुटार्थम्—अ.
5. कारणास्तित्वं—अ.

जीवादि इति । अस्पष्ट इत्यादिकं न ब्रह्मलिङ्गगतमिति भावः । तत्तत् इति । तच्छब्दो लिङ्गपरः । स्पष्टतरपूर्वपक्षबीजानि इत्यर्थः । द्वितीयाद्ये जीवलिङ्गावगमात् जीवादि इत्युक्तिः । [1] अवयविस्वारस्यजीवपरतया इति [2] शङ्कयाऽवान्तरसङ्गतिः । सर्वतादात्म्यमनःप्राणसंबन्धार्भकौकस्त्वाणुत्वादीनि जीवलिङ्गानि दृश्यन्ते ॥

## सर्वत्र प्रसिद्धोपदेशात् ॥ १-२-१ ॥

**इदमाम्नायते छान्दोग्ये — 'अथ खलु क्रतुमयः .... .... उपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयते इति ॥**
**( २३०–२३१ )**

**सर्वत्र प्रसिद्धोपदेशात्** । विषयमाह — **इदम्** इति । प्रथमयोजनापेक्षितमात्रमुपात्तम् '**अथ खलु**' इत्यादिकम्, न तु '**सर्वम्**' इत्यादि । '**भारूपः**' इत्यादेः द्वितीयसूत्रविषयत्वात् भारूप इत्यन्तमुपात्तम् । भाष्यान्तरानुरोधेन प्रथमयोजना । '**सर्वं खलु**' इत्यादेः परविषयत्वं [3] स्फुटम् । '**अथ खलु**' इत्यादिविषयमिदं सूत्रमन्यैर्व्याख्यातम् ॥

### पूर्वपक्षः

पूर्ववाक्यस्य [4] परविषयत्वात्, तच्छेषत्वादुत्तरवाक्यान्यपि तथेति न जीवपरत्वशङ्का [5] इत्यधिकरणमनारंभणीयमित्यत्राह — **अत्र** इति । विध्यन्तरोपास्यपरतया न पूर्वेणैकविषयतेति जीवपरत्वशङ्कोचितेत्यर्थः । **प्रतिपादितस्योपासनस्य** इति । क्रतुशब्दः उपासनपरः । न तु प्राग्विहित-

1. अवयवस्वारस्य – क. 2.
3. स्पष्टमिति अथ–क.
4. परविषयत्वादुत्तरवाक्यान्यपि–क
5. इत्यत्राधिकरण–अ.

ब्रह्मोपासनाङ्गभूतकर्मपरः, 'यथाक्रतुः' इत्यनेन फलसंबन्धदर्शनात् । तत्र च क्रतुः उपास्तिः 'तं यथा यथोपासते' इत्येतदैकार्थ्यात् । प्राक् ब्रह्मोपासने विहितेऽपि जीवस्य क्रतुप्रचुरत्वात्, तदुपास्त्यन्तरविधिश्चोपपन्न इति भावः । तत्र इत्यादि [1]स्पष्टम् । उपकरणोपकरणित्वलक्षणसंबन्धविशेषस्यास्फुटत्वात् अस्पष्टलिङ्गता ॥

प्राक् प्रकृतं ब्रह्मैव 'क्रतुं कुर्वीत' इत्यत्रोपास्यतया संबध्य मनोमयत्वादिविशेष्यं स्यादिति शङ्कायां, किं ब्रह्मपदस्य विधिपदाकांक्षया, उत 'क्रतुं कुर्वीत' इत्यस्योपास्याकांक्षया वा ब्रह्मशब्दस्योत्तरत्रान्वय इति विकल्पमभिप्रेत्य, प्रथमं शिरः प्रतिवक्ति — **न च 'सर्वम्'** इति । अन्यार्थतया निराकांक्षत्वादित्यर्थः । द्वितीयं प्रतिवक्ति — **न च 'स क्रतुम्'** इति । **अनन्यार्थेन** स्ववाक्यार्थेन निराकांक्षत्वादित्यर्थः । **विभक्ति** इति । प्रथमान्तस्येव द्वितीयान्तस्याप्यनन्वयः, [2]अषष्ठ्यन्तत्वाविशेषात् विपरिणामस्तु सन्निहितानन्यार्थपदस्यैवोचित इत्यर्थः । **उभयाकांक्षा** — विधिपदमनोमयादिपदाकांक्षा ॥

## सिद्धान्तः

**एवं प्राप्ते ब्रूमः — सर्वत्र प्रसिद्धोपदेशात् । मनोमयत्वादिगुणकः ... ... मनआयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति ॥** (२३१-२३२)

राद्धान्तमाह — **एवम्** इति । **सर्वत्र प्रसिद्धोपदेशात्** । **सर्वत्र** — सामान्यविशेषशब्दवत्सु इति भावः । मनोमात्रेण संबन्धमात्रं [3]दर्शितं **मनोमय** इति वाक्ये; **हृदा** इत्यत्र संबन्धविशेषः । '**न चक्षुषा**' इत्यत्र

---

1. स्फुटम्-अ.
2. अषष्ठ्यन्तत्वाविशेषात् । सर्वत्रेति-अ. (मध्ये पन्थपातः).
3. अदर्शितं-अ.

मनोविशेषेण संबन्धविशेषः। प्राणशरीरत्वं दर्शयति — **तथा** इति। **प्राणः** — धारकः। धारको हि शरीरी। उपसंहाराविरोधमाह — **एवम्** इति। निषेधाविरोधमाह— **अप्राण** इति॥

**अथवा – 'सर्वं खल्विदं ब्रह्म' जलानिति ...... अनाद्य-विद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठते – इति। (२३२-२३३)**

**पूर्वपक्षः – २**

स्वाभिमतयोजनामाह — **अथवा** इति। अध्याहार्यप्रक्लिष्टत्वात्, आद्यन्तगतब्रह्मशब्दद्वयविषयैक्यस्वारस्यविरोधात्, 'एवंवित्छान्तः' इति श्रुतेः श्रवणमनननिष्पाद्यत्वदर्शनात्, तदुपायोपास्त्यन्तरादर्शनात् आशंसा-र्थत्वे [1]शान्तशब्दास्वारस्यात्, वृत्त्यननुरोधाच्च प्राग्योजना न वरमिति भावः। **अत्रैव** इति। न तु शान्त्युपायमुक्त्युपाययोरस्ति भिदा इत्यर्थः। शान्तशब्दस्वारस्यं दर्शयन् वाक्यार्थमाह — **सर्वात्मकम्** इति। **उपा-दानम्** — विधानम्। **अनुवादः** — 'दध्ना जुहोति' इत्यत्र होमवत्। वाक्यार्थमाह — **अतः** इति। एवमेकविषयत्वमङ्गीकृत्य संशयमाह — **तत्र** इति। अविद्याकर्मणोरनादित्वं बीजाङ्कुरनयात्। परस्य तदनुपपत्तिमाह — **परस्य तु** इति। ब्रह्मशब्दः कथमित्यत्राह — **प्रत्यक्** इति। उपपादयति — [2]**अत** इति। [3]प्रवृत्तिनिमित्तयोगं दर्शयति — **प्रत्यक्** इति। कारणत्वं निर्वहति — **अविदुषः** इति। ब्रह्मत्वं शुद्धे, कारणत्वं बद्धे। तत् कथं ब्रह्मत्वसर्वत्वसामानाधिकरण्यमित्यत्राह — **तदयम्** इति॥

**अत्र प्रतिविधीयते — सर्वत्र प्रसिद्धोपदेशात्। ... ....**

---

1. शान्तशब्दस्वारस्यात्–अ.
2. अत एवेति–क.
3. निमित्तयोगं–अ.

यथाह वृत्तिकारः — 'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' इति ॥ १ ॥
(२३३-२३४)

## सिद्धान्तः

राद्धान्तमाह — अत्र इति । सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र — सर्वशब्दो न वाचकपरः । किं तु वाच्यपर इति भावः । प्रसिद्धस्य हि हेतुत्वम् । हेतुतयोक्त्या जन्मादीनां प्रसिद्धतयोपदेशः । खलुना तादात्म्यस्य प्रसिद्धतयोक्तिरित्यर्थः । उक्तं स्पष्टयति — ब्रह्मण इति । प्रसिद्धिं दर्शयति — तथा हि इति । 'यतो वाचः' इत्यादेर्जीवपरत्वव्यावृत्त्यर्थमाह — आनन्द इति । आनन्दशब्दस्य [1] आनन्दमयपरत्वं स्पष्टयति — पूर्वानुवाक इति । वाक्यान्तरमाह — 'स कारणम्' इति । [2] कारणत्वकृततादात्म्यमप्यर्थसिद्ध-मित्यभिप्रेत्याह — अतः इति । श्रुत्यन्तरेषु कारणतया तादात्म्योपदेशात् इहोक्तं तादात्म्यमुपपन्नमित्यर्थः । चिदचिद्विलक्षणस्य कथं तादात्म्यमित्यत्राह— अतः इति । श्रुतिभिरेव तदनत्वोक्तेः आत्मत्वसिद्धिरित्यर्थः । स्थितौ हि देहात्मभावः, न तु कारणदशायाम् ; तदानीमैक्योक्तेरित्यत्राह — परं ब्रह्म हि इति । वस्तुसामर्थ्यात् कण्ठोक्त्या चेति भावः । ततः किमित्यत्राह — एवंभूत इति ॥

यदुक्तम् इत्यादि [3] स्फुटम् । जीवकर्म इति । कर्तृत्वोपादानते ब्रह्मणः ; कर्म तु वैषम्यमात्रहेतुरित्यर्थः । अतः इति निगमनम् । श्लोकार्थस्य सांप्रदायिकत्वमाह — इममेव इति । 'सर्वं खलु' इति वाक्ये सर्वात्मकतयोक्तं ब्रह्म ईशः परमात्मेत्यर्थः ॥ १ ॥

---

1. आनन्दपरत्वं स्फुटयति — अ.
2. कारणकृत — अ.
3. स्पष्टम् — क.

## विवक्षितगुणोपपत्तेश्च ॥ १-२-२ ॥

**वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते ... ... जोष-मासीन इत्यर्थः । त एते विवक्षिता गुणाः परमात्मन्येवोप-पद्यन्ते ॥ २ ॥**

**विवक्षितगुणोपपत्तेश्च** । वक्तुमिच्छाविषयत्वम् — **विवक्षितत्वम्** । तदनन्तरभाविवचनविषयत्वमिति **वक्ष्यमाणा** इत्युक्तम् । **मनोमयशब्दं** सामान्यविशेषवाक्यानुगुणं व्याचष्टे — **परिशुद्धेन** इति । **एकेन** इति । 'अब्भक्ष'वत् अवधारणगर्भत्वमभिप्रेतम् । तद्विवृणोति — **विवेक** इति । फलितमाह — **अनेन** इति । कुत इत्यत्राह — **मलिन** इति । व्यापक-निवृत्त्या व्याप्यनिवृत्तिः । आधेयत्वादिसिद्धिः कथमित्यत्राह — **आधेयत्व** इति । भा दीप्तिः, तद्धर्मको **भारूपः** । तद्धर्मकत्वं विग्रहद्वारा इत्याह — **भास्वर** इति । 'आकाश एव तदोतं प्रोतं च' इत्युक्तप्रत्यभिज्ञाभिप्रायेणाह— **सकलेतर** इति । [1]**प्रकाशयति**, स्वभा इत्यर्थः । **सर्वा वा** इति । सर्व-कर्माराध्य इत्यर्थः । निषेधस्य विहितव्यतिरिक्तविषयत्वमभिप्रेत्याह — **तत** इति । **कुत इति** — कुत इत्यत्राह इत्यर्थः । **अत एव** — न तु [2]वाक्सामर्थ्याभावादिति भावः । तत् विवृणोति — **परिपूर्ण** इति । निगमयति — **स एते** इति ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः ॥ १-२-३ ॥

**तमिमं गुणसागरं पर्यालोचयतां ... ... नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥** (२३५)

1. प्रकाशत इति—अ.

2. वाक्सामर्थ्यादिति भावः । [illegible] तत्र—अ.

मुक्तेऽप्यसंभवं व्यतिरेकमुखेनाह — अनुपपत्तेस्तु न शारीरः । मुक्तेऽप्यनुपपत्त्यर्थं योग्यशब्दः । बद्धोक्तिः दृष्टान्ततया ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च ॥ १-२-४ ॥

'एतमितः प्रेत्याभिसंभविताऽस्मि' … … प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥ (२३५)

कर्मकर्तृव्यपदेशाच्च । व्यतिरेकोपपादनपरमिदम् । [1] प्राप्यप्राप्तृभेदः सौत्रः । ततः किं 'सर्वं खलु' इत्युक्तस्योपास्यस्य जीवात् भेदस्य इत्यत्राह — अतः इति ॥ ४ ॥

## शब्दविशेषात् ॥ १-२-५ ॥

'एष म आत्माऽन्तर्हृदये' … … 'पुरुषो हिरण्मयः' इति प्रथमयोपास्यः । अतः पर एवोपास्यः ॥ ५ ॥ (२३६)

परमसाध्यस्य हेतुमाह — शब्दविशेषात् । असमानविभक्तिनिर्देशोऽभिप्रेतः समानप्रकरणे शाण्डिल्यविद्यायाम् ॥ ५ ॥

इतश्च शारीरादन्यः —

## स्मृतेश्च ॥ १-२-६ ॥

'सर्वस्य चाहं हृदि सन्निविष्टः' … … … परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥ ६ ॥ (२३६)

स्मृतेश्च । हृदि स्थितौ उपास्योपासकभेदे च स्मृतिर्दर्शिता ॥ ६ ॥

---

1. प्राप्यप्राप्तृभेदसूत्रम् — क.

## अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ १-२-७ ॥

अल्पायतनत्वम्-अर्भकौकस्त्वम् । … … अत उपासनार्थ-मर्भकौकस्त्वमणीयस्त्वं च ॥ ७ ॥ (२३६-२३८)

अर्भकौकस्त्वात् तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च । अल्पत्वाक्षेपकोक्तेः तत्कण्ठोक्तेश्च इत्यर्थः । परस्य तद्वैधर्म्य-माह— अपि तु इति । विपरीतं कस्मान्नेत्यत्राह— तथा हि इति । प्रकरणाविच्छेदाय 'अथ खलु' इत्याद्युक्तम् । स्वरूपगुणान्— [1]अद्वारक-गुणान् । पूर्वत्र उत्तरत्र च विभुत्वोक्तेः मध्येऽल्पत्वमुक्तमौपाधिकमित्यर्थः ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १-२-८ ॥

जीवस्येव परस्यापि … … 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति' इति ॥ ८ ॥ (२३८)

संभोगप्राप्तिरिति चेन्न वैशेष्यात् । शरीरान्तर्वर्तित्वम्— हृदि स्थितत्वम् । वैशेष्यं— विशेषः ॥ ८ ॥

इति सर्वत्रप्रसिद्ध्यधिकरणम्—१

---

### २. अत्त्रधिकरणम् ॥

यदि परमात्मा न भोक्ता एवं तर्हि …

## अत्ता चराचरग्रहणात् ॥ १-२-९ ॥

कठवल्लीष्वाम्नायते—'यस्य ब्रह्म च …. …. जगदुपसंहारित्व-रूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥ (२४२-२४३)

---

1. अद्वारगुणान्-ख.

अवान्तरसङ्गतिमाह— **यदि** इति। **अत्ता चराचरग्रहणात्**। अत्तृशब्दाश्रुतेः **सूचित** इत्युक्तम्।

राद्धान्ते चराचरसंहाररूपतायां हेतुद्वयमाह — "**सोऽध्वनः**" इत्यादिना। ब्रह्मक्षत्रशब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः। मृत्यूपसेचनत्वे कथं चराचरादनीयत्वमित्यत्राह— **उपसेचनं हि** इति ॥ ९ ॥

## प्रकरणाच्च ॥ १-२-१० ॥

**प्रकरणं चेदं परस्यैव ब्रह्मणः— ... ... तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥ १० ॥** (२४३)

**प्रकरणाच्च**। प्रकरणैक्यं कथमित्यत्राह —'**क इत्था**' इति ॥

**अथ स्यात् — नायं ब्रह्मक्षत्रौदनसूचितः ... ... तदेतत् प्रकरणत्वात् पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हति—इति** (२४३)

उत्तरस्य शङ्कामाह — **अथ स्यात्** इति। **अनन्तरम्** — न ह्यव्यवहितस्य विच्छेद इति भावः। अत्र प्रकरणात् ऋतपानलिङ्गबलीयस्त्वमुक्तम्। कथं भोक्तुर्जीवत्वं, कथं वा द्वितीयस्य बुद्धिप्राणयोरन्यतरत्वमित्यत्राह — **ऋतपानं हि** इति। [1] पूर्वोक्तात्तृत्ववत् जगत्संहर्तृत्वमपि वक्तुं न शक्यमिति भावः। **यथा** इति। करणे कर्तृत्वोपचार इत्यर्थः। ततः किमत्तुर्जीवत्वस्येत्यत्राह — **तदेक** इति ॥

**ततोच्यते** —

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १-२-११ ॥

---

1. पूर्वसूत्रोक्तात्तृत्ववत् जगत्संहर्तृत्वमिति वक्तुं—अ.

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ... ... यद्वा प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११ ॥ (२४४)

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । जीवस्यापि इति । गुहाप्रवेशो दृश्यते इत्यन्वयः । प्रकरणविच्छेदकलिङ्गासिद्धिमाह — एवं च इति । मुख्यकल्पं निर्वाहान्तरमाह — यद्वा इति । प्रयोजककर्तुरपि कर्तृत्वमस्ति ॥ ११ ॥

## विशेषणाच्च ॥ १-२-१२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेव .... .... 'छायातपौ' इत्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ॥ (२४४-२४५)

विशेषणाच्च । शकेमहि — उपासितुमिति शेषः । इहाप्युदाहृतवाक्यैकार्थ्यादिति भावः ॥

अथ स्यात् 'येयं प्रेते विचिकित्सा मनुष्ये ... ... तदपेक्षितांश्च विशेषानुपदिदेश इति सर्वं समञ्जसम् । अतः परमात्मैवात्तेति सिद्धम् ॥ १२ ॥ (२४५-२४६)

चतुर्थे पादे वक्ष्यमाणावपि चोद्यपरिहाराविह सुग्रहत्वायोक्तौ, चोद्यस्य धीस्थत्वात् । अथ स्यात् इति । वरद्वयं किं, वरणायोगः कथमित्यत्राह — तथा हि इति । अत्र इति । मोक्षज्ञानाय तदनुबन्धिजिज्ञासया प्रश्न इत्यर्थः । तदुपाय इति । प्रतिवचनप्रकारादुपायादीनां पृष्टत्वावगमः । निखिल इति कारणशोधकार्थ्यर्थ उक्तः । विशेषान् प्राणाग्निविद्यादीन् ॥ १२ ॥

इति अत्त्रधिकरणम् ॥ २ ॥

## ३. अन्तराधिकरणम् ॥

## अन्तर उपपत्तेः ॥ १-२-१३ ॥

इदमामनन्ति छन्दोगाः — 'य एषोऽक्षिणि पुरुषो दृश्यते । ... ... एष हि सर्वेषु लोकेषु भाति' इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥ (२४९-२५०)

अन्तर उपपत्तेः । परस्य 'तं दुर्दर्शम्' 'क इत्था वेद' इति दुर्दर्शत्वोक्तेः, 'य एष दृश्यते' इत्युक्तो न परः इति शङ्कया सङ्गतिरर्थसिद्धेति न कण्ठोक्ता । 'य एष' इति प्रसिद्धवदुक्तिः । दृश्यते इति अपरोक्षत्वोक्तिः । प्रतिबिम्बादीनां क्रमात् अपरोक्षकाल्पनिकश्रुतिप्रसिद्धयः ॥

राद्धान्ते एषाम् इति — निरुपाधिकानामिति भावः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च ॥ १-२-१४ ॥

चक्षुषि स्थितिनियमनादयः ... ... योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥ (२५०)

स्थानादिव्यपदेशाच्च । आदिशब्दात् धारकत्वानेयत्वादि । साधकहेतूक्तिफलितां पूर्वपक्षयुक्त्योरन्यथासिद्धिं चाह — अतः इति ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १-२-१५ ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः .... .. . प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥ १५ ॥ (२५०-२५२)

सुखविशिष्टाभिधानादेव च । अङ्गत्वादविरोध इत्यत्राह — न च इति । अङ्गिफलाविरोधशङ्काव्युदासाय तद्विरोधि इत्युक्तम् । उच्यते

इत्यादि । **उभयत्र** — उपक्रमोपसंहारयोः । हेतुचतुष्टयेनाक्षाङ्क्षित्वमुक्तम् । 'प्राणो ब्रह्म' इत्यादिना [1]फलविरोधमुपगम्याह — **एवं च** इति । स च नेत्याह— **न च** इति । **परिपालयामः** इति भुजेः [2]परस्मैपदित्वात इति भावः । **ननु** इति । स्थानगुणयोर्वक्ष्यमाणत्वाकथनात तयोर्न विधेयत्वमिति न तद्विधानायात्र परमात्मोच्यत इत्यन्यपरमित्यर्थः । परिहरति— **तदभि** इति । स्फुटम् ॥ १५ ॥

**ननु च — 'कं ब्रह्म खं ब्रह्म' ... ... 'मनो ब्रह्म' इत्यादिवचनसारूप्यात् ॥**

अनन्तरसूत्रशङ्कामाह — **ननु च** इति । **यावता** — प्रत्युत इत्यर्थः । **वचनसारूप्यात्** इति । ब्रह्मशब्दस्य पश्चादुपादानात् ब्रह्म दृष्टि-विशेषणमित्यर्थः । ब्रह्मशब्देन निगमनाभावाच्चेति भावः ॥

तत्राह —

## अत एव च स ब्रह्म ॥ १-२-१६ ॥

यतस्तत्र 'यदेव कं तदेव खम्' ... ... तदेव चाक्षाक्ष्या-धारतयाऽभिधीयते इत्यक्ष्याधारः परमात्मा ॥ १६ ॥ (२५२-२५३)

**अत एव च स ब्रह्म** । निगमनवाक्यानुसारात् **सः** इति पुल्लिङ्गता । **यदेव कम्** इत्यर्थोपादानं, [3]न वाक्योपादानम् । 'यद्वाव कम्' इति वाक्यम् । [4]अत्राप्यन्योन्यदृष्टिविधिः स्यात्, कथं च 'ख' शब्दोक्तस्य ब्रह्मत्वमित्यत्राह — **एतदुक्तम्** इति । [5]ज्ञातत्वाज्ञातत्वमिति वैषम्यं च कथं, कथं च खस्य सुखविशिष्टत्वमिति शङ्कायां तद्विवरीतुमाह —

1. फलविरोधित्वमुपगम्य-क.
2. परस्मैपदत्वात्-अ. 3. न तु वाक्य-क.
4. [illegible] 5. [illegible]

**अस्यायम्** इति । दृष्टिविधिपरत्वे ज्ञातत्वाज्ञातत्वविभागायोगात् मुमुक्षुं प्रत्युपदेशात् [1]अर्थान्तराज्ञानं प्रति दृष्टिविध्यन्तरस्योत्तरत्वायोगाच्च मिथो व्यवच्छेदकत्वे स्थिते सति वाक्यस्यार्थमाह — **ब्रह्मगः** इति । **अतः** — दृष्टिविधित्वायोगेन अनन्तसुखरूपब्रह्मपरोपक्रमवाक्यानुगुण्यादुपसंहारवाक्यस्येत्यर्थः । यया शङ्कया सूत्रोत्थानं, तस्याः परिहृतत्वमाह — **अतः कम्** इति । सूत्रार्थं परमप्रकृतेन सङ्गमयति — **तदेव च** इति ॥ १६ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १-२-१७ ॥

**श्रुतोपनिषत्कस्य-अधिगतपरमपुरुषयाथात्म्यस्य ... ... ... अतोऽप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥** (२५३-२५४)

**श्रुतोपनिषत्कगत्यभिधानाच्च** । **श्रुतोपनिषत्कस्य** इति व्यस्य निर्देशो व्याख्यानाय ॥ १७ ॥

## अनवस्थितेरसंभवाच्च नेतरः ॥ १-२-१८ ॥

**प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानात् .... ... ... तस्मात् अक्षिपुरुषः परमात्मा ॥ १८ ॥** (२५४)

**अनवस्थितेरसंभवाच्च नेतरः** । पदद्वयेनादिमसूत्रद्वयार्थव्यतिरेको धीस्थक्रमेण दर्शितः । **रश्मिभिः** इति विद्यानिष्ठ इतिवत् वशीकारमात्राभिप्रायः **प्रतिष्ठित**शब्दः । खट्वादिद्वारकप्रासादशयनवत् सद्वारकतया चक्षुःसंबन्धोपपत्तिरित्यर्थः । अधिकरणार्थमुपसंहरति— **तस्मात्** इति ॥ १८ ॥

इति अन्तराधिकरणम् —३

---

[1]. अर्थान्तरज्ञानं-अ.

## ४. अन्तर्याम्यधिकरणम् ।

'स्थानादिव्यपदेशाच्च' इत्यत्र ... ... परमात्मत्वं साधितम्। इदानीं तदेव समर्थ्यते ॥ (२५७)

अवान्तरसङ्गतिमाह — **स्थान** इति ।

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्**
**॥ १-२-१९ ॥**

**काण्वा माध्यन्दिनाश्च वाजसनेयिनः ... ... 'नान्योऽतोऽस्ति द्रष्टा' इति द्रष्ट्रन्तरनिषेधाच्च इति ॥** (२५७-२५८)

**अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्** । विषयं शोधयति — **काण्वा** इत्यादिना । **वेदयज्ञशब्दौ** अभिमानिदेवतापरौ । कथं विश्वचिदचिन्नियन्तरि जीवत्वशङ्का इति शङ्कायां पूर्वपक्षयुक्तिमाह — **वाक्यशेष** इति । ततः किमन्तर्यामिणो जीवत्वस्येत्यत्राह — **एवं द्रष्टुः** इति । ततः किं रूपादिसाक्षात्कर्तृत्वमर्थ इत्यत्राह — **नान्य** इति । तन्नान्यत्र निषेध्यम्, जीवेषु तत्संभवात् करणाधीनं तु [1]तदन्यत्र निषेध्यं, परस्मिन् तदयोगादित्यर्थः । यच्छब्दावृत्त्या च बहुत्वम् । **स** इति जातौ, उपक्रमे **यः** इति च । [2]आत्मनि स्थित्यादयः स्वारस्येन नेया इति भावः ॥

### सिद्धान्तः

**एवं प्राप्तेऽभिधीयते – अन्तर्याम्यधिदैवाधिलोकादिषु ... जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥ १९ ॥**
(२५८-२५९)

1. तद्यत्र-अ. 2. आत्मनः स्थित्यादयो-अ.

रादान्ते **पदचिह्नितेषु** इति। अधिशब्दसप्तमीपुनरुक्तिप्रसङ्गा-न्नार्थपरत्वमिति भावः। पदद्वयोक्तिप्रयोजनमाह — **काण्व** इति। [1] तस्य उत्तरमस्तु, ततः किमित्यत्राह — **तदेतत्** इति। [2] अन्यस्मिन्नसंभवे श्रुत्यन्तराण्युदाहरति — **तथा हि** इति। समानप्रकरणवाक्यमाह — [3] **तथा** इति। **पश्यत्यचक्षुः** इति व्याहतमित्यत्राह — **न च दर्शन** इति। अनुगतनिमित्तमाह — **अपि तु** इति। अशाब्दत्वेऽपि व्याप्तिबलात् करणा-यत्तत्वमित्यत्राह — **स च** इति। सोपाधिकमित्यर्थः। परोक्तयुक्तिं प्रतिवक्ति — **नान्योऽतः** इति। उक्तं विवृणोति — **यं पृथिवी** इति। **नियन्त्रन्तरम्** इति। अतः शब्दस्वारस्येन उक्तलक्षणद्रष्ट्रन्तरं निषिध्यते इति नियन्तृरूपद्रष्ट्रन्तरनिषेध इत्यर्थः। व्यतिरेकविभक्तिनिर्देशोऽपि 'शब्द-विशेषात्' इति [4]पूर्वोक्तभेदहेतुतया अत्राभिप्रेत इत्याह — **एष ते** इति ॥१९॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ १-२-२० ॥

**स्मार्तं — प्रधानम् ... .. प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः** ॥ २० ॥ (२५९-२६०)

**न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च।** अप्रस्तुतस्मार्तनिरासः किमर्थं इत्यत्राह — **एतदुक्तम्** इति। सूत्रद्वयपौनरुक्त्यं नेत्याह — **अमीषाम्** इति ॥ २० ॥

निरपेक्षं च हेत्वन्तरमाह —

## उभयेऽपि हि भेदेनैनमधीयते ॥ १-२-२१ ॥

---

1. तस्योक्तत्वम्-क. 2. अस्मिन्नसंभवे-अ.

3. तथेति। यं पृथिवी इति—मध्ये ग्रन्थपातः इव-अ.

4. पूर्वोक्तो भेद-अ.

**उभये — माध्यन्दिनाः काण्वाश्च ... प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥ २१ ॥** (२६०)

**उभयेऽपि हि भेदेनैनमधीयते । नियाम्यतया** इति भेदकधर्मोक्त्या भेदसिद्धिरित्यर्थः । अपवादाभावात् व्यतिरेकनिर्देशादिस्वारस्यसिद्धिः ॥ २१ ॥

इति अन्तर्याम्यधिकरणम् — ४

## ५. अदृश्यत्वादिगुणकाधिकरणम् ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १-२-२२ ॥

**आथर्वणिका अधीयते ... ... अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥ २२ ॥** (२६२-२६४)

**अदृश्यत्वादिगुणको धर्मोक्तेः** । अक्षरात् परतः परस्य च सूत्रविवक्षितत्वं पुल्लिङ्गसूचितम् । **'अदृष्टो द्रष्टा' इत्यादाविव** इति सङ्गतिः सूचिता । न ह्यत्रादृश्यत्वं द्रष्टृत्ववत् नियन्तृत्वसहचरीति प्रधानपरत्वशङ्कया सङ्गतिः । 'परतोऽक्षरात्' इति विभक्तिसाम्येन सामानाधिकरण्यं स्वतः प्राप्तमिति भावः । अदृश्यत्वं साधारणं, दृष्टान्तश्च चेतनपरत्वानुगुण इत्यत्राह— **एतदुक्तम्** इति । अन्तरङ्गे सति बहिरङ्गं न ग्राह्यमिति भावः । दृष्टान्तानुगुण्यमाह — **तदधिष्ठितम्** इति ।

राद्धान्ते इदं वाक्यमुक्तविषयं स्यादित्यत्राह — **तथा हि** इति । अक्षरं न परमात्मा, परत्वश्रवणात् इत्यत्राह — **पश्चात्** इति। पञ्चम्यपेक्षास्वारस्यात् अन्वयस्वारस्याच्च वैयधिकरण्यमिति भावः । अर्थविरोधं हेतुमाह — **तस्य** इति । यस्य परधर्मान्वयः श्रुतः, स हि परः । अतः [1] एतत्प्रकरणस्थब्रह्मशब्दयोरिव भिन्नविषयत्वं युक्तमिति भावः ॥ २२ ॥

---

1. पूर्व तत्प्रकरणस्थ.

इतश्च न प्रधानपुरुषौ —

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १-२-२३ ॥**

विशिनष्टि हि प्रकरणम् .... .... महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वा अक्षरत्वं कथंचिदुपपद्यते ॥ २३ ॥

( २६४-२६७ )

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ** । कस्मात् किं कैर्धर्मैः विशिनष्टीत्यत्राह — **प्रधानात्** इति । भेदव्यपदेशं विवृणोति — **तथा** इति । उभयमुपपादयितुमाह — **तथा हि** इति । [1] विशेषणवाचिशब्देनापि परविषयत्वसिद्धिमाह — **परविद्यैव च** इति । ज्ञेये ब्रह्मणि कृत्स्नज्ञेयान्तर्भावात् तद्वेदने कृत्स्नवेदनान्तर्भावात् **सर्वविद्याप्रतिष्ठा** इत्युक्तम् । विद्ययोर्भिन्नविषयत्वव्युदासाय व्याचष्टे — **ब्रह्म प्रेप्सुना** इति । **विद्ये वेदितव्ये** इति । 'तपोऽतप्यत', 'ओदनपाकं पचति' इतिवत् । विषयैक्ये [2]को भेद इत्यत्राह — **परोक्ष** इति । तथात्वे सामग्रीभेदं हेतुमाह — **तत्र** इति । प्रथमेनैवालमित्यत्राह — **तयोः** इति । तद्द्वयर्थं श्रुतमित्यत्राह — **तच्च** इति । किं प्रथमेन [3]इत्यत्राह — **तदुपाय** इति । **साधनसप्तकानुगृहीतम्** — साधनसप्तकसहितम् । उक्तं स्पष्टयितुमाह — **आह च** इति । आगमोत्थपरं '**तत्र**' इत्यादिवाक्यमित्याह — **तत्र** इति । किं धर्मशास्त्रादिना, न चालागमोत्थं प्रतीतमित्यत्राह — **साङ्गस्य** इति । 'अथ' इति 'उक्तम्' इत्यन्वयः । **तपसा** इत्यादिवाक्यं व्याचष्टे — **ब्रह्मणः** इति । **भोक्तृवर्गस्य** इति सत्यशब्दार्थ उक्तः । पौनरुक्त्यशङ्काव्युदासायाह — **यः सर्वज्ञः** इति । 'दध्ना जुहोति' इतिवदिति भावः ।

1. विशेषणवाचक-क.
2. कथं भेदः—अ.
3. इत्यत्राह—साङ्गस्येति—अ. (मध्ये ग्रन्थपात इव)

[1] **भोग्यभोक्तृ** इति । 'अद्यतेऽत्ति च' इति हि अन्ननिरुक्तिरिति भावः । **मन्त्रेषु** इत्यादि । चतुर्मुखलोककामपरत्वव्यावृत्त्यर्थमाह — **सार्वज्ञ्य** इति । **तदेतत् सत्यम्** इत्याद्यैकार्थ्यादिति भावः । **येषु** पुरुषेषु ॥

सौत्रहेत्वोर्द्वितीयं विवृणोति— **भेदव्यपदेशोऽपि** इति । **अश्नुते** इति [2] प्रोक्षणीनयोऽभिप्रेतः ॥ २३ ॥

## रूपोपन्यासाच्च ॥ १-२-२४ ॥

**'अग्निर्मूर्धा चक्षुषी ... ... सर्वभूतान्तरात्मनः परमात्मन एव संभवति । अतश्च परमात्मा ॥ २४ ॥** (२६७)

**रूपोपन्यासाच्च** । स्फुटार्थम् । अधिकरणार्थं निगमयति — **अतः** इति ॥ २४ ॥

इति अदृश्यत्वादिगुणकाधिकरणम् —५

---

### ६. वैश्वानराधिकरणम् ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ १-२-२५ ॥

**इदमामनन्ति छन्दोगाः — 'आत्मानमेवेमं वैश्वानरं ...... वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥**

(२६९–२७१)

**वैश्वानरः साधारणशब्दविशेषात्** । [3] उपन्यस्तं रूपं परस्मादन्यस्य दृश्यत इति [4] शङ्कया सङ्गतिः । साधारणशब्दस्य सूत्रस्थत्वात् **शक्य-**

---

1. सर्वत्र मूले 'भोक्तृभोग्य' इत्येव पाठः ।
2. प्रोक्षणनयः—क.
3. उपन्यस्तरूपं परस्मादन्यत्र—अ. 4. शङ्कायाः—अ.

निर्णय उत न इति संशयः कृतः । अह्नां केतुः — आदित्यः । आत्मब्रह्मशब्दौ कथमित्यत्राह — वाक्य इति ॥

राद्धान्ते विशेष्यत इति न घञ्प्रत्ययार्थः समासान्तर्गतषष्ठ्यर्थः । कर्मणि षष्ठीत्यर्थः । कृदन्तप्रयोगः कर्मार्थषष्ठीनिमित्तमिति ज्ञापयितुं विशेषपदोपादानम् । यद्वा विशेष्यत इति घञर्थोक्तिः । समासश्च कर्मधारयः । विशेष्यमाणत्वादिति फलितार्थः, न शाब्दार्थः । के पुनर्धर्मा इत्यत्राह— तथा हि इति । धर्म्यैकत्वानेकत्वजिज्ञासया वा [1] पदद्वयविशेषणे तात्पर्याद्वा किंशब्दद्वयम् ॥ २५ ॥

इतश्च वैश्वानरः परमात्मा—

## स्मर्यमाणमनुमानं स्यादिति ॥ १-२-२६ ॥

द्युप्रभृति पृथिव्यन्तमवयवविभागेन ... ... परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ॥ २६ ॥ (२७१-२७२)

स्मर्यमाणमनुमानं स्यादिति । लिङ्गवाचिशब्दश्रवणात् इति शब्दवैयर्थ्यमित्यत्राह — इतिशब्दः इति । मूर्धादीनामुपदेशः संभूय कथं न कृत इत्यत्राह — तथा हि इति । [2] विश्वस्य रूपकत्वात् प्रकाशकत्वात् आदित्यो विश्वरूपः । अन्यत् [3] स्पष्टम् ॥ २६ ॥

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति—

## शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न, तथा दृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥ १-२-२७ ॥

1. पदद्वयगतविशेषे तात्पर्याच्च-अ.
2. विश्वनिरूपकत्वात्-अ. 3. स्फुटम्-अ.

.... .... यथा 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्वम्' इत्यादौ ॥ २७ ॥ (२७२-२७३)

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च इत्यादि । त्रेताग्निक्लृप्तिप्राणाहुत्याधारत्वयोः आदिशब्देनोपादानम् एतच्छ्रुतिस्थतया सन्निकृष्टत्वात् । वाजिनाम् इति — विप्रकर्षात् कण्ठोक्तिरिति भावः । तथा इति । अग्निशब्दसन्निकृष्टम् अन्तःप्रतिष्ठानम् इति भावः । उक्तहेत्वनुक्रमेण शंकितमर्थं निगमयति — अतः इति ॥

तत्र इत्यादि । जाठरलिङ्गपरमात्मलिङ्गश्रवणात् विशिष्टोपास्तिपरत्वमित्यर्थः । विशिष्टप्रतिपादनं कथम्, तत्सिद्धौ हि विशिष्टोपास्तिपरत्वमित्यत्राह — अग्निशब्दादिभिः इति । किं च इति । पुरुषशब्दस्य जीवादिपरत्वं प्रकरणादिवशात्, [1] न तु स्वतः इति भावः ॥ २७ ॥

## अत एव न देवता भूतश्च ॥ १-२-२८ ॥

उक्तेभ्य एव .... .... महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥ (२७३)

अत एव न देवता भूतश्च । जाठरवत् परिच्छिन्नत्वाभावेऽपि नात्मब्रह्मशब्दादिकृत्स्नहेतव उपपन्ना इति भावः ॥ २८ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ १-२-२९ ॥

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य ... ... परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ॥ २९॥ (२७३-२७४)

साक्षादप्यविरोधं जैमिनिः । साक्षात् इति व्याख्येयम् ।

1. स्वभावतः इति भावः-अ.

**अव्यवधानेन** इति व्याख्यानम् । **वैश्वानर** शब्दः केन गुणेन वर्तते; तद्वत अग्निशब्दस्य केन गुणेन वृत्तिरित्यत्राह— **एतदुक्तम्** इति ॥ २९ ॥

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' ....

## अभिव्यक्तेरित्याश्मरथ्यः ॥ १–२–३० ॥

उपासकाभिव्यक्त्यर्थं ... ... विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥ (२७४)

उत्तरसूत्रशङ्कामाह— **यस्तु** इति ॥

अभिव्यक्तेरित्याश्मरथ्यः । परिच्छिन्नत्वं भूततृतीयदेवतयोरेवेति शङ्काऽत्र परिहृता । द्युप्रभृतिरित्यादिभि· प्रादेशमात्रादिशब्दाः विवृताः ॥ ३० ॥

अनन्तरस्य शङ्कामाह — **मूर्ध** इति ।

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं ...

## अनुस्मृतेर्बादरिः ॥ १·२·३१ ॥

तथोपासनार्थमिति बादरिराचार्यो ... .. तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥ ३१ ॥ (२७४–२७५)

अनुस्मृतेर्बादरिः । पुरुषविधत्वम् उपासार्थम् । सा च मुक्त्यर्थेत्यर्थः ॥ ३१ ॥

यदि परमात्मा वैश्वानरः, कथं तर्हि ···

## संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ १–२–३२ ॥

अस्य परमात्मन एव वैश्वानरस्य ... ... एवं ह्यस्य सर्वे पाप्मानः प्रदूयन्ते' इति ॥ ३२ ॥ (२७५)

संपत्तेरिति जैमिनिस्तथा हि दर्शयति। संपत्तिः — अतस्मिन् तत्कल्पनम्। तथा इत्यादिसूत्रखण्डं व्याचष्टे— तथा हि इति। अग्निहोत्रक्लृप्तेः परमात्माराधनार्थतां फलमेव दर्शयतीत्यर्थः ॥ ३२ ॥

**आमनन्ति चैनमस्मिन् ॥ १-२-३३ ॥**

**एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं .. .... अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥ ३३ ॥**

इति वैश्वानराधिकरणम् — ६

**इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥**

---

न परस्य द्युप्रभृतिशरीरत्वम्; उपासकाङ्गानां [1] द्युप्रभृतित्वाद्युक्तेरिति शङ्कायामनन्तरसूत्रम् ॥

**आमनन्ति चैनमस्मिन्।** [2] **एनम्** इतिगर्भितं विवृण्वन् उक्तं विवृणोति — **अयमर्थः** इति। स्पष्टम्। **फलं च** इति। फलवत्सन्निधौ अफलं तदङ्गमिति भावः। बुद्धिसौकर्याय प्रागुक्तमर्थमेतत्सूत्रार्थेन सङ्गतमाह— **एवम्** इति। निगमयति — **अतः** इति ॥ ३३ ॥

इति वैश्वानराधिकरणम् — ६

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत-
श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन
श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रदीपिकायां
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

1. द्युमूर्धत्वाद्युक्तेः–अ. 2. एवमिति–क.

## प्रथमाध्याये तृतीयः पादः ॥

---

### १. द्युभ्वाद्यधिकरणम् ।

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १-३-१ ॥

**आथर्वणिका अधीयते— यस्मिन् द्यौः ... ... मनःप्रभृति जीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥ १ ॥**

**(२८१-२८३)**

**द्युभ्वाद्यायतनं स्वशब्दात्** । पादसङ्गतिः प्रागुक्ता । द्युपृथिव्याद्याधारत्वं परस्मादन्यस्य दृश्यत इति शङ्कयाऽवान्तरसङ्गतिः । [1] स्पष्टजीवलिङ्गकत्वात् अदृश्यत्वाधिकरणे एतदनिरूपणम् । **आथर्वणिकाः** इत्यादि । [2] स्फुटम् । **यथाकथञ्चित्** — स्वरूपेण वा कर्मणा वा धारकत्वम् इति भावः ॥

राद्धान्ते — **आत्मशब्द** इति । गगनदिगादौ प्रयोगाभावात् योगरूढ इति भावः । **बहुधा** इत्यादिना [3] हेतुफलवैषम्यं जन्मन उक्तम् । विशदयितुमाह— **स्मृतिरपि** इति ॥ १ ॥

**इतश्च परमपुरुषः —**

### मुक्तोपसृप्यव्यपदेशाच्च ॥ १-३-२ ॥

**अयं द्युपृथिव्याद्यायतनभूतः पुरुषः ··· निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥ २ ॥** **(२८३)**

---

1. स्पष्टलिङ्गत्वात् अदृश्यत्वाधिकरणे तदनिरूपणम्–अ.
2. स्पष्टम्–ग.
3. हेतुफलवैषम्यं जनशब्दव्याख्या प्रकृतिसंसर्ग–अ.
(मध्ये ग्रन्थपातः इव)

**मुक्तोपसृप्यव्यपदेशाच्च** । न हि वाक्ये मुक्तशब्दः इति शङ्कायां व्याचष्टे — **संसार** इति । प्रलयव्यावृत्त्यर्थं **विधूतपुण्यपापत्वम्** उक्तम् । **निरञ्जन**[1]शब्दव्याख्या **प्रकृतिसंसर्गरहितैः** इति ॥ २ ॥

**परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्म** ...

## नानुमानमतच्छब्दात् प्राणभृच्च ॥ १-३-३ ॥

**यथाऽस्मिन् प्रकरणे प्रधानप्रतिपादकशब्दाभावात्** ... ... **'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः ॥ ३ ॥** (२८३)

[2]एवमिति अन्वय उक्तः । व्यतिरेको वक्ष्यत इत्यर्थः । **नानुमानमतच्छब्दात् प्राणभृच्च** । **'अर्थाभावे यदव्ययम्'** इति अर्थोपादानम्, न सूत्रोपादानम् ॥ ३ ॥

**इतश्चायं न प्रत्यगात्मा**—

## भेदव्यपदेशात् ॥ १-३-४ ॥

**'समाने वृक्षे पुरुषो निमग्नो .... .... तदा वीतशोको भवति ॥ ४ ॥** (२८३–२८४)

**भेदव्यपदेशात्** । [3]**प्रीयमाणम्** इति । जुषेः 'आदिकर्मणि क्तः' इति भावः ॥ ४ ॥

## प्रकरणात् ॥ १-३-५ ॥

**प्रकरणं चेदं परस्य ब्रह्मणः ... ... प्रकरणविच्छेदाशङ्कामात्रमत्र पर्यहार्ष्म ॥ ५ ॥** (२८४)

---

1. शब्दव्याख्यानम्–क. 2. एवमन्वय उक्तः (?)

3. प्रीयमाणम् इत्युक्तः–ग.

प्रकरणात् । तर्हि किमनेनाधिकरणेन इत्यत्राह—**नाडी** इति ॥ ५ ॥

## स्थित्यदनाभ्यां च ॥ १-३-६ ॥

'द्वा सुपर्णा सयुजा सखाया ... ... अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥ ६ ॥

**स्थित्यदनाभ्यां च** । अभ्यर्हितत्वादल्पाच्त्वाद्वा स्थितेः प्राथम्यं सूत्रे । [1] भाष्ये तु श्रुत्युक्तक्रमेण व्याख्यातम् । अधिकरणार्थमुपसंहरति—**अतः** इति ॥ ६ ॥

इति द्युभ्वाद्यधिकरणम्—१

---

### २. भूमाधिकरणम् ॥

## भूमा संप्रसादादध्युपदेशात् ॥ १-३-७ ॥

इदमामनन्ति छन्दोगाः—'यत्र नान्यत् पश्यति ... ... एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति ॥ (२८७–२८९)

**भूमा संप्रसादादध्युपदेशात्** । परप्रकरणाविच्छेदात् तत्परत्वमुक्तम् । तर्हि जीवप्रकरणाविच्छेदात् जीवपरत्वमिति शङ्कया सङ्गतिः । **पठ्यते**, न त्वाकृतिगणस्थः । **बहोः** इति । बहुशब्दस्य भूशब्दादेशः । प्रत्ययादेरचो लोपश्च इत्यर्थः । **अत्र** इति । **तदल्पम्** इति अल्पधर्मि प्रतियोगिपरत्वात् न संख्यापरत्वधर्ममात्रपरत्वे इत्यर्थः । '**बहवः** पुरुषा राजन्', 'अल्पं वा बहु वा' इत्यादौ बहुशब्दस्य संख्यावैपुल्यसाधारण्यदर्शनात् अयं निर्णयः क्रियते । धर्मिवस्त्वन्तरानुक्तिसहितेन धर्मिप्रतियोगित्वेन

---

1. भाष्ये श्रुत्यन्तरक्रमेण–ग.

भूम्नो धर्मित्वनिश्चयः । उपक्रोशनदभावौ सप्राणत्वनिष्प्राणत्वनिबन्धनौ स्याताम्, न तु सजीवत्वाजीवत्वकृतौ इत्यत्राह — **अप्राणेषु** इति । [1] हिंस्यत्वं परस्मात् पञ्चवृत्तिप्राणाच्च व्यावर्तकमित्यर्थः । प्राणशब्दवाच्यो जीवोऽस्तु, तस्य कथं भूमत्वमित्यत्राह — **अयमेव च** इति ॥

**तु** शब्दात् [2] प्रकरणान्तरत्वमाशङ्क्याह — **किं च** इति । 'एष तु वा अग्निहोत्री यः सत्यं वदति' इतिवत् इति भावः । **'यदा वै विजानाति'** इति जीवविषयशास्त्रजन्यज्ञानवानुक्तः । उपक्रमे सशोकत्वं जीवस्य प्रतिपन्नम्, तत् कथं विपुलसुखत्वमित्यत्राह— **अविद्याविमुक्तम्** इति । स्वे महिम्नि स्थितत्वादि कथमित्यत्राह — **तदनुगुणतया** इति ॥

## सिद्धान्तः

**एवं प्राप्तेऽभिधीयते— भूमा संप्रसादादध्युपदेशात् ... ... प्रक्रान्त आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते ॥** (२८९-२९०)

राद्धान्ते, न हि प्राणशब्दानन्तरं ततोऽधिको भूमाशब्दः श्रुत इत्यत्राह — **सत्यशब्दाभिधेयस्य** इति । प्रकरणाविच्छेदात् सत्यं भूमेत्यर्थः । सत्यं भूमाऽस्तु, ततः किं तस्य परमात्मत्व इत्यत्राह— **सत्य** इति । 'अतिवदति' इति सत्यस्याधिकत्वोपदेशेऽपि, आधिक्यस्य प्राणप्रतियोगिकत्वाश्रवणात्, 'सत्यं चानृतं च' इत्यादिवत् जीवस्यापि सत्यशब्दवाच्यत्वसंभवाच्च सत्यस्य जीवादर्थान्तरत्वं न सिध्यतीत्यत्राह — **एतदुक्तम्** इति । यद्यपि सत्याधिक्यस्य प्राणः प्रतियोगितया न श्रुतः, तथाऽपि आधिक्यस्य प्रतियोग्यपेक्षायां नामादिवदनन्तरसन्निहितः [3] प्राण एव प्रतियोगी भवितुमर्हतीति तत्प्रतियोगिकाधिक्यवतः परस्य ब्रह्मणः 'सत्यं

---

1. अहिंसत्वम्-अ. 2. प्रकरणान्तरम्-अ.

3. प्राणयोग प्रतियोगी-अ.

ज्ञानम्' इत्यादिषु सत्यशब्दनिर्दिष्टस्य ततोऽर्थान्तरत्वं सिद्धमित्यर्थः । ततः किं भूम्नः परमात्मत्व इत्यत्राह— **सत्यशब्द** इति ॥

अधिकतयोपदेशादर्थान्तरत्वमुक्तम् । अथाधिकतयोपदेश एव कथमिति शङ्कते— **प्राणशब्द** इति । प्रतिवक्ति— **स वा** इति । **व्यावर्तयति** अधिकतयेत्यर्थः । प्राङ्निर्दिष्टादुत्तरस्याधिकतयोक्तिपरप्रकरणत्वादिति भावः । नातिवाद्यन्तरप्रतीतिः, पूर्वातिवादिप्रत्यभिज्ञानादित्यत्राह— **अत एव** इति । अतः—[1] तुशब्दस्वारस्यात् । ततः किमित्यत्राह— **अतोऽस्य** इति ।

अग्निहोत्रदृष्टान्तमभिप्रेत्य चोदयति— **ननु** इति । परिहरति— **नैतत्** इति । दृष्टान्तवैषम्यं वक्तु तुशब्दात् धर्म्यन्तरप्रतीतिमाह— **तुशब्देन** इति । वैषम्यमाह— **एष तु** इति । अग्निहोत्र्यन्तरत्वनिमित्ताग्निहोत्रान्तरत्व हेतुद्रव्यदेवनान्तराप्रतीत्या तुशब्दस्वारस्यं भग्नम् । अत्र तु अतिवाद्यन्तरत्वनिमित्तोपासनान्तरत्वहेतूपास्यवस्तुसिद्धेर्न स्वारस्यभङ्ग इति भावः । सत्यशब्दस्योपास्यान्तरपरत्वे तुशब्दस्वारस्यम; तत्सिद्धावुपास्यान्तरपरत्वमित्यत्राह — **सत्यशब्दश्च** इति । श्रुतिप्रसिद्धया तुशब्दशक्त्या च नोक्तदोष इत्यर्थः । प्राणनिष्ठस्यासाधारणमतिवादित्वं स्वारस्यभञ्जकमित्यत्राह — **अतिवादित्वं हि** इति । न ह्ययं शब्दो रूढः, किन्तु यौगिक इत्यर्थः । **परब्रह्मवादिन एव** इति । अवयवार्थपौष्कल्यादिति भावः । तुशब्दातिशब्दस्वारस्यम् एवकारेणाभिप्रेतम् । **अत एव** — अतिवादिशब्दस्य यौगिकत्वादेव । आख्यातनिर्देशशिष्यप्रार्थने इति भावः । **आचार्यश्च** इति । सत्यवदनपरत्वे [2] जिज्ञासितव्यशब्दास्वारस्यं चेति भावः । [3] मुखान्तरेणाधिकतयोपदेशमाह— **आत्मनः** इति ॥

---

1. तुशब्दस्वारस्यफलात्–अ. (बलात्)
2. जिज्ञासितव्यशब्दस्वारस्यं च–ग
3. दुःखान्तरेण–अ.

**यदुक्तम् — 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य ... ... सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा परं ब्रह्म ॥**
(२९१–२९३)

**उक्तं च** इति । तुशब्दश्रुतिः आत्मोत्पत्तिरूप[1]लिङ्गं चेत्यर्थः । प्रश्नाभावः किंनिबन्धन इत्यत्राह — **अस्ति** इति । **ब्रह्मसाक्षात्कारोपायभूतम्** इति । 'यदा वै विजानाति' इत्यादिवाक्यस्य यदा साक्षात्करोति तदा सत्यमतिवदतीत्यर्थः । अतिवादस्य प्रकृतत्वादित्यभिप्रायः । सुखरूपताज्ञानं यादृच्छिकविद्वद्वाक्यैः **अनुभूयमाने** इति अर्थवशादध्याहृतम् । इह वाक्ये विशिष्टान्यनिषेधः । कथमीशदृष्टावीशितव्यदृष्टिरित्यत्राह— **अत ऐश्वर्य** इति । **गुण**शब्दोऽपृथक्स्थितिवाची । आत्मगुणविशेषो हि सुखमित्यत्राह— **तदेव हि सुखम्** इति । उपाधिना दुःखरूपत्वे, [2]संबन्धाज्ञानादननुकूलत्वे दृष्टान्तद्वयम् । **'अन्यराजानः' 'स्वराट्'** इति उपाधितद्विगमौ दर्शितौ । विभूत्यादिविशिष्टस्यानन्द[3]रूपत्वमाह — **निरतिशय** इति । 'तदात्मानं स्वयमकुरुत,' 'रसो वै सः' इति हि तत्र श्रुतम् । सूत्रार्थमुपसंहरति— **अतः** इति ॥ ७ ॥

## धर्मोपपत्तेश्च ॥ १-३-८ ॥

**अस्य भूम्नो ये धर्मा आम्नायन्ते ... ... तस्मात् भूमविशिष्टः परमात्मेति सिद्धम् ॥ ८ ॥**
(२९३–२९४)

**धर्मोपपत्तेश्च । अहङ्ग्रहेण**— अहमर्थशब्दयोः परमात्मपर्यन्तत्वबुद्ध्या । तर्हि अतस्मिन् तद्धीः स्यादित्यत्राह — **अहमर्थस्य** इति । परस्य सर्वात्मत्वं न परमन्तर्यामिब्राह्मणादिसिद्धम्, अस्मिन्नपि प्रकरणे तदवगम्यते

1. लिङ्गं चेत्यर्थः । अतिवादस्य प्रकृतत्वात् । अ. (मध्ये ग्रन्थपातः इव ।
2. संबन्धज्ञानात्–अ. 3. रूपत्वायाह–अ.

इत्याह — [1]**परमात्मनः** इति । **परमात्मा** इत्यन्तेनार्थोक्तिः । ततो व वयोपादानम् । **एतदेव** इति । **विजानतः** इति षष्ठ्यन्तम् इत्यर्थः । अधिकरणार्थमुपसंहरति — **तस्मात्** इति ॥ ८ ॥

इति भूमाधिकरणम्–२.

---

## ३. अक्षराधिकरणम् ॥

## अक्षरमम्बरान्तधृतेः ॥ १-३-९ ॥

**वाजसनेयिनो गार्गिप्रश्ने समामनन्ति – ' स होवाचैतद्वै तदक्षरं ... ... अर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत् प्रतिपादन-दशायामपेक्षणीयम् ॥ ९ ॥** (२९६-२९७)

**अक्षरमम्बरान्तधृतेः** । भूम्नः स्वे महिम्नि स्थितिरुक्ता । सा परस्मा-दन्यत्रापि दृश्यत इति शङ्कया सङ्गतिः । **' अह्रस्वमदीर्घम् '** इत्यनेनैव वर्णेःवशङ्कानुदयान्न तत्परत्वमिह पूर्वपक्षितम् । **प्रमाणान्तर** इति । अनुमानात् श्रुतिर्विलम्बिता ; प्रत्यक्षानुमितिसापेक्षत्वात् श्रुतेरिति भावः । श्रुतेः व्युत्पत्तिसापेक्षत्वात् , व्युत्पत्तेः प्रत्यक्षानुमानापेक्षत्वाच्च इति भावः ॥

[2]राद्धान्तं स्पष्टम् । पूर्वपक्षयुक्तिं परिहरति — **तन्न** इति । शब्द-वाच्यतया प्रतिपत्तेर्न मानान्तरापेक्षेत्यर्थः । कथमनपेक्षा, व्युत्पत्त्यादौ अपेक्षि-तत्वादित्यत्राह –**संबन्ध** इति ॥ ९ ॥

**एवं तर्हि अक्षरशब्दनिर्दिष्टो जीवोऽस्तु ... ...**

## सा च प्रशासनात् ॥ १-३-१० ॥

**सा चाम्बरान्तधृतिरस्याक्षरस्य .... ... अतः पुरुषोत्तम एव प्रशासित्रक्षरम् ॥ १० ॥** (२९७-२९८)

---

1. परमात्मा इति–म. 2. राद्धान्ते–म.

अनन्तरसूत्रशङ्कामाह— **एवं तर्हि** इति। **सा च प्रशासनात्**। जीवस्यापि नियमनलेशसंभवात् तद्व्युदासायाह— **प्रकृष्टम्** इति। अप्रति-हतं **शासनम्** इत्यर्थः॥ १०॥

## अन्यभावव्यावृत्तेश्च ॥ १-३-११ ॥

**अन्यभावः-अन्यत्वम्, प्रधानादिभावः। ... ... यद्-ज्ञानात् संसारप्राप्तिः, यज्ज्ञानाच्च अमृतत्वप्राप्तिः, तदक्षरं परं ब्रह्मैवेति सिद्धम्॥ ११॥** (२९८-२९९)

**अन्यभावव्यावृत्तेश्च। अदृष्टम्**– स्वधार्यैरदृष्टम्। तद्धारकतया [1]दृष्टम्। तादृशद्रष्टुः प्रकृतत्वात्। **नान्यदतोऽस्ति**-धार्येण परमात्मना अदृष्टम्, अस्य धारकतया [2]द्रष्टृ नेत्यर्थः। चिदचिद्व्यावृत्तिम् **आदि**शब्दात् धारकद्रष्ट्रन्तराभावो विवक्षितः॥

अस्यां योजनायां चिदचिद्व्यावृत्तिकण्ठोक्तिसिद्धिः। तद्व्यावर्तक-सकलधर्मवाचिवाक्यविवक्षा च स्यात्। अपरस्यां तु व्यावृत्तिरर्थसिद्धा। धारकद्रष्ट्रन्तरराहित्यमेव कण्ठोक्तं स्यात्। **नान्यदस्ति** इति विषयवाक्यं [3]सौत्रशब्दैरनुसृतं स्यात्। **व्यावर्तयन्** इत्यन्तेन सूत्रार्थोक्तिः। [4]ततः परं फलितार्थोक्तिः॥

सौत्रः चशब्दोऽनुक्तसमुच्चयपर इत्यभिप्रायंस्तदर्थमाह — **किं च** इति॥

इति अक्षराधिकरणम् — ३

---

1. दृष्टः-अ.
2. द्रष्टृ नेतृ नेत्यर्थः-अ.
3. सौत्रशब्दैरनुभूतं-अ.
4. ततः फलितार्थोक्तिः-ग.

## ४. ईक्षतिकर्माधिकरणम् ॥

# ईक्षतिकर्मव्यपदेशात् सः ॥ १-३-१२ ॥

आथर्वणिकाः सत्यकामप्रश्नेऽधीयते — 'यः पुनरेतं …… एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथाकथञ्चित् नेतव्याः ॥
(३००-३०१)

**ईक्षतिकर्मव्यपदेशात् सः** । आकाशशब्दवत् अन्तरिक्षब्रह्मलोक-शब्दयोर्नान्यथा निर्वाह इति शङ्कया सङ्गतिः । अस्मिन्नधिकरणे ध्यानेक्षण-योर्विषयभेदं पूर्वपक्षीकृत्य [1]तदैक्यं सिद्धान्तयति । परान् प्रतिक्षिपति — **अत्र** इत्यादिना । **ध्यान** इति स्फुटम् । **उभयत्र** इति । **परं पुरुषम्** इति । परशब्दविशेषितपुरुषशब्देन निर्दिष्टस्य विषयस्योभयत्रैकत्वेन प्रत्यभिज्ञानात् ; परत्वस्य प्रतियोग्यपेक्षत्वात्, उत्तरत्र 'जीवघनात् परात्' इति निर्दिष्टस्यैव प्रतियोगिनः पूर्वत्राप्यनुषङ्गेण प्रतियोगितयाऽवगमात् प्रतियोग्यन्तरानुक्तेश्च न विषयभेदशङ्का इति परोक्तौ पूर्वपक्षसिद्धान्तौ न युक्ताविति भावः । चतुर्मुखस्य समष्टित्वं देवाद्यपेक्षया ॥

## सिद्धान्तः

इति प्राप्ते प्रचक्ष्महे – ईक्षतिकर्मव्यपदेशात् सः । … परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम् । अत ईक्षतिकर्म परमात्मा ॥ १२ ॥
(३०१-३०२)

राद्धान्ते **परमात्मन एव** इति । चतुर्मुखपरत्वे पुल्लिङ्गता स्यादिति भावः । **चतुर्मुखस्यापि** इति । उपदेशजन्यज्ञानप्रसरत्वात् कर्मवश्यता इति भावः । **न च** इत्यादि । अस्वारस्यं तुल्यमिति भावः । पूर्वे प्राकृताप्राकृत-

1. तदैक्यं सिद्धान्तयतः परान्-अ.

विभागाभावात् तदानीं लोकत्वयोक्त्ययोगात् प्राकृतलोकद्वयानन्तरोक्तलोकः प्राकृत एवेत्यत्राह — **एतद्वै** इति । **सर्वं समञ्जसम्** इति । अन्तरिक्ष-शब्दस्य [1] प्रदर्शनार्थत्वमेवास्वरसमस्मन्मते । परस्य तु सर्वमस्वरसमित्यर्थः ॥

इति ईक्षतिकर्माधिकरणम् — ४

---

## ५. दहराधिकरणम् ॥

## दहर उत्तरेभ्यः ॥ १-३-१३ ॥

**इदमामनन्ति छन्दोगाः — अथ यदिदमस्मिन् ब्रह्मपुरे ... ... तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते ॥**
( ३०४ )

**दहर उत्तरेभ्यः** । पूर्वं पुरिशयस्य परमात्मत्वमुक्तम् । तस्यापरमात्म-त्वमिहोच्यत इति शङ्कया सङ्गतिः । आकाशान्तरिक्षशब्दवाच्यादन्यस्य परत्व-निश्चयात् अक्षरेक्षतिकर्माधिकरणयोः साहचर्यम् ; तदभावात् अक्षरदहराधि-करणयोः साहचर्याभावः । परस्मिन्नपि तत्प्रयोगात् तद्व्यावृत्त्यर्थं **प्रकर्ष**शब्दः । अपहतपाप्मत्वादिब्रह्मगुणश्रवणात् दहराकाशो ब्रह्मेत्यत्राह — **तस्मिन्** इति । एतच्च **अथ स्यात्** इत्यादिना व्यक्तीभविष्यति ॥

राद्धान्ते — न हि परमात्मधर्माणामुत्तराधरभाव । [2] अत उत्तरत्वं वाक्यद्वारकमित्याह — **वाक्यगतेभ्यः** इति । **हेतु**शब्दः चतुर्थ्यन्तत्व-शङ्काव्युदासाय ॥

**ननु च — दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न संभवति ... ... अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥**
( ३०५-३०७ )

---

1. प्रदर्शनार्थमेव-अ. 2. अथ-अ

अथ स्यात् इति । अव्यवहितत्वात् आकाशाधिकरणप्रथमान्तनिर्देशस्यप्राधान्यात् 'एष' इति परामृष्टमन्वेष्टव्यम् । अपहतपाप्मत्वादयस्तद्गुणा इति न दहराकाशगुणा इत्यर्थः । परिहरति — स्यादेतत् इति । गुणिध्याने गुणधीरर्थी, न तु गुणध्याने गुण्यन्तर्भावः । नात्रोभयोपस्थापना विधीयते, उभयोपस्थापकशब्दादर्शनात् । तच्छब्दो हि तदन्तवर्तिमात्रविषयः यद्वृत्तनिर्दिष्टविषयत्वात् तच्छब्दस्य इत्यत्राह — अत्र इति । न तच्छब्द उभयपरः, यच्छब्दनिर्दिष्टपरामर्शित्वात् तच्छब्दस्य, तस्य च तदन्तवर्तिमात्रपरत्वादित्यत्राह — यदिदम् इति । 'त्यदादीनि सर्वैर्नित्यम्', 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इत्यादिना एकशेष एकवचनं चेति भावः ॥

दहराकाश इत्यादि । उक्तार्थे प्रामाणिके हि क्लिष्टनिर्वाहाश्रयणं युज्यत इत्यर्थः । प्रतिवक्ति — तदत्रहित इति । 'यावान् वा' इत्यादिवाक्येऽव्यवहितमन्वेष्टव्यम् न परामृशति 'एष आत्मा' इत्येतच्छब्दः । किं तु अव्यवहिताकाशपरामर्शीत्यर्थः । 'नास्य जरयैतज्जीर्यति' इत्यादेरर्थमाह — तस्य इति । अन्यत् स्पष्टम् ॥ १३ ॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १-३-१४ ॥

**इतश्च दहराकाशः परं ब्रह्म — 'तद्यथा हिरण्यनिधिं … … सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ॥**
(३०७–३०८)

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च । निषाद इति । अश्रुतविभक्त्यर्थकल्पितः आश्रयान्तरकल्पनात् श्रुतस्यैव स्थापत्यसंबन्धो न्याय्यः इत्येवंरूपन्यायादित्यर्थः । गतिशब्दमात्रस्यार्थान्तरमाह — अथवा इति । अन्तरात्मत्वेन इति । [1]धर्मैक्यादुक्तम् ॥ १४ ॥

1. 'धर्मैक्यात्' इति श्रुतप्रकाशिकायाम् ।

इतश्च दहराकाशः परं ब्रह्म—

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १-३-१५ ॥

'अथ य आत्मा' इति प्रकृतं ... ... महिमाऽस्मिन् दहराकाश उपलभ्यते ; अतो दहराकाशः परं ब्रह्म ॥ १५ ॥

(३०८–३०९)

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । धृतिः — विधृतिः, असङ्कीर्णत्वेन धारणम् ॥ १५ ॥

## प्रसिद्धेश्च ॥ १-३-१६ ॥

आकाशशब्दश्च परस्मिन् ब्रह्मणि ... ... प्रसिद्धिः भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ॥ १६ ॥ (३०९)

प्रसिद्धेश्च । प्रसिद्धयतिशयो भूताकाश इत्यत्राह — अपहत इति ॥

एवं तावत् दहराकाशस्य भूताकाशत्वम् ... ...

## इतरपरामर्शात् स इति चेन्नासंभवात् ॥ १-३-१७ ॥

यदुक्तं वाक्यशेषवशात् दहराकाशः ... ... न ह्यपहतपाप्मत्वादयो गुणा जीवे संभवन्ति ॥ १७ ॥ (३०९)

उक्तं वदन् वक्ष्यमाणमाह — अथ इति । इतरपरामर्शात् स इति चेन्नासंभवात् । साक्षात् इति । 'अथ य एष' इत्येतच्छब्दस्य प्रकृतपरत्वात् प्राक् प्रकृतोऽपि जीव इत्यर्थः । अन्यत् स्पष्टम् ॥ १७ ॥

## उत्तराच्चेत् आविर्भूतस्वरूपस्तु ॥ १-३-१८ ॥

उत्तरात् प्रजापतिवाक्यात्, जीवस्यैव ... ... 'जगद्व्यापारवर्जम्' इत्यत्रोपपादयिष्यामः ॥ १८ ॥ (३१०–३१२)

**उत्तरात् चेत् आविर्भूतस्वरूपस्तु** । किं प्रजापतिवाक्यम्; तच्च परमात्मपरं किं न स्यात्? जीवपरत्वे च किमायातम् प्रकृतस्येत्यत्राह — **एतदुक्तम्** इति । [1]**प्राप्यस्य** इति । जीवस्य प्राप्यतया [2]परमपुरुषस्य प्रसङ्गः । न तु प्रकरणप्रतिपाद्यतयेति भावः । **इति चेत्** इति । **एतदुक्तम्** इत्यन्वयः । **तु** शब्दाभिप्रेतमाह — **आविर्भूतस्वरूपस्यापि** इति ॥ १८ ॥

**यद्येवं, दहरवाक्ये ' अथ य एष संप्रसादः ....**

## अन्यार्थश्च परामर्शः ॥ १-३-१९ ॥

**दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवत् ... प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥ १९ ॥** (३१२)

**अन्यार्थश्च परामर्शः** । दहरधीरेव मुक्तिदा चेत्, किमर्थं जीवोपास्तिविधिरित्यत्राह — **प्रजापतिवाक्ये च** इति । अङ्गस्य कथं फलोक्तिरित्यत्राह — **सर्वान्** इति ॥ १९ ॥

## अल्पश्रुतेरिति चेत् तदुक्तम् ॥ १-३-२० ॥

**' दहरोऽस्मिन् ' इत्यल्पपरिमाणश्रुतिः ... ... आविर्भूतापहतपाप्मत्वादिगुणस्वस्वरूप इति न दहराकाशः ॥ २० ॥** (३१२–३१३)

उपसंहारस्थहेतुः प्रत्युक्तः । [3]अथोपक्रमगतं प्रतिवक्ति । **अल्पश्रुतेरिति चेत् तदुक्तम्** । उपक्रमप्राबल्यादधिकाशङ्का । महावाक्यस्य ततोऽपि प्राबल्यात् परिहारः । उत्तरसूत्रयोः परमप्रकृतेन सङ्गतिं ज्ञापयितुमाह — **अतः** इति । **ज्ञानादयः** [4]सत्यसङ्कल्पत्वफलिताः ॥ २० ॥

---

1. प्रापकस्येति–अ. 2. परमपुरुषप्रसङ्गः–अ.

3. अथोपक्रमस्थं–अ. 4. सत्यसङ्कल्पफलिताः–अ.

इतश्चैतदेवम्—

## अनुकृतेस्तस्य च ॥ १-३-२१ ॥

तस्य-दहराकाशस्य ... ... अनुकार्यं ब्रह्म दहराकाशः ॥ २१ ॥
(३१३)

अनुकृतेस्तस्य च। स्पष्टम् ॥ २१ ॥

## अपि स्मर्यते ॥ १-३-२२ ॥

संसारिणोऽपि मुक्तावस्थायां ... ... परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम्। सूत्राक्षरवैरूप्यं च ॥ २२ ॥
(३१३-३१४)

अपि स्मर्यते। परोक्तमधिकरणान्तरत्वमनूद्य व्युदस्यति— केचित् इति। तेजसः प्राकृतत्वव्युदासायारम्भ इत्यत्राह — ज्योतिश्चरण इति। शङ्काधिक्याभाव उक्तः सूत्राक्षर इति। अनुशब्दोक्तेः [1] इत्यर्थे न युक्तः। इह शास्त्रे शब्दस्वरूपपरत्वस्यापरिभाषितत्वात्। 'तस्य' इति सौत्रपदस्य 'यदेव विद्ययेति हि' इतिवत् इतिशब्दविधुरस्य 'तस्य भासा' इति श्रुत्युपादानपरत्वं च अस्वरसमिति भावः ॥ २२ ॥

इति दहराधिकरणम्-५

---

## ६. प्रमिताधिकरणम् ॥

## शब्दादेव प्रमितः ॥ १-३-२३ ॥

कठवल्लीषु श्रूयते— 'अङ्गुष्ठमात्रः पुरुषः ... ... न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ॥ २३ ॥ (३१९)

1. इत्युक्तो न युक्तः—म.

**शब्दादेव प्रमितः ।** 'अल्पश्रुतेः' इति परस्य अल्पपरिमाणत्व-मुक्तम् । तद्विशेषो जीवस्य श्रूयते इति शङ्कया सङ्गतिः । परस्याप्यल्पपरि-माणत्वमुक्तमित्यत्राह— **न च** इति । कृत्वा चिन्तेयम्, [1] अन्यत्र परस्य तच्छ्रवणात् । ईशानत्वं कथमित्यत्राह— **ईशानत्वम्** इति । प्रथमश्रुता-ङ्गुष्ठमात्रत्वस्वारस्यात् चरमश्रुतेशानत्वास्वारस्यं पूर्वपक्षिणो मतम् ॥

राद्धान्ते— **शब्दादेव,** न लिङ्गात् । पर्यायशब्दादेवेत्यर्थः ॥ २३ ॥

**कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—**

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १-३-२४ ॥

परमात्मन उपासनार्थम् ... ... स्थितं तावदुत्तरत्र समाप-यिष्यते ॥ २४ ॥ (३१९-३२०)

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् ।** जीवस्यापि इति । उभया-स्वारस्यात् एकास्वारस्यं न्याय्यमित्यर्थः । अङ्गुष्ठमितत्वमननुगतमित्यत्राह— **मनुष्याणाम्** इति । [2] प्रासङ्गिकार्थस्याचिन्त्यत्वं बुद्ध्वाह— **स्थितं तावत्** इति ॥ २४ ॥

### ७. प्रमिताधिकरणगर्भे देवताधिकरणम् ॥

## तदुपर्यपि बादरायणः संभवात् ॥ १-३-२५ ॥

**परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये ... ... अतः सामर्थ्या-र्थित्वयोरभावात् देवादीनामनधिकार इति ॥** (३२१)

**तदुपर्यपि बादरायणः संभवात् ।** प्रसङ्गात् सङ्गतिमाह -- **परस्य** इति । मनुष्यशब्दस्यार्थे किं नियमार्थम्, उत देवादयोऽपीति शङ्कया

---

1. त्वन्यत्र अ. 2. प्रासङ्गिकार्थस्य चिन्त्यत्वं—अ

सङ्गतिः इत्यर्थः । **सामर्थ्याभावात्** इति । अर्थित्वाभावस्याप्युपलक्षणम् । **उपसंहारः** — अनुष्ठानम् । **यद्यपि** इति । प्रवृत्तिनिवृत्तिरूपत्वाभावात् ब्रह्मवत् पुरुषार्थरूपत्वाभावाच्च । न विग्रहवत्त्वे तात्पर्यमित्यर्थः । **अन्यपरत्वात्** — स्तुत्यनुष्ठेयप्रकाशनयोः । कर्मणो द्रव्यदेवतानिरूप्यत्वात् तदपेक्षितत्वात् विग्रहादिसिद्धिरित्यत्राह— **कर्मविधयश्च** इति । **अत एव**—शरीराभावादेव ॥

## सिद्धान्तः

**एवं प्राप्ते प्रचक्ष्महे – तदुपर्यपि बादरायणः ... ... अतो विग्रहादिमत्त्वात् देवानामप्यधिकारोऽस्त्येव ॥ २५ ॥ (३२१–३२३)**

राद्धान्ते अर्थित्वसामर्थ्ये क्रमाद्विवृणोति — **अर्थित्वम्** इत्यादिना । कानि विग्रहवत्त्वाभिधायीनि वचांसि, कथं तैस्तत्प्रतिपादनमित्यत्राह — **तथा हि** इति । नामरूपव्याकरणश्रुत्या श्रुत्यन्तरतदुपबृंहणस्मृत्यादिसिद्धतच्चातुर्विध्यमभिप्रेतम् । 'इन्द्रो वरुणः सोमो रुद्रः' इत्यादीन्यपि च सन्ति इति भावः । ततः किमित्यत्राह — **देवादि** इति ॥

उपासनप्रकरणेऽपि दर्शयति — **तथा** इति । विधिशेषत्वेन तत्सिद्धिमाह — **कर्मविधि** इति । **न च असता** इति । वेदवाक्यानां निरूपकाधिकारिकतया न बालाद्युपच्छन्दनतुल्यता युक्तेति भावः । 'आपो वै शान्ताः', 'आदित्यो यूपः' इत्यादिषु प्रमाणान्तरसिद्धतद्विरुद्धार्थस्याप्युच्यमानत्वान्न सर्वत्र प्रामाण्यमिति शङ्कायामाह — **तत्र प्रमाणान्तर** इति । विध्यपेक्षिते हि तात्पर्यम् । कथं देवताविग्रहादेः [1] विध्यपेक्षितत्वमित्यत्राह— **कर्मविधेः** इति । श्रुतहानाश्रुतकल्पनी इति भावः । **व्युत्पत्तिसमयानवगतम्** इति । वाच्यापूर्वपक्षे क्लृप्तिर्गुर्वीति भावः । 'फलमत' इत्यत्र वक्ष्यमाणं बुद्धि-

1. विध्यपेक्षितम्–अ.

सौकर्यायेहोक्तम्। स्तुतिप्रकाशनाभ्यां तत्सिद्धिरत्रासाधारणार्थः। सङ्कीर्ण इति। नित्यानुमेयश्रुतिव्युदासः ॥ २५ ॥

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्ते-र्दर्शनात् ॥ १-३-२६ ॥

देवादीनां विग्रहादिमत्त्वाभ्युपगमे ... ... सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥ २६ ॥ (३२३-३२४)

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्। न योग्यादृष्टिः विग्रहाणां, मन्त्रौषधादिभिरिव अदृश्यत्वसंभवादिति भावः ॥ २६ ॥

## शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानु-मानाभ्याम् ॥ १-३-२७ ॥

विरोध इति वर्तते। मा भूत् कर्मणि ... ... वैदिकशब्दाना-मानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते ॥ २७ ॥ (३२४-३२५)

शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्। अनित्यत्वम् — अनुच्चार्यमाणत्वम्। कथं शब्दादर्थजन्म, ततश्च कथं चोद्यपरिहार इत्यत्राह — एतदुक्तम् इति। आकृत्यनित्यत्वेऽपि पशुव्रीह्याद्यनन्यत्व इव प्रवाहनित्यतया परिहारः ॥ २७ ॥

## अत एव च नित्यत्वम् ॥ १-३-२८ ॥

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां ... ... अतश्च वेदानां नित्यत्वम्, एषां च मन्त्रकृत्त्वमुपपद्यते ॥ २८ ॥ (३२५)

अर्थद्वारकमनित्यत्वं परिहृतम्। शब्दद्वारकमनित्यत्वं परिहरति।

अत एव च नित्यत्वम् । कथमित्यपेक्षायाम्, उक्तं विशदयति — एभिरेव इति । अनधीत्यैव अस्खलितस्वरवर्णतया दर्शनं मन्त्रकृत्त्वम् ॥

उत्तरसूत्रस्य शङ्कामाह — अथ स्यात् इति ॥

अथ स्यात् — नैमित्तिकप्रलयादिषु इन्द्राद्युत्पत्तौ ... ...

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो**
**दर्शनात् स्मृतेश्च ॥ १-३-२९ ॥**

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि ... ... अतो देवादीनामपि अर्थित्वसामर्थ्ययोगात् ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च । पूर्वोक्तादेव इति । तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकसृष्टया समाननामरूपत्वं फलितमिति भावः । तदनुपपन्नम्, शब्दस्मृतिपूर्वकार्थस्मृतेः अभावादित्यत्राह — तथा हि इति । शक्तिमात्रावशेषम् — भोक्तृत्वादियोग्यताऽस्ति, न तु तत्कार्यकरत्वमिति भावः । सर्वम् इति — नामरूपसाम्यं, वेदनित्यत्वं, सार्थकत्वं च ॥

शब्दस्योत्पत्त्याद्यभ्युपगमे कथं वेदनित्यता इत्यत्राह — एतदेव च इति । वर्णनित्यत्वादेः पौरुषेये व्यभिचारात् नित्यतया विभुतयोपगतवर्णानाम् आनुपूर्वीनिबन्धनोच्चारणानित्यत्वात् [1] पूर्वक्रमतुल्यक्रमतया उत्तरोत्तरमुच्चार्यमाणत्वं नित्यत्वमित्यर्थः । स्मृत्वोच्चारणे परस्यान्याधीनधीत्वमाशङ्क्याह — इयान् इति । स्वयमेव — अध्यापयितृनिरपेक्षम् । अवधारणद्वयेन अस्मदादेः पाश्चात्यप्राथमिकोच्चारण [2] व्यावृत्तिः । 'बहु स्याम्' इति ईदृशोच्चारणस्वस्वातन्त्र्याधीनः । उदाहृतश्रुतिस्मृतिषु सर्वासु सृष्ट्युपयोगिनो वेदोपदेशस्य क्वचित्क्वचित्त्वेऽप्यनुक्तस्यान्यतो ग्राह्यत्वात् सर्वासु तत्सिद्धिः ॥

---

1. न पूर्वकर्मतुल्यकर्मतया—अ.
2. व्यावृत्तिः । ईश्वरसिद्धौ—अ (मध्ये ग्रन्थपातः)

ईश्वरसिद्धौ संप्रदायाविच्छेदसिद्ध्या नित्यत्वे सिद्धे, वेदप्रामाण्यसिद्धावीश्वरसिद्धिरिति न चक्रकं शङ्कनीयम्, प्रामाण्यस्य स्वतस्त्वात् । अपवादहेतोर्योग्यानुपलम्भनिरस्तत्वाच्च । कृत्स्नवेदप्रामाण्ये 'तेजो वै घृतम्' इत्यादिवाक्यशेषप्रामाण्यं, तत्सिद्धौ शर्कराञ्जनवाक्यस्य सन्देहलक्षणाप्रामाण्यव्युदासः । तस्मिन् सिद्धे कृत्स्नवेदप्रामाण्यमिति चक्रकं यथा परिहृतं, तद्वत् ॥ २९ ॥

इति देवताधिकरणम्—७

---

८. मध्वधिकरणम् ॥

## पूर्वपक्षसूत्रम्

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ १-३-३० ॥

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीति ··· वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना ॥ ३० ॥

मध्वादिष्वसंभवादनधिकारं जैमिनिः । उपासनसामान्ये देवतासामान्यस्याधिकारो निरूपितः । अथ तद्विशेषेषु तद्विशेषाणां स निरूप्यते इति सङ्गतिः । कर्मकर्तृविरोधात् प्राप्तफलत्वाच्च सामर्थ्यार्थित्वाभावौ । तदुभयं विशदयति — मधुविद्यायाम् इति । वस्वादिभिर्भुज्यमानानाम् इति । भोक्तृभिः सह तत्तदंशानाम् उपास्यत्वम् इत्यर्थः ॥ ३० ॥

## ज्योतिषि भावाच्च ॥ १-३-३१ ॥

'तं देवा ज्योतिषां ज्योतिः ··· ··· अत एषु वस्वादीनामनधिकारः ॥ ३१ ॥  (३३१)

ज्योतिषि भावाच्च । 'देवा एव' इत्युक्तम्, मनुष्यानधिकारप्रसङ्गात् । अतो ज्योतिरेवेत्यर्थ इति भावः ॥ ३१ ॥

## सिद्धान्तसूत्रम्

इति प्राप्तेऽभिधीयते—

### भावं तु बादरायणोऽस्ति हि ॥ १-३-३२ ॥

आदित्यवस्वादीनामपि तेष्वधिकारभावं ... .... ब्रह्मण एव सर्वत्र निचाय्यत्वात्' इति ॥ ३२ ॥ (३३२)

भावं तु बादरायणोऽस्ति हि । अक्षरार्थमुक्त्वा [1] पूर्वपक्षयुक्तिं परिहरति ग्रन्थद्वयेन अस्ति हि इत्यादिना । उपास्तिफलयोर्ब्रह्मतत्प्राप्तिपर्यन्तत्वे सिद्धे ह्येवं परिहार इत्यत्राह — अत्र हि इति । उभयावस्थादित्योपासनं प्रतीतं, न तु तच्छरीरकपरविषयं, [2] तत्प्राप्तिफलं चेत्यत्राह — न ह वा इति । उपनिषदं वेद — उपास्तिं कुरुते; 'ओदनपाकं पचति' इतिवत् । उपसंहरति — अतः इति ॥

वस्वादिसमुदायस्योपास्यत्वेन एकैकस्योपासकत्वेन च कर्मकर्तृविरोधपरिहारः । कल्पान्तरे [3] वस्वादित्वप्राप्तिमात्रस्य फलत्वसंभवश्च परैर्व्याख्यातौ न प्रामाणिकाविति दर्शितौ स्वाभिमतार्थस्य प्रामाणिकत्वोपपादनेन । स्वमतस्य सांप्रदायिकत्वं वदन्, परमतस्य असांप्रदायिकत्वं च सूचयति — तदाह इति ॥ ३२ ॥

इति मध्वधिकरणम्–८

---

1. पूर्वपक्षयुक्तं-अ.
2. तत्प्राप्तिफलत्व-अ.
3. वस्वादित्यप्राप्ति-अ.

## ९. अपशूद्राधिकरणम् ॥

# शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १-३-३३ ॥

ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति न वा ... ... अतः शूद्रस्याप्यधिकारः संभवति ॥ (३३४-३३५)

शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि । अर्थित्व-सामर्थ्ययोः प्रयोजकत्वे शूद्रादेरप्यधिकारः स्यादिति शङ्कया सङ्गतिः । यज्ञादिकर्मानधिकार एव, [1] न तूपासनानधिकार इत्यर्थः । न्यायसिद्धः कर्मकाण्डे अपशूद्राधिकरण [2] न्यायसिद्धः । प्रधानयुक्तिमाह— तथा इति ॥

## सिद्धान्तः

इति प्राप्त उच्यते-न शूद्रस्याधिकारः ... ... प्रारब्धकर्म-वशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम् ॥ (३३५)

राद्धान्ते — [3] ब्रह्मस्वरूपाद्यनवगमलक्षणासामर्थ्यस्य हेतुमाह — असामर्थ्यं च इति । उपासनविधिना [4] शूद्राधिकारः कल्प्य इत्यत्राह — यथैव हि इति । अनुष्ठानाय हि तत्क्लृप्तिः रथकारादौ [5] यज्ञादौ त्रैवर्णिकै-स्तत्सिद्धेः न तत्क्लृप्तिर्न्याय्या । अध्ययनस्यापि [6] प्रयोजकतया गौरवं च स्यात् । एवमुपासनेष्वपीत्यर्थः । इतिहास इति । यथा व्याख्येयं विना व्याख्यानमात्रान्नार्थपौष्कल्यं तद्वत् इत्यर्थः ॥

---

1. न तूपासनाधिकार -ग. 2. नयसिद्धः-अ.
3. ब्रह्मस्वरूपानवगम-ग. 4. शूद्राधिकारविकल्प्यः-अ.
5. यज्ञादौ तु-ग. 6. प्रयोजनकतयां-अ.

[1] यत्तु — संवर्गविद्यायां शुशूषोः शूद्रेति ... ... शोक एवास्य सूचितः ; न चतुर्थवर्णत्वम् ॥ ३३ ॥ (३३६-३३७)

अभिप्रेतपूर्वपक्षयुक्तिपरिहारः कृतः । अथ प्रधानयुक्तिं परिहर्तुं सूत्रमवतारयति — यत् तु इति । अनादरोक्त्याद्रवणे कारणकार्ये शुचो लिङ्गमिति भावः । [2] रप्रत्ययः प्राकरणिकः । 'अमितम्योर्दीर्घश्च' इति दीर्घशब्दानुवृत्तिः । औणादिके संभवति, नैरुक्तनिर्वाहो न युक्त इति भावः ॥

अनादरोक्त्यादिकं विशदयितुमाह — जानश्रुतिः किल इति । भल्लाक्षः — हंसः । गुणश्रेष्ठम् इति सयुग्वशब्दार्थः ॥ ३३ ॥

## क्षत्रियत्वगतेश्च ॥ १-३-३४ ॥

'बहुदायी' इति दानपतित्वेन ... ... क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वम् ॥ ३४ ॥ (३३७)

क्षत्रियत्वगतेश्च । पूर्वसूत्रे शूद्रशब्दस्य योगानुकूल्यमुक्तम् । इह तु रूढिविरोधो दर्शितः ॥ स्पष्टम् ॥ ३४ ॥

तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्व ... ...

## उत्तरत्र चैत्ररथेन लिङ्गात् ॥ १-३-३५ ॥

अस्य जानश्रुतेरुपदिश्यमानायाम् ... ... अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ ३५ ॥ (३३८)

उत्तरत्र चैत्ररथेन लिङ्गात् । अभ्यप्रायनयो विवक्षितः । कथम् इति । अभिप्रतारिसंज्ञस्य चैत्ररथत्वं कथमित्यर्थः । कापेयसाहचर्यात् — सहपाठात् इत्यर्थः ॥ ३५ ॥

---

1. यच्च इत्यपि पाठः । 2. रक्प्रत्ययः इति श्रुतप्रकाशिकायाम् ।

तदेवं न्यायविरोधिनि शूद्रस्याधिकारे ... ...

**संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ १-३-३६ ॥**

ब्रह्मविद्योपदेशेषूपनयनसंस्कारः ... 'चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति' इत्यादिषु ॥ ३६ ॥ (३३८-३३९)

उक्तं [1]वक्ष्यमाणं च वदन् अनन्तरसूत्रमवतारयति — तदेवम् इति। कर्मकाण्डापशूद्राधिकरणन्यायस्य ब्रह्मोपासनशास्त्रेऽपि प्रवृत्तौ विरोधिलिङ्गं न दृश्यत इत्युक्तम्। अथानुकूल्यलिङ्गं च दृश्यत इति वक्ष्यत इत्यर्थः ॥

संस्कारपरामर्शात् तदभावाभिलापाच्च। ततः किमित्यवाह — शूद्रस्य च इति ॥ ३६ ॥

**तदभावनिर्धारणे च प्रवृत्तेः ॥ १-३-३७ ॥**

नैतदब्राह्मणो विवक्तुमर्हति .... .... न शूद्रस्याधिकारः ॥३७॥ (३३९)

तदभावनिर्धारणे च प्रवृत्तेः। [2]स्पष्टम् ॥ ३७ ॥

**श्रवणाध्ययनार्थप्रतिषेधात् ॥ १-३-३८ ॥**

शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि ... ... न संभवन्ति। अतस्तान्यपि प्रतिषिद्धान्येव ॥ ३८ ॥ (३३९)

श्रवणाध्ययनार्थप्रतिषेधात्। 'बहुच् पुरस्तात् तु' इति बहुच् प्रत्ययः, तस्य पूर्वनिपातश्च। अध्ययनादिनिषेधोऽर्थसिद्धश्च इत्याह — अनुपशृण्वतः इति ॥ ३८ ॥

---

1. वक्ष्यमाणं च दृश्यत इति वक्ष्यत इत्यर्थः- अ.
2. स्फुटम्-अ.

## स्मृतेश्च ॥ १-३-३९ ॥

**स्मर्यते च श्रवणादिनिषेधः ... ... अतः शूद्रस्यानधिकार इति सिद्धम् ॥** (३३९)

**स्मृतेश्च ।** लिङ्गविरोधिलिङ्गाभावे रूढिप्राबल्यम्, [1] न तु सद्भावेऽपीति राद्धान्तयुक्तिः ॥

**ये तु निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः ... ... तस्य यथोक्तया नीत्या शूद्रादेरनधिकार उपपद्यते ॥ ३९ ॥** (३४०-३४२)

[2] अत्र परेषामनवकाशत्वं दर्शयति — **ये तु** इति । अनुरुप-तन्त्रत्वे हेतुमाह — **सत्याम्** इति । [3] उत्पन्नमप्यनिवर्तकमित्येतदनूद्य दूषयति— **न च वेदवाक्य** इति । **येन केनापि** इति सपक्षोक्तिः । **पौरुषेयादपि** इति । पक्षविषयनिवृत्तेर्न्याय्यत्वादित्यर्थः । **यथा** इति सपक्षविवरणम् । **तद्वत्** इति पक्षव्याप्तिः । **वेदशिरसि** इति । 'दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः । वर्तमानः श्रुतेर्मूर्ध्नि नैव स्यात् वेदकिङ्करः ॥' इति हि तद्ग्रन्थः ॥

**निदिध्यासनं हि** इति । अदृष्टद्वारकत्वे निवर्त्यसत्यत्वमिति [4] भावः । **नैसर्गिकः** — अनादिरित्यर्थः । यज्ञादिसापेक्षत्वात् निवर्तकधीर्न शूद्रस्य जायत इत्यत्राह — **वेदानुवचन** इति । **जातायाम्** प्राग्जन्मकर्मभिरिति भावः । **सुशोभनः** ईशेशितव्यादिभेदबुद्धयहेतुत्वादिति भावः । **नैसर्गिकः**— अनादिरित्यर्थः । **न च** इति । असुखव्यावृत्तिर्हि आनन्दत्वम्; तत्

---

1. न तत्सद्भावेऽपि–ग. 2. अत्र परेषामनवकाश–ग.

3. उत्पन्नमप्यनिवर्तकमित्येतदर्थं दूषयति–अ.

4. भावः । यज्ञादिसापेक्षत्वात्–अ.

इतरन्यावृत्तिसाधकयुक्त्यैव सिद्धमिति भावः । स्वपक्षे वैषम्यमाह — यस्य तु इति ॥ ३९ ॥

इति अपशूद्राधिकरणम्-९

---

## प्रमिताधिकरण (६) शेषः

**तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य ...**

## कम्पनात् ॥ १-३-४० ॥

**'अङ्गुष्ठमात्रः पुरुषः .... .... परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः ॥ ४० ॥** (३४५)

**तदेवम्** इति । 'तदुपरि' इति **प्रसक्तं**; 'मध्वादि' इति **अनुप्रसक्तम्** । प्रसङ्गात् देवताभिः उपास्यत्वलक्षणं परत्वं दर्शितम । **उत्तम्भनम्** — नियमनस्य सार्वत्रिकत्वज्ञापनादिति भावः ॥

**कम्पनात्** । **अनयोः** इति । 'प्राण एजति' इति वाक्यविषयाधिकरणान्तरत्वमयुक्तम, विषयभूतवाक्यस्य परविषयत्वेनोपपादितवाक्यद्वयमध्यगतत्वात् प्रतिज्ञायभावाच्चेति भावः ॥ ४० ॥

**इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः —**

## ज्योतिर्दर्शनात् ॥ १-३-४१ ॥

**तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये ... ... ज्योतिर्दीप्यते' इत्यादिषु । अतोऽङ्गुष्ठप्रमितः परं ब्रह्म ॥ ४१ ॥** (३४६)

**ज्योतिर्दर्शनात्** । अधिकरणैक्यं ज्ञापयति — **तयोरेव** इति । शब्दतोऽर्थतश्च प्रत्यभिज्ञानायाह— **अयमेव** इति । **परञ्ज्योतिष्ट्वं च** इति ।

दहराधिकरणे परविषयत्वं दर्शितमिति नाधिकरणान्तरविषयत्वं युक्तमिति भावः ॥ ४१ ॥

इति प्रमिताधिकरणशेषः—६

---

## १०. अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १–३–४२ ॥

**छान्दोग्ये श्रूयते 'आकाशो ह वै ... ... आकाशशब्दश्च प्रत्यगात्मनि न क्वचित् दृष्टचरः । अतोऽत्र आकाशः परं ब्रह्म ॥**
(३४७-३४९)

आकाशोऽर्थान्तरत्वादिव्यपदेशात् । दहरानन्तरम् अल्पश्रुतिप्रसङ्गेनाङ्गुष्ठप्रमितस्य परत्वमुक्तम् । अथ पूर्वप्रकृतदहरविद्योपसंहारस्थस्य 'आकाशो ह वै' इत्यादेः जीवपरत्वशङ्कया सङ्गतिः । मुक्तस्यानन्तरप्रकृतत्वात् संशयस्य तद्विषयत्वम् । पूर्वमविभः इति । निर्वहिता इत्यस्य अवयवार्थोऽभिप्रेतः ॥

राद्धान्ते— अर्थान्तरत्वव्यपदेशः भेदकधर्मोक्तिः । यद्यपि इति । प्रथमानिर्देशस्वारस्यभङ्गः अर्थवशादिति भावः । परमप्रकृतप्रत्यभिज्ञामाह — किं च इति । व्यवधायकत्वमाशङ्क्याह — प्रजापति इति ॥ ४२ ॥

**अथ स्यात्— प्रत्यगात्मनोऽर्थान्तरभूतम् ....**

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १–३–४३ ॥

**व्यपदेशात् इति वर्तते ..... .... न च क्षेत्रज्ञान्तरेण, तस्यापि सर्वज्ञत्वासंभवात् ॥ ४३ ॥** (३४९)

अनन्तरसूत्रावतारायाह — **अथ स्यात्** इति। अन्ययोगो हि त्रिपादीव्यवच्छेद्यः। तथाऽपि परस्यात्मनोऽसिद्धिर्गत्यभावात् परेणोच्यत इति शङ्कितः। तच्च इतः प्राक् ऐक्यवाचां सूत्रकारेण अकृतनिर्वाहत्वात्॥

**सुषुप्त्युत्क्रान्त्योर्भेदेन**। देहपरिष्वङ्गव्युदासाय **विज्ञानमय** इत्याद्युक्तम्॥ ४३॥

**इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह —**

## पत्यादिशब्देभ्यः॥ १-३-४४॥

**अयं परिष्वञ्जकः परमात्मा .... ... द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम्॥ ४४॥** (३४९-३५०)

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् —१०.

### इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य तृतीयः पादः॥

मुक्तेनान्वारोहो व्युदस्यते। **पत्यादिशब्देभ्यः**। पूर्वपक्षयुक्तिं परिहरति —**ऐक्योपदेशस्तु** इति। **तत एव** — विशिष्टैक्यात् कारणैक्याच्च इत्यर्थः। **अनवद्यम्** इति पादार्थविषयमुक्तम्॥ ४४॥

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् — १०.

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन [1] श्रीमद्वरदचार्यपादसेवासमधिगत-
भगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन
श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रदीपिकायां
[2] प्रथमस्याध्यायस्य तृतीयः पादः॥

1. श्रीमद्वरदराजपादसेवा-अ. 2. प्रथमाध्यायस्य-अ.

## १. आनुमानिकाधिकरणम् ॥

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १-४-१ ॥

उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं ... ... एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत् ॥ (३५३-३५४)

आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥

पादसङ्गतिः प्रागुक्ता तत्तच्छब्दो लिङ्गिपर इति । तृतीयस्यान्त्ये अधिकरणे [1]उक्तं जीववैलक्षण्यमयुक्तम्; ततः परस्य निषेधादित्यवान्तरसङ्गतिः । उक्तम् इत्यादिना इह विषायर्थोक्तिः सूत्रानुरोधात् । आनुमानिकमपि इति [2]अन्ययोगव्यवच्छेदपरत्वं हि दर्शितम् । श्रीभाष्येऽपि ब्रह्मैककारणत्वस्थेम्ने इति एक-स्थेमशब्दाभ्याम् तत् सूचितम् । तत्तच्छन्दो लिङ्गिपर इति प्रधानपुरुषादिशब्देन व्यञ्जितम् । उच्यते, उत न इति संशयकरणम् अव्यक्तशब्दस्य प्रकृत्यवाचकत्वस्य सिद्धान्त्यभिमतत्वात् । अन्यथा 'किं ब्रह्मात्मकम् उत न' इति संशयितव्यम् । शङ्काया अनुत्सूत्रत्वमाह— तदिदम् इति ॥

### सिद्धान्तः

अत्रोत्तरम्—नेति । नाव्यक्तशब्देनाब्रह्मात्मकं ... ... अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति ॥ (३५४-३५५)

---

1. उक्तजीव-क. 2. अन्ययोगपरत्वं हि-क.

रूप्यत इति **रूपकम्** — दृष्टान्तः । **रूपकत्वेन विन्यस्तम्** — कल्पितमित्यर्थः । कानि कथं रूपितानि इत्यत्राह — **आत्म** इति । किं रूपकवाक्यम्; रूपितानामिहोक्तिरिति कथं ज्ञायते; सा च किमर्था; तत्र अव्यक्तशब्दस्य [1] शरीरपरत्वं कथमित्यत्राह — **एतदुक्तम्** इति । **सर्वस्य** इति । सम्यगध्यवसायस्यापि इत्यर्थः । शरीरस्य वशीकार्यत्वं सात्त्विकाहारपोष्यत्वम् । उपासनोपकरणकोटिनिवेशः परस्य कथमित्यत्राह — **स खलु** इति । **'पुरुषान्न परम्' 'सा काष्ठा'** इत्यन्ययोगव्यवच्छित्तिः । **अव्यक्तशब्दस्य** शरीरपरत्वं परिशेषादित्याह — **तदेवम्** इति । **प्रसङ्ग एव** — प्रधानपरत्वोपगमेन ब्रह्मात्मकत्वमन्यत्रोक्तम् । इह तु न [2] प्रधानवाचित्वमेव इति भावः ॥

**न चात्र तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा ... ... एवंभूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ॥ १ ॥**　　( ३५५-३५६ )

तन्त्रप्रत्यभिज्ञां दूषयति — **न च** इति । **ग्रहणम्** इत्यन्तम् **एतदुक्तम्** इति पूर्वेणान्वितम् । **दर्शयति च** इति सूत्रखण्डः । **तदेव** — वशीकार्यत्वे परत्वमेव । **छान्दसो दीर्घ** इति । [3] अन्यथा 'वाङ्मनसे' इति वक्तव्यम् । न तु [4] **वाङ्मनसी** इति । अतः छान्दसत्वे तुल्येऽपि प्रकरणानुगुण्यमधिकमिति भावः । आत्मनः परब्रह्मणि नियमनं तत्प्रवणीकरणम् । **व्यत्ययेन तत्** इत्यत्र **तत्** इति व्याख्येयं पदम् । [5] 'सुप्तिङुपग्रह' इत्यादेरर्थोऽभिप्रेतः ॥ १ ॥

**अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम्? तत्राह —**

## सूक्ष्मं तु तदर्हत्वात् ॥ १-४-२ ॥

---

1. शरीरत्वं-क.　　2. प्रधानवाचिकत्वमेव-क.
3. अन्यथाऽपि-अ.　　4. वाङ्मनसि त्विति । इतरच्छान्दसत्वे-अ.
5. सुप्तिङुपग्रहेत्यादेः-अ.

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं ... ... रथवत् पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् ॥ २ ॥ (३५६-३५७)

अनन्तरसूत्रशङ्कामाह — अव्यक्त इति । सूक्ष्मं तु तदर्हत्वात् । कार्ये [1]कारणोपचार इत्यर्थः । विपरीतं कस्मान्न इत्यत्राह — तदर्हत्वात् इति । अर्थविरोधादित्यर्थः ॥ २ ॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते ...

## तदधीनत्वादर्थवत् ॥ १-४-३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात् ... ... परमात्मा च सर्वेषामाधारः परमेश्वरः' इति च ॥ ३ ॥ (३५७-३५८)

अनन्तरसूत्रशङ्कामाह — यदि इति । तदधीनत्वादर्थवत् । प्रधानोपगमानुपगमचोद्यमर्थवत्त्वोक्त्या कथं परिहृतमित्यत्राह — एतदुक्तम् इति । स्वरूपस्थिति इति । कार्यकरत्वस्य सत्तास्थितिसापेक्षत्वात् तस्य तादधीन्ये कथिते तयोस्तादधीन्यमपि सिद्धमिति भावः । महिमवादश्रुतिः – 'यस्य पृथिवी शरीरम्' इत्यादिः ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ १-४-४ ॥

यदि तन्त्रसिद्धमिह अव्यक्तम् ... ... अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥ (३५८)

ज्ञेयत्वावचनाच्च । स्पष्टम् ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १-४-५ ॥

---

1. कारणोपचारात्–क.

'अशब्दमस्पर्शमरूपमव्ययम् ··· ··· पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥ ५ ॥ (३५८)

वदतीति चेन्न प्राज्ञो हि प्रकरणात् । स्पष्टम् ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १-४-६ ॥

अस्मिन् प्रकरणे हि उपायोपेयोपेतॄणां ··· ··· तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥ ६ ॥ (३५९-३६०)

प्राज्ञपरत्वं न प्रधानपरत्वविरोधि ; प्राज्ञिकपरत्वाभावादित्यत्राह — **त्रयाणामेव चैवमुपन्यासः प्रश्नश्च** । **एवमुपन्यासः** इति व्याख्येयम् । तत्र एवंपदं व्याचष्टे — **ज्ञेयत्वेन** इति । **मोक्षोपायभूताम्** इति ।[1] मोक्षोपायत्वमङ्गिद्वारा । **येयम्** इति त्रयाणां प्रश्नः, प्रतिवचनप्रकारात् । **धर्मः** — उपायः । **अधर्मः** — धर्मादन्य उपेयः । **कृताकृतम्** — वर्तमानम् । **तपांसि** इति — ज्ञानप्रधाना ब्रह्मगा इति च उपरिभागाः । 'यस्य ज्ञानमयं तपः', 'श्रद्धा तप इत्युपासते' इत्यादिषु तपःशब्दस्य ज्ञानपरतया ब्रह्मपरतया च प्रयोगदर्शनात् । **पदम्** — प्राप्यम् ॥ ६ ॥

## महद्वच्च ॥ १-४-७ ॥

यथा 'बुद्धेरात्मा महान् परः' इत्यत्र ··· ··· न कापिल-तन्त्रसिद्धं गृह्यत इति स्थितम् ॥ ७ ॥ (३६०)

**महद्वच्च** । स्पष्टम् ॥ ७ ॥

इति आनुमानिकाधिकरणम्—१

—×—

1. मोक्षोपायभूतत्वम्–अ.

## २. चमसाधिकरणम् ॥

### चमसवदविशेषात् ॥ १-४-८ ॥

**अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते ... ... स्वातन्त्र्येण सरूपाणां बह्वीनां स्रष्टृत्वश्रवणाच्च इति ॥** (३६४-३६६)

**चमसवदविशेषात्** । पूर्वं कारणशब्दस्य कार्यशरीरपरत्वमुक्तम् । इह तु कार्यवाचि[1]शब्दाश्रवणात् कारणं प्रधानमेवोच्यत इति शङ्कया सङ्गतिः । [2] परैः किं प्रधानपरमुत तेजोबन्नपरमिति विचारः कृतः । तत्र स्ववाक्यस्वारस्याभावं वक्ष्यन् श्रुत्यन्तरास्वारस्यज्ञापनाय प्रधानविषयं वाक्यजातमुदाहर्तुमाह— **अत्रापि** इति ॥

**अध्यासिता**— अधिष्ठिता । **तन्यते**— समष्टिरूपेण प्रेर्यते व्यष्टिसृष्ट्यर्थम् । अथ तदन्तर्यामिपरवाक्यजातमुदाहर्तुमाह— **यदात्मकाः** इति । **अपरे च** इति । इह च वाक्यान्तरैकार्थ्यात् ब्रह्मात्मकत्वसिद्धिरिति भावः । **तत्त्वभावात्**— तत्त्वाविर्भावात् । **प्रकृत्यादयः** । **आदि** शब्देन महदादिः । विषयमाह— **श्वेत** इति । **स्वातन्त्र्येण** इति । **सृजमानाम्** इति कर्तरि शानच् । स्वतन्त्रः कर्ता [3] इति भावः ॥

**एवं प्राप्तेऽभिधीयते—चमसवदविशेषात् । ... ... अतोऽनेन मन्त्रेण नाब्रह्मात्मिका अजा अभिधीयते ॥ ८ ॥** (३६६)

राद्धान्ते प्रतिज्ञाऽध्याहर्तव्या । **चमसः**— चमनसाधनम् । **अजात्वमात्रश्रवणं** ब्रह्मात्मकस्य प्रामाणिकत्वे तदविरोधीत्यर्थः । **न चास्याः** इति । निरुपपदत्वान्न स्वातन्त्र्येण सृष्टित्वप्रतीतिरित्यर्थः ॥ ८ ॥

---

1. शब्दात् श्रवणात्—अ. 2. परैः प्रधानम्—अ.
3. इति च भावः—क.

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १-४-९ ॥**

तु शब्दोऽवधारणार्थः ... ... तस्या एव प्रतीतेर्नास्मिन् मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥ ९ ॥ (३६६-३६७)

अनन्तरसूत्रमवतारयति — **ब्रह्मात्मक** इति । **ज्योतिरुपक्रमा तु तथा ह्यधीयत एके** । नात्र मन्त्रे उत्पत्तिप्रतीतिरित्यत्राह— **सर्वस्य** इति । प्रयाजादीनामङ्गत्ववदिति भावः । **अन्येन** इति न मुक्तकीर्तनम् सृष्टिप्रकरणविच्छेदात्; किं तु तद्विशेषणत्वेन । 'यस्माज्जाता न परा नैव किंचनास' इति उत्तरत्र सृष्ट्यनुवृत्तेरिति भावः । इयं च कृत्वाचिन्ता **इहापि** इत्यादिना स्वशाखायामेव [1] ब्रह्मात्मकत्वख्यापनात् ॥ ९ ॥

कथं तर्हि ज्योतिरुपक्रमाया ... ...

**कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १-४-१० ॥**

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः । ... ... संबन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥ १० ॥ (३६७-३६९)

अनन्तरसूत्रशङ्कामाह — **कथं तर्हि** इति । **कल्पनोपदेशाच्च मध्वादिवदविरोधः** । चः त्वर्थः । **ज्योतिःकल्पन** शब्दौ वेदनिर्देशानुसारात् 'संप्रसादात्' इतिवत् । सूत्रखण्डं व्याचष्टे – **मधु** इति । उदयास्तमयमधुत्वक्लृप्तितदभावयोरिव अवस्थाभेदादविरोध इत्यर्थः ॥

सूत्रद्वयस्य परोक्तार्थं दूषयितुं प्रथमस्यैतदुक्तमर्थम् **अन्ये तु** इत्यादिनानूदितं विकल्पयति — **किम्** इति । अजात्वैकत्वसिद्ध्यर्थं [2] मध्यमशिर

1. ब्रह्मात्मकत्वज्ञापनात्–क. 2. प्रथमशिर उक्तिः–क.

उक्तिः। **प्रत्येकम्** इति न समुदायैकत्वम्। समुदायत्रिकमेवेत्यर्थः। द्वितीयं विकल्पयति— **द्वितीय** इति। किं तेजोबन्नरूपा अवस्था अजाशब्दोक्ताः, उत स्वरूपमिति विकल्पः। **द्वितीयेऽपि** इति श्रुत्यस्वारस्यमुक्तम्। सूत्रास्वारस्यमाह— **तेजोऽबन्न** इति। **ज्योतिरुपक्रम** शब्दः तेजोबन्नवाचीति हि परैः व्याख्यातम्। प्राथमिकविकल्पेषु तृतीयं दूषयति— **तृतीयेऽपि** इति॥

अथ तृतीयसूत्रस्य परोक्तार्थमनूद्य व्युदस्यति —**यत् पुनः** इत्यादिना। मुख्यार्थे संभवति गौणस्वीकारायोगात् प्रयोजनाभावात् अर्थविरोधात् 'आत्मानं रथिनम्' इतिवत् रूप्यरूपकवाचिशब्दाभावात् 'गौरनाद्यन्तवती' इतिवत् उचितविशेषणाभावात् प्रयोजनसाधनत्वादिमात्रविवक्षायामस्वारस्यात् तस्य च [1]पदान्तरस्वारस्यार्थाभावाच्च छागत्वक्लृप्तिरयुक्तेत्यर्थः। अस्मदुक्तार्थस्तु वैदिकनिर्देशानुसारिणां स्वरस एव॥ १०॥

इति चमसाधिकरणम्-२

---

## ३. संख्योपसंग्रहाधिकरणम्॥

## न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च॥ १-४-११॥

**वाजसनेयिनः समामनन्ति — 'यस्मिन् पञ्च पञ्चजनाः ..... पञ्चसंख्याका विशेष्यन्ते, पञ्च पञ्चजना इति, सप्त सप्तर्षय इतिवत्॥ ११॥** (३७२-३७३)

**न संख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च।** [2]प्रकृतेर्ब्रह्मात्मकत्वं साधितम्। तदत्रायुक्तम्। परमात्मपरत्वे संख्याधिक्यादिति शङ्क्या

1. पदान्तरस्वारस्यार्थत्वाभावाच्च-क. 2. प्रकृते ब्रह्मात्मकत्वं-ख.

सङ्गतिः । पञ्चशब्दद्वयात् दशसंख्या स्यात् । समसंख्यापरशब्दयोः कथं विशेषणविशेष्यभावः, कथं च [1] कापिलतन्त्रार्थसिद्धिरित्यत आह—एतदुक्तम् इति । आत्माकाशाभ्यां सप्तविंशतिप्रतीतिः सत्त्वरजस्तमसां [2] पृथग्द्रव्यत्वाभ्युपगमात् युक्तेति भावः ॥

राद्धान्ते नानात्वं — पृथक्त्वम् अन्यत्वं विवक्षितं, न तु बहुत्वम् । 'विना ना हिरुक् पृथक्' इति पर्यायपाठात् । कालस्य वस्त्वन्तरविशेषणत्वे [3] षड्विंशत्वम्; [4] वस्त्वन्तरविवक्षायां सप्तविंशत्वम् । पञ्चसु इति । [5] एकोपाधिगृहीतत्वं हि समूहत्वम् । तत्रेत्यर्थः । शाब्ददूषणमुक्तम् अन्यथा इति । सत्त्वादीनां द्रव्यत्वमसिद्धम्, गुणत्वात् ॥ ११ ॥

के पुनस्ते पञ्चजना इत्यत आह—

## प्राणादयो वाक्यशेषात् ॥ १-४-१२ ॥

'प्राणस्य प्राणमुत चक्षुषश्चक्षुः ... ... प्राणादय एव पञ्च पञ्चजनाः इति विज्ञायन्ते ॥ १२ ॥ (३७४)

उत्तरसूत्रशङ्कामाह — के पुनः इति । प्राणादयो वाक्यशेषात् । स्पष्टम् ॥ १२ ॥

अथ स्यात् — काण्वानां माध्यन्दिनानां च ...

## ज्योतिषैकेषामसत्यन्ने ॥ १-४-१३ ॥

1. कापिलतन्त्रसिद्धि-अ. 2. द्रव्यत्वोपगमात्-अ.
3. षड्विंशकत्वं ... ... सप्तविंशकत्वं-क.
4. वस्त्वन्तरत्वविवक्षायां-अ.
5. एकोपाधिगृहीतत्वं विवक्षितं हि समूहे; न तु बहुत्वम् । तत्रेत्यर्थः-अ.

**एकेषां काण्वानां पाठे ... ... न कापिलतन्त्रसिद्धतत्त्व-प्रतीतिरिति स्थितम् ॥ १३ ॥** (३७४-३७५)

अनन्तरसूत्रशङ्कामाह— **अथ स्यात्** इति । **ज्योतिषैकेषामसत्यन्ने** । कथं वाक्यशेषे चतुष्टयोक्तिः इत्यत्राह— **तेषाम्** इति । **ज्योतिषा** इत्यस्य कोऽर्थः ? कथं चेन्द्रियावगम इत्यत्राह — **एतदुक्तम्** इति । **ज्योतिषा** इति शब्दस्वरूपनिर्देशः । **ज्योतिःशब्देन प्रदर्शनायोगात्** । अयं सिद्धान्तेऽपि तुल्यः । इन्द्रियप्रकरणं [1] पदत्रयस्वारस्यप्राबल्यं च ज्ञापयितुं चक्षुरादीनां स्वशब्देन व्याख्यानम् । पञ्चत्वं निर्देशापेक्षया । ज्योतिष्ट्वपञ्चत्वमनोयोगपरिशेषैः तन्त्रोपादाननिश्चयः । फलितमाह — **तदेवम्** इति । [2] द्विधा परिहारोक्तिप्रयोजनं वदन् निगमयति— **अतः** इति ॥ १३ ॥

इति संख्योपसंग्रहाधिकरणम्–३

---

## ४. कारणत्वाधिकरणम् ॥

# कारणत्वेन चाकाशादिषु यथा-व्यपदिष्टोक्तेः ॥ १-४-१४ ॥

**पुनः प्रधानकारणवादी प्रत्यवतिष्ठते ... ... अतो ब्रह्मैक-कारणं जगदिति निश्चीयते ॥ १४ ॥** (३७८)

प्रधानकारणत्वं निरस्तम् । तदयुक्तमित्युत्थानात् सङ्गतिः । **कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** । **एकस्मात्** —एकरूपात् । **ब्रह्मणि इव** इति वैधर्म्यदृष्टान्तः ॥

---

1. पदद्वयस्वारस्यप्राबल्यं–अ.
2. द्विधा परिहार. । प्रयोजनं–क.

राद्धान्ते — स्वर्थेन चशब्देन फलितां प्रतिज्ञामाह — सर्वज्ञात् इति । यथा व्यपदिष्टम् इति श्रुतौ व्यपदिष्टत्वव्यावृत्त्यर्थमाह — जन्मादि इति । आकाशादिषु — आकाशादीनाम् ॥ १४ ॥

ननु — 'असद्वा इदमग्र आसीत्' ... ...

## समाकर्षात् ॥ १-४-१५ ॥

'असद्वा इदमग्र आसीत्' इत्यत्रापि ... ... अतो ब्रह्मैककारणं जगदिति स्थितम् ॥ १५ ॥ (३७९-३८०)

समाकर्षात् । 'ब्रह्मणा विपश्चिता' इत्यादिवाक्यान्यभिप्रेत्य विपश्चित्त्वादिकमुक्तम् । स्पष्टम् । प्रधानस्यापि कार्यानुप्रवेशो युक्त इत्यत्राह — अन्तः प्रविष्ट इति । अन्येन व्याकृतत्वशङ्काव्यावृत्त्यर्थं व्याचष्टे — तदेव अविभक्त इति ॥ १५ ॥

इति कारणत्वाधिकरणम् — ४

---

## ५. जगद्वाचित्वाधिकरणम् ॥

## जगद्वाचित्वात् ॥ १-४-१६ ॥

पुनरपि सांख्यः प्रत्यवतिष्ठते — यद्यपि .... ... चेतनधर्मा अस्मिन्नेवोपपद्यन्ते इत्येतदधिष्ठितं प्रधानमेव जगत्कारणम् ॥ (३८१-३८३)

जगद्वाचित्वात् । सङ्गतिमाह — यद्यपि इति । न अर्थान्तरम् — न ईश्वर इत्यर्थः । पूर्वाधिकरण ईक्षत्यधिकरणाक्षेपात् इह आनन्दमयाधिकरणाक्षेपः फलितः । तदुत्पत्तिहेतुकर्मवत्त्वं हि कर्तृत्वम् । अतः पुरुषाणां

**कर्ता** इत्युक्ते **यस्य वैतत् कर्म** इत्युक्तिवैयर्थ्यं स्यात् । बद्धस्वरूपं च नोपदेश्यमित्यत्राह — **तदयमर्थ** इति । कृतिमत्त्वं कर्तृत्वम् । शुद्धस्वरूपमविदितम् । [1]कर्मसंबन्धात्यन्तलक्षणमित्यर्थः । **एतस्मादात्मनः प्राणाः** इति । **प्राणशब्दः** पञ्चवृत्तिप्राणपरः पूर्वपक्षे । **अस्मिन् प्राणे** इति । **प्राणशब्दस्य** लाक्षणिकत्वव्युदासाय योजनान्तरमाह — **अथवा** इति । परमात्मपरत्वमाशंक्याह — **प्राणशब्दस्य** इति ॥

## सिद्धान्तः

**इति प्राप्ते प्रचक्ष्महे — जगद्वाचित्वात् । ... प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥ १६ ॥** (३८३-३८४)

राद्धान्ते — स्वपक्षे कर्त्रादिशब्दस्वारस्योपपादकविशेषणानि वदन् प्रतिजानीते — **अत्र** इत्यादिना । अविदितत्वं कर्मसंबन्धरहितस्वरूपस्य भवतीत्यत्राह — **पुरुषस्य** इति । [2]**कर्मसंबन्ध** वाचिशब्दस्य तद्रहितस्वरूपपरत्वे लक्षणेत्यर्थः । जगद्वाचित्वे युक्त्यन्तरमाह — **यस्य** इति । पृथङ्निर्देशप्रयोजनमाह — **य एतेषाम्** इति । **जगदुत्पत्तेः** इति । [3]कुलालस्य हि घटकर्तृत्वं न घटविनियोगादृष्टवतः इति भावः । **प्रसिद्धम्** इति । यच्छब्दनिर्देशात् 'यतो वा [4]इमानि' इतिवत् प्रसिद्धं कारणमनूद्य वेदितव्यत्वविधिरित्यर्थः ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम् ॥ १-४-१७ ॥

**अथ यदुक्तम् — जीवलिङ्गात् मुख्यप्राणसङ्कीर्तनाच्च ... ... प्राणशरीरकब्रह्मोपासनार्थं प्राणसङ्कीर्तनं लिङ्गं युज्यते ॥ १७ ॥**

---

1. कर्मसंबन्धोत्कलक्षणम्—ख. 2. कर्मसंबन्धि- क.
3. कुलालस्य घटकर्तृत्वं—क. 4. इमानि भूतानि इतिवत्—क.

अथ [1] उपरितनवाक्यगतहेतुमनूद्य प्रतिवक्ति — **जीवमुख्यप्राणलिङ्गान्नेति चेत् तद्व्याख्यातम्** । [2] प्रतर्दनविद्यायां कथं परिहृतं, तत्रातिदेष्टव्यांशः कः, स च कथं घटत इत्यत्राह — **एतदुक्तम्** इति । **वर्णनीयानि** इत्यन्तेन अतिदेष्टव्यांश उक्तः । न तूपासनार्थत्वमप्यतिदेष्टव्यमित्यर्थः । अत एव हि जीवलिङ्गस्य तदर्थत्वानुक्तिः ॥ १७ ॥

जीवलिङ्गानां पुनः कथं ब्रह्मपरत्वमित्यत्राह —

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १-४-१८ ॥**

**तु शब्दो जीवसङ्कीर्तनेन वाक्यस्य ... ... कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम् ॥ १८ ॥** (३८५-३८७)

उत्तरसूत्रस्य शङ्कामाह — **जीवलिङ्गानाम्** इति । **अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके** ॥

**तुशब्द** इत्यादि । न तु मतान्तरेण निर्वाहान्तरपरः । अपि तु पूर्वपक्षात् व्यावृत्त्यर्थः इत्यर्थः । **क्वैषः क्व वा** इति प्रश्नद्वयं स्वप्नसुषुप्तिस्थानविषयम् । **प्राणाः** — जीवाः । **नाडीनाम्** इति । 'यदा सुप्तः' इत्यस्मात् पूर्वभावितया स्वप्नपरे पूर्ववाक्ये नाडीवचनादिति भावः । **विज्ञानेन विज्ञानमादाय** — मनसा सह ज्ञानमादाय उपरतव्यापारं मनः प्रतीन्द्रियमित्यर्थः । परमात्मगुणतत्सामानाधिकरण्याभावात् जीवश्रुतेः उपासनार्थत्वानुक्तिः । जीवलिङ्गनिर्वाहमुपसंहरति — **अतः** इति । वेदान्तानां प्रकृतिपुरुषपरत्वासिद्धिमुपसंहरति— **तस्मात्** इति ॥ १८ ॥

इति जगद्वाचित्वाधिकरणम् -५

---

1. उपरितनवाक्यहेतुं–अ.
2. प्रातर्दननयः कः तत्रेहातिदेष्टव्यांशः–अ.

## ६. वाक्यान्वयाधिकरणम् ॥

### वाक्यान्वयात् ॥ १-४-१९ ॥

**अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं ··· ··· तन्त्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानम्, नेश्वरः इति ॥** (३८९-३९०)

**वाक्यान्वयात्।** कर्मवश्यवाचिपदेन तद्रहितस्वरूपोक्तिः लाक्षणिकीति जीवपरत्वं निरस्तम्। अत्र तु बद्धमुक्तसाधारणात्मशब्दश्रवणात् [1]मुक्तलिङ्गश्रवणाच्च तत्परत्वं युक्तमिति शङ्कया सङ्गतिः। पूर्वमेवात्र न कर्मसंबन्धोऽन्यथा नेयः भोक्तृत्वश्रवणादिति वा शङ्कया सङ्गतिः। **विज्ञातारम्** इति जीवलिङ्गानुगृहीतत्वात् विज्ञातृशब्दो जीवपर इति भावः। स्पष्टम् ॥

### सिद्धान्तः

**एवं प्राप्ते प्रचक्ष्महे — वाक्यान्वयात् इति। सर्वेश्वर एव ··· ··· गुणाः परमात्मन एव संभवन्ति। अतः स एवात्र प्रतिपाद्यते ॥** (३९०-३९१)

राद्धान्ते — **समञ्जसः** — स्वारसिकः। स्वारस्यं च सजातीयश्रुत्यन्तरैकार्थ्यमित्यभिप्रायेणाह — **तमेव** इति। प्रजापतिवाक्याद्यैकार्थ्यात् स्वारस्यमित्यत्राह — **परमपुरुष** इति। प्रधानार्थपरवाक्यैकार्थ्यं स्वारस्यमित्यर्थः। उपक्रमस्वारस्यं दर्शितम्; उपरितनानां कारणत्वप्रतिज्ञानैक्योपदेशपरवाक्यानां सामञ्जस्यं दर्शयति — **तथा** इत्यादि। **'एतत्' 'अयम्'** इति श्रुतिस्थेदंशब्दस्थाने भाष्ये **एतत्** शब्दः। जीवस्यैक्योपदेशात् अनुपपत्तिं दर्शयति — **न हि इदंशब्दवाच्यम्** इत्यादिना। स्थूलसूक्ष्म-

---

1. मुक्तिलिङ्ग-अ.

चिदचिच्छरीरत्वाभावान्न कार्येण जगदैक्यसंभव इत्यर्थः । अत एव — सर्वस्य परमात्मकत्वादेव ॥

**यत्तूक्तं पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो ... ... स परमात्मैव द्रष्टव्य इत्युपदिश्यते ॥** (३९१-३९२)

**यत् तु** इत्यादि । कथमनन्वयः, कथं वा तस्यानिष्टत्वमित्यत्राह — **आत्मा वा** इति । पूर्ववाक्यस्यात्मनो द्रष्टव्यत्वोपयोगित्वं **स्वरसतः प्रतीयते** इत्यर्थः । जीवपरत्वेऽनन्वयमुपपादयति — **आत्मन** इत्यादिना । श्रुतौ **प्रिय** शब्दो भोगार्हत्वपरः । **कामाय** — प्रीत्यै । **न पत्यादिशेषतया पत्यादीनां प्रियत्वम्** इति । पत्यादीनां भोगार्हत्वं न पत्यादिप्रीतिहेतुतया, किन्तु स्वप्रीतिहेतुतया, इत्यर्थः । **वाक्यभेदः** — महावाक्यभेदः । **सोऽयम्** इत्यादि । **स्वयं निरतिशयानन्दः सन्** इति । स्वाश्रितानन्दावहस्य स्वयं निरतिशयानन्दत्वमर्थसिद्धमिति भावः । श्रुत्यन्तरेषु तथा स्पष्टत्वाच्च । **उपदिश्यते** इत्यन्तेन तात्पर्यार्थ उक्तः ॥

**तदयमर्थः — 'न वा अरे पत्युः कामाय पतिः प्रियो भवति' ... ... 'आत्मा वा अरे द्रष्टव्यः' इति पूर्वोक्तप्रक्रियोभयत्रात्मशब्दावेकविषयौ ॥ १९ ॥** (३९२-३९३)

[1] कथमस्य शाब्दत्वमित्यत्राह — **तदयमर्थः** इति । जीवपरत्वेऽप्यन्वयो घटते । स्वप्रीतये स्वातन्त्र्यात् पत्यादीनामुपादानं चेत् नानित्यानन्दपत्याद्यनुभवाय प्रवर्तेत, किं तु [2] नित्यानन्दस्वरूपानुभवाय प्रवर्तेत [3] इति शङ्कायां द्वितीयं निर्वाहमाह — **जीवात्मपरत्वेऽपि** इति । जीवादप्यतिशयानन्दत्वात् परमात्मप्राप्तौ प्रवर्तेत इत्यर्थ उचिततर इत्यर्थः । तर्हि

1. कथं स्याच्छब्दार्थमित्यत्राह—अ.
2. नित्यानन्दस्वस्वरूप—अ.
3. इति शङ्कया द्वितीयनिर्वाहमाह—क.

अयमेव निर्वाहः स्यादिति [1]शङ्कायामाह — अस्मिन्नु इति। परमात्मन एव अभिधानात् इति वक्ष्यमाणसूत्रप्रकारेणेत्यर्थः। समाधिभेदायोगो हेतुतया विवक्षितः। अत एव प्रथमस्य आत्मशब्दस्य [2]सद्वारकत्वं चास्वरसम्। तस्मादद्वारकब्रह्मविषयौ पूर्वोत्तरवाक्यस्थात्मशब्दौ ॥ १९ ॥

मतान्तरेणापि जीवशब्देन परमात्माभिधानोपपादनायाह–

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १-४-२० ॥**

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेः ... ... अतो जीवशब्देन परमात्माभिधानमिति ॥ २० ॥

अनन्तरसूत्रमवतारयति — मतान्तरेण इति। प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः। प्रतिज्ञोपपादककार्य[3]कारणभावकृतैक्यसिद्धेरित्यर्थः ॥ २० ॥

**उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १-४-२१ ॥**

यदुक्तं जीवस्य ब्रह्मकार्यतया ब्रह्मणैक्येन ... ... जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यते स्म ॥ २१ ॥
(३९३-३९४)

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः। [4]पूर्वाविरुद्धमतोदयायोगात् सूत्राभिप्रेतं प्राक्तनमतदूषणमाह — यदुक्तम् इत्यादिना। स्पष्टम् ॥

**अवस्थितेरिति काशकृत्स्नः ॥ १-४-२२ ॥**

यदुक्तम् — उत्क्रमिष्यतो जीवस्य ब्रह्मभावात् ... ... न पुरुषस्तदधिष्ठिना च प्रकृतिरिति स्थितम् ॥ २२ ॥ (३९४-३९७)

1. इत्याशङ्कायामाह-क 2. सद्वारकं च-क.
3. कारणभावकृतैक्यार्थसिद्धेरित्यर्थः-क.
4. पूर्वाबाधेन विरुद्धमतोदयायोगात्-क.

**अवस्थितेरिति काशकृत्स्नः।** स्पष्टम्। काशकृत्स्नमतवैषम्यमाह—**एवम्** इति। **स्वीकृतवान्** इति। 'एवं बादरायणः' इति मतान्तराकथनात् अस्य सामञ्जस्याच्च इति भावः॥

इह प्रकरणे जीववाचिपदं किम्, तेन परस्याभिधानं कथमित्यत्राह—**अयमत्र** इति। **प्रोत्साहनाय** इति। [1]स्वरूपस्य प्राप्यत्वज्ञानात् प्रवृत्तिरधिका स्यात् इत्यर्थः। **एकीकृत्य** इति। समित्येकीकारे इति भावः। **यत्र हि** इत्यादि। [2]तत् केन कम् इति अतदात्मकद्रष्टृद्रष्टव्यतत्साधननिषेधः॥

**येन इदम्** इति वाक्यं तत्प्रसादादृते तस्य **दुरवगमत्वपरम्**। **विज्ञातारम्** इति वाक्यमुक्तोपायादृते तत्प्रसादनस्य दुर्लभत्वपरम्। उपसंहरति— **अतः** इति॥ २२॥

इति वाक्यान्वयाधिकरणम्—६

## ७. प्रकृत्यधिकरणम्॥

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १-४-२३ ॥

**एवं निरीश्वरसांख्ये निरस्ते सति सेश्वरसांख्यः ... ... नोपादानम्। उपादानं तु तदधिष्ठितं प्रधानमेव इति॥ (३९९-४००)**

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्।** सङ्गतिमाह — **एवम्** इति। श्रुत्यर्थापत्तिमाह — **एवमश्रुतेऽपि** इति। श्रुतेरनुग्राहकतर्कमाह — **एवमेव** इति। यथा वैजात्येऽपि वृश्चिको गोमयं वा वृश्चिकोपादानं, तथा प्रकृतिर्वा ईश्वरो वा जगदुपादानं स्यात्, एकैकस्य कारणत्वश्रुतेरित्याह —

1. स्वस्वरूपस्य—अ. 2. तत् केन कथं—क

**कार्यनिष्पत्तिश्च** इति। श्रुतिप्रतिपन्नं कथं त्याज्यमित्यत्राह — **एवमिति**। तर्कानुगृहीतवाक्यमितरस्मात् प्रबलम्। इतरत् तु यूपादित्यैक्यवाक्यवत् इत्यर्थः॥

## सिद्धान्तः

**एवं प्राप्तेऽभिधीयते — प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् इति। ... ... 'विकारजननीमज्ञाम्' 'अजामेकाम्' इत्यादिभिरभिधीयते इति॥** (४००-४०२)

राद्धान्ते प्रधानस्वभावव्यावृत्त्यर्थमुक्तम् — **उपादानं च** इति। चार्थं वदन् वाक्यार्थमाह — **न निमित्त** इति। **विज्ञातमेव स्यात्** इत्यन्तेन हेतुगर्भिपदं विवृतम्। वैशेषिकमतेन प्रतिज्ञानुपपत्तिमाशङ्क्य परिहरन् वाक्यार्थमाह — **कारणमेव** इति॥

निमित्तान्तराशङ्कां परिहर्तुं **यत्तु** इति परोक्तमनूद्य व्युदस्यति — **तदसत्** इति। [1] उपदेशतत्कर्मत्वव्युदासाय प्रकृतिप्रत्ययौ व्याचष्टे — **प्रशिष्यतेऽनेन** इति। अन्यतरास्वारस्यसाम्येऽपि अर्थौचित्यमधिकमाह — **एतस्य** इति। शासितृत्वं ह्यसाधारणम्। अकर्त्रर्थप्रत्ययान्तत्वमाशङ्क्याह — **साधक** इति। 'विवक्षातः कारकाणि' इति न्यायादिति भावः॥

कारणवाक्येऽपि निमित्तोपादानैक्यं दर्शयति — **सदेव** इति। **प्रकृतिशब्देन** — प्रकृतिवाचकशब्देन। अन्वयव्यतिरेकाभ्यां तदात्मकत्वपरं **'सर्वं खलु' 'यत्र तु'** इति वाक्यद्वयम्। ब्रह्मव्यतिरिक्तं नास्ति चेत् विकारापुरुषार्थौ ब्रह्मणि स्यातामित्यत्राह — **एतदुक्तम्** इति। तर्हि कार्यकारणदशयोः को भेद इत्यत्राह — **कदाचित्** इति। ततः किं प्रकृतस्येत्यत्राह — **एवं सर्वदा** इति॥

---

1. उपदेशे तत्कर्म-अ.

**ननु च 'महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते' .... ... अतो ब्रह्मैव जगतो निमित्तमुपादानं च ॥ २३ ॥** (४०२-४०३)

सूक्ष्मावस्थस्याप्युत्पत्तिमुखेन चोदयति — **ननु च** इति । अव्यक्तावस्थाया अपि [1]सूक्ष्मावस्थासंभवात् । तदवस्थाचिद्विशिष्टं ब्रह्माव्यक्तकारणमिति । परिहरति — **नैष** इति । तत्र प्रमाणमाह — **यदा तमः** इति । **अत एव** — तमःशब्दवाच्याचितस्तदा सद्भावादेव । पृथिवीत्वादिवत् तमस्त्वावस्थाप्रहाणेन परमात्मद्रव्यं भवति चेत्, लयशब्दः श्रूयेत; न च श्रुतः । अतः [2]तमस्तस्मिन् स्थितमित्यर्थः । वस्तुभेदसद्भावेऽप्यनुद्भूतत्वात् 'एक'शब्दो युक्तः, यथा वह्निर्गर्भे दारुणि, यथा चान्तर्वत्न्याम् । 'इदं तमोभूतम्' इत्यनेनावस्थान्तरापत्तिरेव लयः, न तु द्रव्यविनाश इति [3]स्फुटम, 'अव्यवस्थे च सलिले' इत्यादिना च ॥

**यत्र तु** इत्यादिना परोक्तस्य सतर्कश्रुतिप्राबल्यस्य परिहार उच्यते । **मृदादेः** इति । केवलनिमित्तत्वे केवलोपादानत्वे बहुकारकादेक्षत्वे च असार्वज्ञ्यासर्वशक्तित्वासत्यसङ्कल्पत्वादिदुर्गुणभयः इत्यर्थः ॥ २३ ॥

## अभिध्योपदेशाच्च ॥ १-४-२४ ॥

**इतश्चोभयं ब्रह्मैव — 'सोऽकामयत .... ... सङ्कल्पपूर्विका हि सृष्टिरुपदिश्यते ॥ २४ ॥** (४०३)

अभिध्योपदेशाच्च । [4]स्फुटम् ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ १-४-२५ ॥

---

1. सूक्ष्मावस्थायाः संभवात्-अ. 2. तमोऽस्मिन्-क.
3. स्फुटीकृतम्-क. 4. स्पष्टम्-क.

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिः .... ब्रह्मैवोपादान-मुपकारणानि चेति परिहृतम् । अतश्चोभयं ब्रह्म ॥ २५ ॥ (४०३-४०४)

साक्षाच्चोभयाम्नानात् । प्रश्नप्रतिवचनरूपेणोक्तिफलमाह — अत हि इति ॥ २५ ॥

## आत्मकृतेः ॥ १--४--२६ ॥

'सोऽकामयत बहु स्यां प्रजायेय' इति .... स्वयमेवात्मानं तथाऽकुरुत इति निमित्तमुपादानं च ॥ २६ ॥

आत्मकृतेः । स्वस्य कर्तृत्वं विरुद्धम् । सिद्धः कर्ता साध्यं कार्यमिति एकस्य सिद्ध्यसिद्धिविरोधमाशङ्क्याकारभेदेन परिहरति — अविभक्त इति । आकारैक्यान्निमित्तोपादानैक्यमाह — स्वयमेव इति ॥

'सत्यं ज्ञानमनन्तं ब्रह्म', 'आनन्दो ब्रह्म' ... ...

## परिणामात् ॥ १-४-२७ ॥

परिणामस्वाभाव्यात्; नात्रोपदिश्यमानस्य ... .. अनादि-त्वादुपपद्यते चाप्युपलभ्यते च' इति ॥ (४०४-४०६)

अनन्तरसूत्रशङ्कामाह— सत्यं ज्ञानम् इति । परिणामात् । 'परिणामात्' इत्युक्ते तस्य [1] विरोधिहेतुत्वमेव इत्याशङ्क्याह — परिणामस्वाभाव्यात् इति । स्वभाव एव हि विरोधहेतुरित्यत्राह— नात इति । कथमित्यपेक्षायाम् उक्तं विवृणोति— एवमेव हि इति । तत्त्वक्रम-सृष्टिवत् तदुपयोगिगुणवच्च अनुक्तं सद्वारकत्वमन्यतो ग्राह्यमिति दर्शयन् प्रधानविषयश्रुतीनां परपर्यन्ततामाह— अशेष इति । स्वशरीरतया अपि

---

1. विरोधिहेतुत्वमेवाशङ्क्याह -क.

इति एकशब्दव्याख्यानम्। उक्तार्थे मानमाह— तथैव इति। आवरणत्वात् तमः अनर्थमूलत्वात् मृत्युः [1]स्वरूपैक्यव्यावृत्त्यर्थमाह—अविभाग इति॥

एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मना ... ... अतो ब्रह्म जगतो निमित्तमुपादानं च॥ २७॥ (४०६-४०८)

उदाहृतश्रुतिसिद्धमर्थमाह— [2]एवं स्वस्मात् इति। ततः किं प्रस्तुतविरोधस्य इति शङ्कायाम्, अविरोधेन पश्चात् व्याख्यातुं विरोधस्फोरकमेतत्प्रकरणस्थवाक्यमादत्ते – सत्यं ज्ञानम् इति। व्याख्येयपदानि व्याचष्टे— अत्र इति। 'तप आलोचने' इति धातुः॥

श्रुत्यन्तरानुगृहीते तत्प्रकरणवाक्यानामर्थमाह— तदयमर्थः इति। उदाहृतवाक्येषु घटकवाक्यस्यार्थमाह— तदेव इति। कथं विरोधः परिहृत इत्यत्राह — एवम् इति। [3]कार्यत्वदोषासङ्करं चाह — परमात्मनि इत्यादिना। अवाप्तकामलीलासृष्टौ मानमाह— सर्वाणि इति। पूर्वमभ्युपात्तश्रुत्यर्थमाह— अस्मात् इति। स्पष्टम्।

इदं सूत्रं मृषावादिनां विरुद्धम्। भेदाभेदपक्षेऽपि भोग्यांशेन परिणामः। अस्मन्मते तु विशेषणांशेन इति अस्वारस्यं तुल्यम्। श्रुत्यन्तरोपपत्त्यानुगुण्यं त्वधिकमिति वैषम्यम्॥ २७॥

## योनिश्च हि गीयते॥ १-४-२८॥

इतश्च जगतो निमित्तमुपादानं च ब्रह्म ... ... 'यथोर्णनाभिः सृजते गृह्णते च' इति वाक्यशेषादवगम्यते॥ २८॥ (४०८)

योनिश्च हि गीयते। स्पष्टम्॥ २८॥

इति प्रकृत्यधिकरणम्—७

1. स्वरूपैक्यपदानि व्याचष्टे-अत्र इति। व्यावृत्त्यर्थमाह-क.
2. उदाहृतश्रुतिसिद्धार्थमाह-अ. 3. कार्ये दोषासङ्करं चाह-क.

## ८. सर्वव्याख्यानाधिकरणम् ॥

### एतेन सर्वे व्याख्याता व्याख्याताः ॥ १-४-२९ ॥

**एतेन** — पादचतुष्टयोक्तन्यायकलापेन ... ... **व्याख्याताः** इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥ २९ ॥ (४१२)

इति सर्वव्याख्यानाधिकरणम्—८

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

**एतेन सर्वे व्याख्याता व्याख्याताः** । पूर्वाधिकरणशेषत्वव्युदासायाह — **पाद** इति ॥

इन्द्रादिसृष्टि हिरण्यगर्भरुद्रादीनां कारणत्वं संभवति इत्याधिकाशङ्का । तेषामपि परमात्मसृज्यत्वसंहार्यत्वश्रवणाविशेषात् अथर्वशिरःप्रभृतयः तच्छरीरकपरमात्मपराः इति परिहारः । **पदाभ्यासप्रयोजनमाह— व्याख्याताः** इति ॥ २९ ॥

इति सर्वव्याख्यानाधिकरणम्—८

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत-
श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन
श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रदीपिकायां
प्रथमस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

—×—

---

## १. स्मृत्यधिकरणम् ॥

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ २-१-१ ॥**

**प्रथमेऽध्याये प्रत्यक्षादिप्रमाणगोचरात् ... ... तदिदमाशङ्कते— स्मृत्यनवकाशदोषप्रसङ्ग इति चेत्— इति ॥** (१-२)

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्। सङ्गत्यर्थं प्राथमिकार्थसुग्रहार्थं च प्रथमाध्यायार्थमनुवदति— **प्रथम** इति। द्वितीयार्थमाह — **अनन्तरम्** इति। **समस्त** इति [1] तत्तत्पादनिरसनीयतर्कवैविध्यं विवक्षितम्। अयोगान्ययोगव्यवच्छेदेन ब्रह्मकारणत्वं निरूपितं प्रथमे, द्वितीये तु विरोधः परिह्रियते इत्यर्थः ॥

द्वितीयाद्यप्रतिपाद्यमाह — **प्रथमम्** इति। [2] उत्थानमाक्षिपति — **कथम्** इति। परिहरति — **सत्यम्** इति। औदुम्बर्यादिवाक्येषु [3] श्रुतिन्यायानपेक्षं श्रुत्यर्थस्य निश्चितत्वात् तद्विरुद्धस्मृत्यनादरो युक्तः। इह तु श्रुतिवैविध्यात् श्रुत्यर्थे संशय्यमाने, तद्विरोधेन स्मृतित्यागायोगात् विचारो युक्त इत्यर्थः ॥

कपिलस्य महर्षित्वे किं मानम्? सत्यपि तस्मिन् बृहस्पत्याद्युक्तलोकायतादिवत् किं न स्यात्? उक्तप्राथमिकन्यायतो निर्णीतत्वात् न च

---

1. तत्तत्पादनिरसनीयं तर्कवैविध्यं-क.
2. उक्तार्थम्-अ.
3. 'स्मृतिन्यायनिरपेक्षम्' इति श्रुतप्रकाशिकायाम्।

स्मृत्यपेक्षेत्यत्राह — **एतदुक्तम्** इति । **अभ्युपगच्छता** [1] इत्यन्तेन लोकायतादिव्यावृत्तिरुक्ता । **ऋषिम्** इति मानोक्तिः । **स्मृत्युपबृंहणम्** — स्मृतिरूपोपबृंहणम् । **अल्पश्रुतैः** इत्यादिना तदपेक्षा दर्शिता । न च न्यायतः स्मृत्यनपेक्षता, वचनविरोधे न्यायदौर्बल्यादिति भावः । **सकलाशाः** इति मन्वादिस्मृतिव्यावृत्तिः । तासां सावकाशत्वात् । अस्याश्चाप्तप्रणीताया अनवकाशत्वमयुक्तम् । पूर्वपक्षस्यानुसूत्रत्वमाह — **तदिदम्** इति ॥

## सिद्धान्तः

**तत्रोत्तरम्— नान्यस्मृत्यनवकाशदोषप्रसङ्गात् इति । अन्या हि ....तत्प्रणीतेन लोकायतेन श्रुत्यर्थव्यवस्थापनप्रसक्तेः—इति ॥१॥ (२–४)**

परिहारखण्डमवतारयति — **तत्रोत्तरम्** इति । सर्वकर्माराध्यत्वाय कार्यभूतसर्वदेवतात्मत्वसिद्धये परमकारणत्वं वक्तुं सृष्टेः पूर्वत्वात् प्रलयदशा सुबालश्रुत्यनुसारेणोच्यते — **आसीत्** इति । **इदं**— जगत्, **तमोभूतम्**— तमोवस्थम् **आसीत्**; 'अन्यवस्थे च सलिले' इतिवत् । **अप्रज्ञातम्** — प्रकृष्टरूपप्रत्यक्षज्ञानागोचरः । कुतः ? **अलक्षणम्**; शब्दस्पर्शरूपादिलक्षण-रहितत्वादित्यर्थः । कार्यगुणसिद्ध्यर्थं कारणेनापि विशेषगुणवता भाव्य-मित्यत्राह — **अप्रतर्क्यम्** — तर्कागोचरः । **अविज्ञेयम्** — विभज्य ज्ञातुमशक्यम् । 'तम एकीभवति' इत्युक्ताविभक्तावस्थमित्यर्थः ॥

स्वरूपैक्यशङ्कां व्युदस्यति — **प्रसुप्तमिव** । सुषुप्ताविव पृथग्व्यवहारा-नर्हातिसूक्ष्मावस्थापन्नम् । स्वापाद्वैषम्यमाह — **सर्वतः** इति । **ततः** — सर्गकाले प्राप्ते । **स्वयंभूः** इति कारणान्तरवत्त्वव्युदासः । **भगवान्** इति सृष्ट्युपयोगिगुणपौष्कल्यदेवताविशेषोक्तिः योगरूढिभ्याम् । **इदं** — व्यष्टि-कार्यं व्यञ्जयितुम् महाभूतानामादिभूतमहदहङ्कारविषय[2]प्रवृत्तस्वसङ्कल्प-

1. इत्यनेन-क. 2. प्रवृत्तं स्वसङ्कल्परूपज्ञानम्-अ.

रूपज्ञानः तदर्थं तमः प्रेरयन् अव्यक्ताक्षरप्रकृतिशरीरकः **प्रादुरासीत्** । अक्षरावस्थाऽप्यर्थसिद्धा ॥

स्वरूपपरिणामनिबन्धननिर्दोषत्वादिविरोधशङ्काव्युदासायाह— **शरीरात् स्वात्** इति । अप् - शब्दोऽण्डकारणतत्त्वप्रदर्शनार्थः । **महाभूतादि-वृत्तौजाः** इत्युक्तत्वात् । **वीर्यम्** — त्रिवृत्करणजनिताण्डोत्पादनशक्तिः ; तदभावे 'नाशक्नुवन् प्रजाः स्रष्टुम्' इति ह्युक्तम् । **आसीदिदम्** इत्यादि-सप्तश्लोक्यनुसन्धेया । **अहं कृत्स्नस्य** इत्यादि स्फुटम् ॥

मन्वादिस्मृतयः सावकाशाः, कपिलश्चाप्तः । उपबृंहणं चापेक्षित-मित्युक्तम् । कथं तत्स्मृतिं हित्वा स्मृत्यन्तरमादीयत इत्यत्राह— **अयमर्थ** इति । **भूतार्थ** इति । सिद्धार्थ इत्यर्थः । कार्यरूपार्थ इव विकल्पो दुर्वच इति अन्यतमत्यागोऽवश्यंभावीति भावः । **आप्ततम**— शब्देन यथावद्दर्शन-सहितयथादृष्टवादित्वं विवक्षितम् । कपिलस्य ऋषित्वमेव । अत्र [1] आप्ति-मात्रम् । 'यद्वै मनुरवदत् तद्भेषजम्' इत्युभयं मन्वादीनामस्ति इति [2] आप्ततमम् । प्रणीताः बहवः न्यायोपेताश्च इति वैषम्यत्रयमुक्तम् । हेत्वन्तरं चाह — **उपबृंहणं च** इति ॥

**न च** इत्यादि स्फुटम् । विद्याङ्गकर्मणां हि भगवदाराधनरूपत्वं, स्वर्गादिफलानां तु तदभावात् आराध्यभूतब्रह्मणि न तात्पर्यमित्यत्राह — **न चैहिक** इति । स्पष्टम् ॥

**यदुक्तम्** इत्यादि । श्रुतिप्रामाण्याङ्गीकारेऽपि श्रुत्यर्थविरोधस्यानादर-णीयत्वे प्रयोजकत्वात् तत् कापिललोकायतमतयोरविशिष्टमिति त्याज्यत्व-मित्यर्थः ॥ १ ॥

---

1. आप्तमात्रम्—अ.
2. आप्ततमप्रणीता ब्रह्मण्यन्यायोपेताः—अ.

अथ स्यात्— कपिलस्य स्वयोगमहिम्ना ... ...

**इतरेषां चानुपलब्धेः ॥ २-१-२ ॥**

**चशब्दस्तुशब्दार्थः .... .... न तया यथोक्तो वेदान्तार्थश्चालयितुं शक्य इति सिद्धम् ॥ २ ॥** (४-५)

उत्तरसूत्रशङ्कामाह— **अथ स्यात्** इति। मन्वादीनां धर्मप्रवर्तनान्यपरत्वात् न योगावसर इति भावः। **इतरेषां चानुपलब्धेः**। [1] बहूनामुपलब्धिभिः एकोपलब्धेः भ्रान्तित्वनिश्चयः। धर्मानुष्ठानपरत्वं तु मनोनैर्मल्यहेतुरिति मन्वाद्युपलब्धिप्राबल्यहेतुः। [2] तद्राहित्यं मनोमालिन्यात् भ्रान्तित्वावहमित्यर्थः ॥ २ ॥

इति स्मृत्यधिकरणम्—१

## २. योगप्रत्युक्त्यधिकरणम् ॥

**एतेन योगः प्रत्युक्तः ॥ २-१-३ ॥**

**एतेन — कापिलस्मृतिनिराकरणेन ... ... न तया वेदान्तोपबृंहणं न्याय्यम् इति ॥ ३ ॥** (६)

**एतेन योगः प्रत्युक्तः**। अक्षरार्थमुक्त्वा शङ्कायां तात्पर्यार्थमाह— **योग** इति। **अब्रह्मात्मक** इति। तत्त्ववैषम्यमुक्तम्। **ध्यानात्मकस्य** इत्यनुष्ठानवैषम्यम् ॥ ३ ॥

इति योगप्रत्युक्त्यधिकरणम्—२

---

1. बहूनामुपलब्धिभिः भ्रान्तित्वनिश्चयः-क.
2. तद्राहित्यं तु-क.

## ३. विलक्षणत्वाधिकरणम् ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २-१-४ ॥

पुनरपि स्मृतिविरोधवादी तर्कमवलम्बमानः ... नैतदेवम्, यतस्तत्राप्यचेतनांश एव कार्यकारणभावः ॥ ४ ॥ (७-२)

**न विलक्षणत्वादस्य तथात्वं च शब्दात्** । मन्वादिस्मृतिभिर्वेदानामुपबृंहणं कार्यमित्युक्तम् । तास्तर्कविरुद्धाः । तर्कानुगृहीतसांख्यस्मृत्यैव कार्यमिति प्रत्यवस्थानात् सङ्गतिः । सौत्रं **न** इति पदं व्याचष्टे — **यत्** इति । **अस्य** इति व्याख्येयम् । **विलक्षणत्वात्** इति पदं व्याचष्टे — [1]**भवदभिमत** इति । **तथात्वम्** इत्यादिसूत्रखण्डं व्याचष्टे — **न केवलम्** इति । ततः किमित्यत्राह — **यद्वि** इति । शास्त्रेण तर्को बाध्य इत्यत्राह — **अवश्यं च** इति । **अनन्यापेक्षस्य** — प्रमाणान्तरानपेक्षस्य । न हि तर्को मानम्; अतोऽङ्गत्वादपेक्षित इत्यर्थः । **क्वचित् क्वचित्** — स्वतोऽस्पष्टार्थविषयेषु ॥

तर्केण मानस्य किञ्चित्कारमाह— **तर्को हि** इति । **शास्त्रस्य तु** इति तुशब्दः साध्यवैषम्ये । **विशेषेण** इति साधनवैषम्ये । स्वापे चैतन्यानुपलम्भः, तच्छक्तियोगश्च वेदान्तदितराभिमतौ । [2] कथं ब्रह्मोपादानतोक्तेः घटादौ धीनिश्चयापेक्षेत्यत्राह— **विलक्षणयोर्हि** इति । यूपादित्यैक्यवदिति भावः । **किं पुनः** इत्यादिना वैलक्षण्यासिद्धिराशङ्क्य परिहृता । **ननु च** इत्यादिना अनैकान्त्यम् ॥ ४ ॥

अथ स्यात् — अचेतनत्वेनाभिमतानामपि ... ...

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥२-१-५॥

---

1. भवदभ्युपेतात् इति भाष्ये श्रुतप्रकाशिकायां च पाठः ।
2. प्रथमं ब्रह्मोपादानतोक्तेः—क.

तु शब्दश्चोदिताशङ्कानिवृत्त्यर्थः ... ... जगतः प्रधानोपादानत्वं वेदान्तैः प्रतिपाद्यते-इति ॥ ५ ॥ (९-१०)

अनन्तरसूत्रशङ्कामाह — अथ स्यात् इति । अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । चोदिताशङ्कानिवृत्त्यर्थः, न तु पूर्वपक्षव्युदासार्थ इति भावः । स्फुटम् ॥ ५ ॥

## सिद्धान्तः

एवं प्राप्तेऽभिधीयते —

## दृश्यते तु ॥ २-१-६ ॥

तुशब्दात् पक्षो विपरिवर्तते ... ... माक्षिकगोमयक्रिमिवृश्चिकादिषु दृश्यते ॥ ६ ॥ (१०-११)

दृश्यते तु । [1] स्पष्टम् । पराभिमतसालक्षण्यं च सुवचम् । चिदचिद्विशिष्टस्य [2] कारणत्वस्यैव कार्यत्वाच्च । इदानीं तु [3] पराभिमतसालक्षण्यनियमो [4] भग्नः ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २-१-७ ॥

यदि कार्यभूतात् जगतः कारणभूतं ... ... सति च वैलक्षण्ये कुण्डलहिरण्ययोरिव द्रव्यैक्यमस्त्येव ॥ ७ ॥ (११)

असदिति चेन्न प्रतिषेधमात्रत्वात् । प्रत्यभिज्ञार्हसालक्षण्यनियमो निषिद्धः, न तु द्रव्यैक्यमित्यर्थः ॥ ७ ॥

---

1. स्फुटम्-क   2. कारणत्वात्मस्यैव-अ.

3. पराभिमतसालक्षण्यस्य नियमो-क.

4. मग्नः—अ.

अत्र चोदयति —

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ २-१-८ ॥

अपीतावित्यपीतिपूर्वकसृष्ट्यादेः ... ... ब्रह्मकारणवादे वेदान्तवाक्यानामसामञ्जस्यम्-इति ॥ ८ ॥ (११-१३)

उत्तरसूत्रमवतारयति — **अत्र** इति । **अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्** । **सृष्ट्यादेः** । आदिशब्दात् स्थितिः । सिद्धान्तं शङ्कते — **अथ** इति । चेष्टाश्रयत्वमुक्तम् **पञ्चवृत्ति** इति । **आयतनशब्दः** साधनविशेषपरः । अत एव हि **भोगसाधनमात्रस्य** इत्युक्तम् । सिद्धान्त्यभिमतलक्षणं दूषयति — **अथ मतम्** इति । अव्याप्तिमाह — **शरीरतया** इति । अतिव्याप्तिमाह — **साल** इति । [1] पक्षैकदेशव्याप्तिमाह — **चेतनस्य** इति । **क्रियादिषु** । आदिशब्दात् गुणः ॥ ८ ॥

अत्रोत्तरम् —

## न तु दृष्टान्तभावात् ॥ २-१-९ ॥

**नैवमसामञ्जस्यम्** — एकस्यैव... ... सूत्रद्वयेन 'इतरव्यपदेशात्' इत्यधिकरणसिद्धोऽर्थः स्मारितः ॥ ९ ॥ (१३-१६)

**न तु दृष्टान्तभावात्** । हेयासंभवे को दृष्टान्त इत्यत्राह — **एतदुक्तम्** इति । अमुख्यत्वमाशङ्क्याह — **अथ च** इति । अपामेव देवत्यादिधर्माः, न पुरुषस्येत्यत्राह — [2] **भूतसूक्ष्म** इति । '**सोऽभिध्याय**' इत्यत्र [3] चिदचितोरस्पष्टत्वादाह — **भूतसूक्ष्मात्** इति । 'आसीदिदम्'

1. पक्षैकदेशे व्याप्तिमाह्–क
2. सूक्ष्म-अ.
3. चिदचितोरविस्पष्टतामाह–अ.

इत्यादिना प्रकृतत्वादिति भावः । **लोके** च इत्यादि । क्रिमिकीट-पतङ्गादावनुगतत्वाय हि त्वया चेष्टाश्रयत्वादि लक्षणमुक्तम् ; न तु द्विपात्त्वादि । अनुयायिनि संभवति, अननुगतस्वीकारायोगात् । एवं लौकिकवैदिक-सर्वप्रयोगानुगतलक्षणे संभवति, अननुगतस्वीकारेण क्वचित् गौणत्वा-श्रयणमयुक्तमिति भावः । **अतः** — अनुयायिनो लक्षणत्वात्, त्वदुक्तस्य चाननुयायित्वादित्यर्थः ॥

अनुगतलक्षणमाह — **यस्य** इति । चेष्टाश्रयत्वादिकं त्रितयमननु-गतम् ; इदं तु लक्षणत्रयमनुगतम् । **यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत् तस्य शरीरम्** ; यस्य चेतनस्य यत् द्रव्यं सर्वात्मना स्वार्थे धारयितुं शक्यं, तत् तस्य शरीरम् ; यस्य चेतनस्य यत् द्रव्यं शेषतैकस्वरूपं च, तत् तस्य शरीरमिति विभागः । **स्वार्थे** — स्वविषये शक्येऽर्थे । **सर्वात्मना** — यावद्द्रव्यभावितया । एतत्स्थाने तृतीये **एक**शब्दः । **स्वार्थशक्य**शब्दानपेक्षणात् तृतीयस्य पृथ-गुक्तिः । **यस्य** इति — पित्रादिवत् देहस्य सप्रतियोगिकवस्तुत्वं दर्शितम् । तावता पित्रादेर्देहत्वं [1] प्रसजेदित्युक्तं **नियाम्यम्** इति । **द्रव्यम्** इति [2] क्रियादिव्युदासः । **सर्वात्मना** इति घटादिव्यावृत्तिः । मनुष्यादीनां गगनगमनादेरशक्यत्वात् [3] असंभवव्यावृत्त्यर्थं **स्वार्थे** इति । **शक्यम्** इति रुग्णदेहादौ अव्याप्तिव्युदासः । **चेतनस्य** इति धर्मभूतज्ञान-व्यावृत्तिः । [4] न हि तत् ज्ञानविशिष्टेन नियाम्यम् । द्वितीयतृतीययोः असंभवव्यावृत्तिश्च । तृतीये तु **एक**शब्देन गृहादिव्यावृत्तिः । शरीरत्व-प्रयुक्तदोषनाशङ्क्याह — **उपरितन** इति ॥ २ ॥

## स्वपक्षदोषाच्च ॥ २-१-१० ॥

---

1. प्रसज्येदित्युक्तं-क. 2. क्रियाव्युदासः-अ.
3. असंभवव्यावृत्तिः-अ. 4. न हि तत् ज्ञानं ज्ञानविशिष्टेन-अ.

. न केवलं ब्रह्मकारणवादस्य ... 'अभ्युपगमेऽप्यर्थाभावात्' इत्यादिना प्रपञ्चयिष्यते ॥ १० ॥ (१६)

स्वपक्षदोषाच्च । अनभ्युपगमात् — [1] नित्यनिर्विकारत्वोपगमादित्यर्थः ॥ १० ॥

## तर्काप्रतिष्ठानादपि ॥ २-१-११ ॥

सर्वस्याप्रतिष्ठितत्वादपि .... ... तर्काणामन्योन्यव्याघातात् तर्कस्याप्रतिष्ठितत्वं गम्यते ॥ ११ ॥ (१६)

तर्काप्रतिष्ठानादपि । स्पष्टम् ॥ ११ ॥

## अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्ष-प्रसङ्गः ॥ २-१-१२ ॥

इदानीं विद्यमानानां शाक्यादीनां ... ... वेदार्थविशदीकरणरूपवेदोपबृंहणतर्कोपादानाय सांख्यस्मृतिर्नादरणीया ॥ १२ ॥ (१६-१७)

अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः । भूतस्य भूतेनेव भाविनो भाविना तर्कान्तरेण प्रतिहतिः संभवतीत्यर्थः । वेदशास्त्रशब्दवैयधिकरण्येन सांख्यानुमतिशङ्काव्युदासायाह–वेदाख्य इति । 'वेदश्चक्षुः सनातनम् ... .... वेदशास्त्रमिति स्थितिः' इति प्रकरणात् ॥ १२ ॥

इति विलक्षणत्वाधिकरणम्–३

—×—

1. नित्यनिर्विकारोपगमात्-अ.

## ४. शिष्टापरिग्रहाधिकरणम् ॥

### एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २-१-१३ ॥

शिष्टाः-परिशिष्टाः, न विद्यते ... ... विसंवाददर्शनाच्चाप्रतिष्ठितत्वमेवेति परिहारः ॥ १३ ॥ (२१)

एतेन शिष्टापरिग्रहा अपि व्याख्याताः । तृतीयासमासव्युदासाय व्याचष्टे — शिष्टाः इति । कर्मधारयत्वे हि सांख्यस्य [1] शिष्टापरिग्रहत्वसिद्धिः । अनेकान्तत्वसत्यासत्यात्मकत्वादि । आदिशब्दात् चातुर्विध्यैकरूप्ये ॥ १३ ॥

इति शिष्टापरिग्रहाधिकरणम्-४

---

## ५. भोक्त्रापत्त्यधिकरणम् ॥

### भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ २-१-१४ ॥

पुनरपि सांख्यः प्रत्यवतिष्ठते — यदुक्तं ... ... स्वरूपपरिणामे च ब्रह्मण एव भोक्तृभोग्यत्वापत्तिरिति पुनरप्यसामञ्जस्यमेव ॥ (२२-२४)

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् । पूर्वाधिकरणे देहो दृष्टान्तितः । तत्प्रयुक्तभोक्तृत्व [2] शङ्काया उत्थानात् सङ्गतिः । ननु च इत्यादि । अन्यगृह इव कार्यान्तरवशात् [3] सन्निधौ भोक्तृत्वमिति पूर्वत्रोक्तम् । इह [4] शरीरस्वामित्वे भोक्तृत्वं न निवार्यते इत्यर्थः । स्थविरत्वादिविकारा-

---

1. शिष्टापरिगृहीतस्य सिद्धिः-अ.
2. शङ्कयोत्थानात्-अ. 3. सन्निधेर्भोक्तृत्वम्-क.
4. शरीरस्वामित्वेन भोक्तृत्वेन ह्रियते-क.

संभवेऽपि इति अनेन प्रागुक्तदृष्टान्तपरिहृतांश उक्तः। अपरिहृतांशमाह — [1]शरीर इति। स्यात् लोकवत् इति। सशरीरस्य कारणत्वे दोषः परिहृतः। केवलब्रह्मणः कारणत्वे [2]दोषमनुपगमेन प्रतिवक्ति — मृत्सुवर्ण इति॥

यत् तु इत्यादिनाऽनूदितं परोक्तार्थं दूषयति — तदयुक्तम् इति। उपाधिश्च इति उपाधि शब्दः शक्त्यविद्योपाधिपरः। वादशब्दवदयं शब्दः। उपाधितद्रहितयोरविभागः शङ्क्यत इत्यत्राह — विलक्षणयोः इति। स्वरूपपरिणामे शङ्कापरिहारौ युक्ताविल्यत्राह — स्वरूप इति। कुत इत्यत्राह — न कर्म इति। उभाभ्य दूषयति — स्वरूप इति। [3]कालान्तरेण घटशरावादिसङ्करोऽस्तीति चेत् फेनतरङ्गदृष्टान्तेऽपि समानोऽयं दोषः। यस्तु तेन परिह्रियते [4]स्वरूपपरिणामेऽपि परिहार्यः। पूर्वाधिकरणोक्तविकाराद्यपुमर्थदोषपरिहारानुपपत्तिमाह — स्वरूप इति॥ १४॥

इति भोक्त्रापत्त्यधिकरणम्—५

---

## ६. आरम्भणाधिकरणम्॥

### तदनन्यत्वमारम्भणशब्दादिभ्यः॥ २-१-१५॥

'असदिति चेन्न प्रतिषेधमात्रत्वात्' इत्यादिषु ... .... तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धम्॥ (२५-२७)

तदनन्यत्वमारम्भणशब्दादिभ्यः। सङ्गतिमाह — असत् इति। सत्यपि इति। कार्योपयोगितया — [5]उदकाहरणादिकार्योपयोगितया। न

---

1. अतः (सशरीर) इति श्रुतप्रकाशिकायाम्
2. दोषानभ्युपगमेन—क. 3. कालान्तरे घट—क.
4. स्वरूपपरिणामेति विपरिहार्यः—अ.
5. उदकाहरणादिकार्येऽप्युपयोगितया—अ

च इति । पिण्डे घटो न चेत् कुलालेन तन्तुष्वपादीयेत, तत्र घटासत्त्वाविशेषादित्यर्थः। मृत्पिण्डेऽस्ति घटः, न तन्तुषु इति कुतः? मृत्पिण्ड एव [1]घटसद्भावयोग्य इति चेत् तर्हि तदुत्पादनयोग्यः स एव इत्यभिप्रायेण परिहरति — **कारण** इति । स्पष्टम् । **आहुः** — सिद्धान्त्येकदेशिनः इत्यर्थः ॥

'वाचारम्भणम्' इत्यादेरर्थमभिप्रयन्नाह — **अतो यथा** इति । **विकारेषु** इति [2]अनुवर्तमानत्वहेतुरभिप्रेतः। 'एकमेव अद्वितीयम्' इत्यस्यार्थमाह — **तथा** इति । कार्यस्य सदसद्विलक्षणत्वे व्यतिरेकिणमाह — **सत** इति । सदसदन्यत्वे [3]मिथ्यात्वेऽन्वयिहेतुरित्याह — **अनिर्वचनीयं च** इति । सपक्षे [4]साधकधर्मं दर्शयति — **तस्य च** इति ॥

**किं च कार्यमुत्पादयन् मृदादि कारणद्रव्यं ... ... जीवेश्वरबद्धमुक्तशिष्याचार्यज्ञत्वाज्ञत्वादिव्यवस्था च न स्यात् ॥ (२७-२८)**

व्यावर्तमानत्वस्य निरुपाधिकत्वाय कार्यदुर्निरूपताम् [5]अनुग्राहकतर्करूपेणाह — **किं च** इति । सत्यं चेत् सुनिरूपं स्यादित्यर्थः। उक्ततर्कस्य प्रत्यक्षविरोधमाशङ्क्याह — **न च** इति । **रुचकादि** – [6]रुचकाद्यवस्था। [7]समवायिविषया प्रत्यभिज्ञा इत्यत्राह — **तदतिरिक्त** इति । व्यक्तिद्वयानुपलब्धेरित्यर्थः। **पटे तन्तव इव** इति पटप्रक्रिययोक्तम् । **नापि** इति । विशिष्टस्य कार्ये प्रत्यभिज्ञानप्रसङ्गः इत्यर्थः। **अतः** इति । कारणाति-

---

1. सद्भावयोग्य इति चेत् तत्तदुत्पादन–अ.
2. अनुवर्तमानहेतुः–क.
3. मिथ्यान्वयि–अ.
4. साधनधर्म–अ.
5. अनुग्राहकतर्कमाह–अ.
6. रुचकत्वाद्यवस्था–क.
7. समवायिविषयप्रत्यभिज्ञेत्याह–अ.

रिक्तानुपलम्भात् [1]नाध्यक्षबाधः इत्यर्थः । तत एव न सोपाधिकत्वं, पक्षेऽपि बाधादिति भावः ॥

कृत्स्नं मिथ्या चेत्, कथं मृदादिसत्यतेत्यत आह तदिदम् इति । कण्ठोक्तं चेत्याह — ऐतद् इति । मृदादिष्वैक्यसाम्यमाशङ्क्याह — न चागम इति । शङ्कितमन्यपरत्वं प्रतीत्यभावात् प्रत्यक्षविरोधाद्वा इति विकल्पं मत्वा प्रथमं अनुदस्यति — यथोक्त इति । द्वितीयं व्युदस्यति — प्रत्यक्षस्य च इति । उपगम्याह — [2]विरोधे सत्यपि इति । दोषः — भेदवासना । अपच्छेदमभिप्रेत्याह — चरम इति । स्वरूपसद्भावः — ज्ञानोदयः । आदिशब्दात् सामग्र्युत्पत्तिः । प्रमितौ — प्रमितत्वे । अर्थपरिच्छेदकत्वेन हि स्मृतिवत् ज्ञाततयाऽर्थं ज्ञापयतीत्यर्थः ॥

अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एव ...... जीवानां भ्रमस्य प्रवाहानादित्वान्न तद्धेतुरन्वेषणीयः – इति ॥ (२८-२९)

ननु इत्याद्युक्त लौकिकवैदिक व्यवस्थासिध्यर्थं जीवाज्ञानपक्षं प्रस्तौति– अत्र इति । कस्य — किमाश्रया । अवस्तुभूतायां — मिथ्याभूतायाम् । अनवक्लृप्तिः — असिद्धिः । ब्रह्मव्यतिरेकस्वतःशुद्धिभ्यां ब्रह्मण इव जीवस्यापि अविद्यान्वयो न स्यादित्यत आह — वस्तुतः इति । स्वतः शुद्धस्यापि औपाधिकाशुद्धिसंभवात् अविद्यान्वयोपपत्तेः [3]जन्मजरादीनां काल्पनिकत्वोपपत्तिरित्यर्थः । अशुद्धिः—दीनता । तस्या धीनिवर्त्यत्वायाह— अशुद्धिरपि इति । अशुद्धिभ्रमात् अविद्यान्वयः, तेनाशुद्धिभ्रमः इत्यन्योन्याश्रयमाशङ्क्याह — जीवानाम् इति ॥

---

1. नास्य प्रत्यक्षविरोधः–क.

2. विरोधे सति इति–अ.

3. जन्मकर्मादीनां–अ.

**तदेतदविदिताद्वैतयाथात्म्यानां ... ... अत्रैव कल्पकमिति चेत् ब्रह्माज्ञानमेवायातम् ॥** (२९-३१)

जीवाज्ञानपक्षं दूषयति — **तदेतत्** इति । किं जीवस्य अकल्पितस्वरूपेणाविद्याश्रयत्वम्, उत कल्पिताकारेण, अथ [1]कल्पिताकारविशिष्टस्वरूपेण इति विकल्पमभिप्रेत्य, प्रथमं शिरो दूषयति — **जीवस्य** इति । द्वितीयं दूषयति — **तदतिरिक्तेन** इति । जीवो ह्यविद्याश्रयः, तत् कथं जडस्य तदाश्रयत्वमित्यत्राह — **न खलु** इति । तृतीयं शङ्कते — **कल्पित** इति । दूषयति — **तन्न** इति । कुत इत्यत्राह — **स्वरूपस्य** इति । ततः किमित्यत्राह — **अविद्याश्रयाकार** इति । अविद्याश्रयत्वे सति विशिष्टत्वं विशिष्टाकार एव अविद्याश्रय इत्यात्माश्रयणमित्यर्थः ॥

अविद्याया एकत्वे दूषणमाह — **तत्रैकस्मिन्** इति । बहुत्वं शङ्कते— **प्रति** इति । **भन्त्स्यते** — बद्धो भविष्यति । दूषयति — **तन्न** इति । अद्वैतहानिप्रसङ्गात् स्वाभाविकत्वानभ्युपगमः । **किमस्याः** इति । [2]जीवभेदकल्पकाऽविद्या तत्क्लृप्तेः प्रागेव नाश्रयितुं क्षमा, जीवासिद्धेरित्यर्थः । **बीजाङ्कुरेषु** इति । तत्र नोत्पादकस्य उत्पादकतयोत्पाद्यापेक्षेति भिदा । **अशकनीयता** — साधयितुमशक्यता । **कृतनाशादि** इति । आदिशब्दात् जीवनित्यत्वादिश्रुतिविरोध उक्तः ॥

जीवाख्यधर्मिक्लृप्तेः प्रवाहानादित्वे कथितं [3]दूषणं जीवत्वधर्मक्लृप्तिप्रवाहानादित्वेऽप्यतिदिशति — **अत एव** इति । धर्मक्लृप्तिपक्षस्य निरस्ततां विवृणोति — **अविद्याप्रवाहे** इति । पक्षद्वयेऽपि दूषणमेकमाह — **आमोक्षात्** इति । **जीवस्य** — जीवभावविशिष्टस्य ॥

---

1. कल्पिताकारविशिष्टरूपेण-क
2. जीवभेदकल्पिका-अ
3. दूषणमेव धर्मक्लृप्तिः-अ.

[1] दुर्घटत्वेन परिहारं दूषयति — **यच्चोक्तम्** इति । **शुद्धविद्यास्वरूपत्वात्** — शुद्धब्रह्मस्वरूपत्वात् । **उक्ताभिः** — अन्योन्याश्रयादिभिः । **अनिर्मोक्षः** — अविद्याजीवावस्थितेरित्यर्थः ॥

दार्ष्टान्तिकालोचनया दूषितम् । अथ दृष्टान्तालोचनया दूषयति — **यच्चोक्तम्** इति । दोषप्रतिभासानुपपत्त्या दूषयति — **किं च** इति । **अन्यस्य** इति शिरोदृष्टान्तानुरोधादुक्तम् ॥

अविद्याकार्यभ्रमाश्रयनिरूपणया दूषयति — **किं च** इति । **कः कल्पकः** — को भ्रमाश्रयः । **आत्माश्रय** इति । जीवसिद्धेः स्वविषयभ्रमाश्रयस्वसिद्धिसापेक्षत्वात् **आत्माश्रयः** इत्यर्थः ॥

**किं च ब्रह्माज्ञानानभ्युपगमे, किं ब्रह्म .... ... परमार्थतो ब्रह्मव्यतिरिक्ताभावात् तदनन्यत्वं जगतः — इति ।** (२१-२४)

**किं च** इति । स्फुटम् । **अत एव** — ईक्षा[2] पूर्वकसृष्टयर्थमस्य जीवदर्शनार्थं चाविद्यान्वयस्य [3] उपगमादित्यर्थः । **माया** — परभ्रमहेतुः; स्वभ्रमहेतुः **अविद्या** इति तन्मतम् । **जीवदर्शित्वम्**—अपरमार्थजीवदर्शित्वम् । परमोहनहेतुरेव मोहनीयदर्शनहेतुरिति शङ्कते— **अथ** इति । **तर्हि** इत्यादि । स्फुटम् । [4] अपुमर्थदृष्टिहेतुत्वाभावानुगमेनापि दूषयति — **तन्निरसने च** इति । दुःखहेतुत्वेऽपि अवस्तुभासनमेव अपुमर्थः निरसनीयत्वात् अतो मायायाश्च तद्धेतुत्वादविद्यात्वमिति भावः । **अविद्यामन्तरेण नोपपद्यते** इति ।

1. दुर्घटत्वेन दूषयति–अ
2. ईक्षापूर्वसृष्टयर्थं सत्यजीवदर्शनार्थं–अ. (असत्यजीव ?)
3. उपगन्तव्यत्वादित्यर्थः–क
4. पुमर्थदृष्टिहेतुत्व–क.

मृषात्वादिति भावः। **नित्यया**— अपुमर्थाभावेनानिरसनीयत्वादिति भावः। आश्रयविभागानुपपत्त्या च दूषयति— **मायाश्रयतया** इति ॥

**यत्तु** इत्यादि। **अत एव**— आश्रयैकत्वेऽपि सर्वव्यवस्थोपपादक-हेतुना काल्पनिकत्वेन। कार्यपारमार्थ्य एव कारणबहुत्वम्, न त्वपारमार्थ्य इत्याह—**पारमार्थिकी** इति। ततः किमित्यत्राह— **अपारमार्थिकी तु** इति ॥

**प्रयोगश्च** इति। आद्यौ जीवाज्ञानवादिनं प्रति कथितौ। अन्त्यौ द्वौ तं भेदवादिनं च प्रति। जडत्वादयः एकैकमनपेक्षाः। **भिन्नत्वे च** इति व्यतिरेकित्रयम्। अभिन्नत्वं साध्यम्। वस्तुपरिच्छेदात् परिच्छेदान्तरद्वय प्रसञ्जयति— **वस्तुनः परिच्छिन्नस्य** इत्यादिना। ततः किमित्यत्राह— **एवं च** इति। **उत्पत्ति** इति। अविकारश्रुतिविरोधश्चेत्यर्थः। एकाविद्यया सर्वव्यवस्थोपपत्तिमुपसंहरति— **अतः** इति। ब्रह्माज्ञानवादपक्षमुपसंहरति— **तस्मात्** इति। **अनन्यत्वं जगतः** इति। परमार्थभूतान्यत्वं न भवति इत्यर्थः। अभावः नञर्थः ॥

**अत्रोच्यते — निर्विशेषस्वप्रकाशमात्रं ब्रह्म ... ... अहंत्व-माद्यर्थविलक्षणं चिन्मात्रं ह्यात्मा त्वन्मते ॥** (पृ. ३४-३६)

ब्रह्माज्ञानवादिनं वैशेषिकः प्रतिवदति— **अत्रोच्यते** इति। **निरंशस्य** इति। तिरोधानेऽपि जडांशः स्थिरः इति दुर्वचमिति भावः। **स्ववचन-विरुद्धम्**— नित्यत्वादिसाधकवचनविरुद्धम्। **उक्तम्** — अस्मिन् प्रबन्धे सिद्धान्तिना इत्यर्थः। मिथ्यात्वानित्यत्वभेदमाह— **यद्देश** इति। अनित्यत्वे साध्ये सिद्धसाध्यता; मिथ्यात्वे तु सोपाधिकत्वव्याघातबाधितत्वानैकान्त्यादीनि इति भावः। **देशकालादि** इति। आदिशब्दात् क्रियादि। देशकाल-भ्रमेषु देशकालान्तररूपोपाध्यभावात् साध्यसमव्याप्तिर्नेति न वाच्यम्; तत्रापि क्रियादेरुपाधित्वादिति भावः। बाधार्हत्वं साध्यम्; बाधितत्वं लिङ्गमिति न साध्याविशिष्टता। दाहार्हत्वदाहकार्यत्ववत्। **समवहितात्** —

समर्थितम् । **कारणान्तरम्** — अदृष्टेश्वरसङ्कल्पादि । [1] **एतदायत्तत्वाभावात्** — वस्तुनानात्वानायत्तत्वात् अविकृतस्वधर्मितया तद्धि प्रकृतम् ॥

अनुग्राह्यमाह — **कारणस्य च** इति । परोक्ततर्को जात्युक्तिः । कार्यकारणत्वभङ्गवाचित्ववचनस्य प्रमितिजनकत्वोपगमात् । न चेत् [2] सुतरां न कार्यकारणत्वभङ्गः । **यथोक्तपरिकरः** — देशकालादिः । हेमप्रत्यभिज्ञा कथमित्यत्राह — **प्राक्** इति । **यच्चान्यत्** इति । **आदि**शब्दात् विरोधेऽपि शास्त्रबलीयस्त्वम् ॥

**यच्चोक्तम्** इत्यादि । देहभेदादप्रतिसन्धिरित्यत्राह — **सौभरि** इति । अन्तःकरणभेदादित्यत्राह — **न च** इति । एकशरीरवर्त्यात्मन एकत्वे सिद्धसाध्यता । अनेकशरीरवर्तिनां चेत् धर्मिग्राहकबाध इत्यर्थः । **सर्वशरीराणामविद्याकल्पितत्वाभावात्** इति । साक्षभूतदेहस्यापि अविद्याकल्पितत्वाभावात् दृष्टान्तस्य साध्यवैकल्यमित्यभिप्रेतम् ॥

यच्च **चेतनात्** इत्यादिना अहमेव सर्वं चेतनजातं चेतनत्वात् इतीदमर्थतोऽनूदितम् । कालात्ययापदेशेन दूषयति — **तदपि** इति । [3] उक्तिदूषणमाह — **यत् तु** इति ॥

**किं च निर्विशेषचिन्मात्रातिरेकि सर्वं मिथ्येति वदतो मोक्षार्थश्रवणादिप्रयत्नो निष्फलः ... ... भेदवादिनस्तु सर्वचिदचिद्वस्तुशरीरत्वेन ब्रह्मणः सर्वप्रकारत्वात् स्वतः परतोऽपि परिच्छेदो न विद्यते ॥** (पृ. ३६-३९)

प्रतितर्कानाह — **किं च** इति । अविद्याकार्यत्वादौ निष्फलत्वादिप्रसङ्ग इत्यर्थः । कर्महेतुकत्वात [4] तद्वदेव त्वन्मतेऽपि निष्फलत्वादिति चेत्,

1. एतदायत्तत्वाभावात्—अधिकृतत्व-क.
2. सुतरां कार्य-क. 3. उक्तदूषणमाह-अ.
4. तद्वत् देवत्वमनुष्यत्वेऽपि निष्फलत्वात्-क.

न, श्रुतेस्तुल्यदोषत्वाभावेन तद्भावेन परिशास्य सुवचत्वादिति भावः। स च व्यक्तीभविष्यति ॥

द्विधा मृषावादिनां गतिः। [1]ब्रह्म स्वरूपपरवाक्यप्रतिपाद्यमिति, ब्रह्म तु न प्रतिपाद्यं, भेदनिषेधपरा वेदान्ताः इति च। तत्र प्रतिपाद्यत्वपक्षेऽनिष्टं प्रसञ्जयति — **किं च निर्विशेष** इति। **अनुमानैः** — तर्कैः। [2]'ऊहस्तर्कोऽनुमानोक्तिः' इति प्रसिद्धेः। **निरस्तान्** इति। स्वाभिमतार्थसाधकत्वं निरस्तमित्यर्थः। **अतादृशस्य** — कर्मकर्तृरहितस्य। 'तादृशस्य' इति पाठे सकर्तृकर्मणस्तस्य निर्विशेषत्वेऽभिमते सा न सिध्यतीति ॥

पूर्वभविद्याहेतोः नैष्फल्यमुक्तम्। तत्र; असत्यात् सत्योत्पत्तेः इत्यत्राह — **यः पुनः** इति। परमते तदसिद्धिमाह — **सोऽपि** इति। स्वमते तदसिद्धिमाह — [3]**अस्माभिरपि** इति ॥

[4]बाधादृष्टिमुपगम्य दूषयति — **दुष्टकारण** इति। सा च नेत्याह — **किं च** इति। माध्यमिकवचो दोषमूलमित्यत्राह — **दोषमूलत्वं तु** इति। **अतः ... न सेत्स्यति** इत्यन्वयः। असिद्धिमुपपादयति — **लोक** इति। ततः किमित्यत्राह — **निर्विशेष** इति। ज्ञातृत्वसविशेषत्वयोरभावात् आश्रयतया करणतया च न प्रतिभासादिहेतुत्वमित्यर्थः। **आदि**शब्दात् व्यवहारः ॥

**न कश्चिद्विशेषोऽन्यत्र तत्संरंभात्** इति। अयमभिप्रायः — अधिष्ठानस्य मिथ्यात्वेऽधिष्ठानान्तरापेक्षया अनवस्था दोषमृषात्वेऽपि तुल्या। स्वरूपप्रवाहानादित्वाभ्यां दौर्घट्यस्वपरनिर्वाहकाभ्यां च परिहृतिश्च तथा। उपपत्त्यनपेक्षत्वे चातिप्रसङ्गाः प्राक् दर्शिताः। दोषसत्यत्वापेक्षा चापरमार्थत्वप्रयुक्तोपपत्तिरूपेति ॥

---

1. ब्रह्म, स्वरूपपरवाक्यमिति, ब्रह्म तु न प्रतिपाद्यम्—अ
2. 'ऊहस्तर्कोऽनुमा युक्तिः'-(?)
3. अस्माभिरिति-अ 4. बाधादृष्टिम्-अ.

यत्तु इत्यादि। **आनन्त्यं** — सावधिसंख्याराहित्यम्। **स्वरूपान-न्त्यात्** — देशकालाद्युपाधिरहितस्वरूपानन्त्यात्। **देशकालादि** इति आदि-शब्दात् कर्तादि। कर्तादिनाऽप्यवच्छेददर्शनात् [1] गृहाद्यवच्छिन्नात्मपक्षीकारे सिद्धसाध्यता। अवच्छिन्नघटेषु सपक्षीकृतेषु [2] भिन्नत्वं सोपाधिकम्। अन्यथा दृष्टान्तस्य साध्यवैकल्यम्॥

**यत्तु आत्मनाम्** इति बाधितविषयत्वमुक्तम्। **यत् तु भिन्नत्वे** इति। देशकालपरिच्छेदौ न्यूनाधिकत्वरहितौ, परिच्छेदत्वात्, वस्तुपरि-च्छेदवत् इतिवत् वस्तुतः परिच्छिन्नस्य देशकालपरिच्छिन्नत्वम् [3] अबाधितम् इत्यर्थः। **वस्तुतः** इत्यादि। [4] स्फुटम्॥

अविद्याब्रह्मभेदानुपगमे दूषणमाह — **यदि** इति। शुक्तित्वमृषात्वे पुरोवर्ति रजतमेव यथा स्यादिति भावः। प्रतितंत्रन्धिन्यविद्या मृषेति चेत्, घटोऽपि मृषेति [5] तद्विलक्षणपटस्यैव वस्तुपरिच्छेदतत्प्रयुक्तदोषाः स्युः। अथ सामान्येन भेदानुपगमेन दूषणमाह — **भेदतत्त्व** इति। स्वपक्षो निर्दोषः, परपक्षः सदोषः इति विभागसत्यत्वे भेदसत्यत्वम्, असत्यत्वे भेदसत्यत्वम् इत्यर्थः। वैशेषिकानन्त्ये स्वाभिमतिप्रकारमाह — **आनन्त्य** इति। साक्षात्-सिद्धान्तिपक्षे तदुपपत्तिमाह — **भेदवादिनस्तु** इति। **स्वतः** इति घटादि-व्यावृत्तिः। **परतः** इति धर्मभूतज्ञानव्यावृत्तिः। सर्ववस्तुसामानाधिकरण्या-र्हत्वं वस्त्वपरिच्छेदः तन्निष्ठवस्त्वन्तराभाव इत्यर्थः। गुणानन्त्यं च यथा षड्वर्णा-पेक्षया दशवर्णनिष्कस्यापरिच्छेदः। प्रागुक्तोऽप्येतदन्तर्भूतः॥

**तदेवं कारणात् भिन्नस्य कार्यस्य सत्यत्वात् ब्रह्मकार्यं कृत्स्नं जगत् ब्रह्मणोऽन्यदेव॥**

1. महाद्यवच्छिन्नापक्षीकारे–अ.    2. अभिन्नत्वम्–क.
3. बाधितम्–अ.    4. स्पष्टम्–क.
5. तद्विलक्षणस्य पटस्य–क.

## सिद्धान्तः

इति प्राप्ते प्रचक्ष्महे — तदनन्यत्वमारम्भणशब्दादिभ्यः । ...
... 'बालो युवा स्थविरः' इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते ॥ (३९–४०)

अथ वैशेषिकपक्षमुपसंहरन् राद्धान्तमवतारयति— **तदेवम्** इति । तदनन्यत्वमारम्भणशब्दादिभ्यः । अस्य कस्मादनन्यत्वमित्यत्राह — **तस्मात्** इति । **अनन्यत्वम्** — ऐक्यम् । विरोधो नञर्थः । प्रतिज्ञादृष्टान्तवाक्यद्वयं प्रकृत्यधिकरणविषयः । वैशेषिकनिरासेन कार्यकारणैक्योपपादकत्वादस्य वाक्यस्य एतदधिकरणविषयत्वमित्यभिप्रायेणोक्तं **तदुपपादयद्भ्यः** इति । ऐकपद्यव्युदासाय 'वाचादिभ्यः' इत्यनुक्तिः । षष्ठीतत्पुरुषव्युदासायाह — **आरम्भणशब्द** इति ॥

उदाहृतवाक्यानां तदनन्यपरत्वमुपपादयति — **तथा हि** इति । दृष्टान्तवाक्यं व्याचष्टे — **यथैक** इति । **वाचा** इत्यादिवाक्यस्य तदुपपादकत्वमाह— **अत्र** इति । नाम्नो मृदारब्धत्वाभावात् स्पर्शार्थतया व्याख्यातम् । घटेन इति **वाचा** इत्यजहल्लक्षणेत्यर्थः । **सिद्धये** इति प्रयोजनतया हेतुत्वमित्यर्थः । **तेनैव** — पूर्ववाक्यप्रस्तुतेन । स्पर्शशब्दार्थं विवृण्वन् उक्तं संग्रहेणाह— **उदक** इति । बुद्ध्यादिभेदः 'घटः पटः', 'आस्ते शेते' इत्यादौ बुद्धिभेदादवस्थाभेदाच्च दृष्टः । अत्र त्ववस्थाभेदनिबन्धनत्वे किं नियामकमित्यत्राह — **अतः** इति । एवकारार्थमाह — **न तु** इति । सामान्येन बुद्ध्यादिभेदानामन्यथासिद्धिमाह—**अतः** इति । देहक्षणिकत्वेऽपि बालादिशब्दानां चेतनपर्यन्तत्वान्न साध्यविकलता दृष्टान्तस्य, देहस्याबाधितप्रत्यभिज्ञाविषयत्वाच्च ॥

यदुक्तम्— सत्यामेव मृदि घटो नष्ट इति व्यवहारात् ... ...

**तदेवमारम्भणशब्दादिभ्यो जगतः परमकारणात् परस्मात् ब्रह्मणोऽनन्यत्वमुपपाद्यते ॥** (४०-४१)

भावाभावविरोधं परिहरति— **यदुक्तम्** इति। कार्यभेदं परिवक्ति — **तत्तत्** इति। कारकव्यापारवैयर्थ्यं व्युदस्यति — **संस्थानयोग** इति। भूतप्रत्ययनिर्देशः प्रथमक्षणापेक्षयेति **योग**शब्दस्य भावः। अतो नोत्पद्यते इति व्याहारः नात्र शक्त्युत्पन्नव्याहाराभावश्च। तत एव कपालत्वे सति घटस्य निष्ठत्वोक्तिश्च एवं युक्ता। **संस्थानस्य** इत्यादिनोपन्यस्तचोद्यं प्रतिबन्दीमुखेन परिहरति— **असत्कार्यवादिनोऽपि** इति। यथोत्पत्तेरुत्पत्तिचोदनं [1] नित्यसमजात्युक्तिः तथाऽवस्थाया उत्पत्तिमुखेन चोद्यमपि; अवस्थाविशेषस्य चोत्पत्तिरूपत्वादित्यर्थः। **अस्माकं तु** इति। पृथक्स्थितिप्रतीतिकार्यानर्हाणां न पृथगुत्पत्त्याद्यपेक्षा यथोत्पत्तेः, किं तु तदर्हाणामेव पृथगुत्पत्त्याद्यपेक्षेत्यर्थः। संख्याभेदं परिहरति — **कपालत्व** इति ॥

अथ सौत्रादिशब्दोदात्तेषु वाक्येषु दार्ष्टान्तिक[2]वाक्यस्यार्थमाह — **तथा** इति। **सदेव** इति एवकारात् कार्यासत्त्वव्युदासः। कथम् 'असत' [3] इत्यादिवाक्यैकार्थ्यात् **तथा ... उपपादितम्** इत्यन्वयः ॥

पदानामुक्तार्थपरत्वं द्रढयितुमुपरितनवाक्यानामर्थं वदन्, अनन्यत्वसिद्धिमाह— [4] **तथा तदैक्षत** इति। बहुत्वेक्षितृत्वशब्दाभ्याम् '**एक**' '**अद्वितीय**' शब्दार्थः स्फुटीकृतः। ऽपष्टिसृष्टिसङ्कल्पवाक्यस्य शङ्कामाह — **सच्छब्द** इति। सच्छब्दो ब्रह्मपरश्चेदिदं सामानाधिकरण्यमयुक्तम्। जगत्परश्चेदीक्षणाद्ययोग इत्यर्थः ॥

---

1. नित्यसमावत् जात्युक्तिः किं तु तदर्हाणामेव पृथगुत्पत्त्याद्यपेक्षेत्यर्थः—क

2. वाक्यार्थमाह—क. 3. इत्यादिवाक्यैकार्थत्वात्—क.

4. तथा हीति—ख.

तादात्म्यस्य व्याप्तिहेतुकत्वज्ञापनायोदाहृतवाक्यं विवृणोति — तिस्रः इति। कृत्स्नम् तिस्र इति न्यूनतां व्यावर्तयति। न तु मानान्तरसिद्धमधिकमिति भावः। अचिद्वस्तु — इदंशब्दसमानाधिकरणदेवताशब्दो लक्षणयाऽधिष्ठेयाचित्पर इति भावः। वस्तुशब्दोऽचित्पारमार्थ्यसूचकः। [1]तत्पारमार्थ्यं तु असृजत इति सृज्यत्वोक्तेः॥

स्वात्मक इति। अनेन जीवेनात्मना इति आत्मशब्दः स्ववाचीति भावः। नामरूपे कस्येत्यत्राह— एतत् इति। सन्निहितमेव नामरूपभागिति भावः। विचित्र इति। देवादिव्यष्टिनामरूपे इत्यर्थः। अनेन तेजःशब्द-तेजस्त्वप्रभृतिसमष्टिनामरूपव्यावृत्तिः। समष्टिनामरूपे हि प्रागेव व्याकृते। स्ववाचकस्य आत्मना इति [2]पदस्य जीवविशेषणशङ्काव्युदासाय जीवेन इति पदस्य आत्मविशेषणत्वं दर्शयन्, समष्ट्यवस्थजीवानुप्रवेशव्यावृत्त्यर्थमनुप्रवेशं विशिंषन् जीवस्यापि नामरूपभाक्त्वं दर्शयति — अनेन इति। अत्र एतच्छब्दो जीवविशिष्टाचित्परः। आत्मतया — नियन्तृतया। जीवपरयोः स्वरूपैक्यव्युदासाय स्वात्मकत्वं विवृणोति — स्वात्मनः इति। 'सिंहेन मया' इतिवदित्यर्थः॥

श्रुत्यन्तरेणेदं स्पष्टयति— तत् सृष्ट्वा इति। कार्यदशायां ह्ययमनुप्रवेशः, न तु कारणदशायामित्यत्राह — तदेतत् इति। ततः किमित्यत्राह — अनेन इति। 'सत्' 'इदं' शब्दयोः केवलब्रह्म[3]केवलजगत्परत्वाभावादिति भावः। तपो मुख्यत्वमर्थः। स्पष्टम्। आदिशब्दोपात्तप्रकरणान्तरवाक्यैरनन्यत्वमाह — तथा इति॥

अत्रेदं तत्त्वम् — चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्मैव ...

---

1. तत्पारमार्थ्यं चासृजत-अ.
2. पदस्य जीवविशिष्टाचित्परः —अ. (मध्ये ग्रन्थाभावः।)
3. केवलाचित्परत्वा—अ.

... सदात्मना च सर्वस्य अभिन्नत्वे सर्वज्ञत्वेन सर्वस्वभाव प्रतिसन्धानात् सर्वगुणदोषसङ्करप्रसङ्गश्च पूर्वमेवोक्तः। अतो यथोक्तप्रकारमेव अनन्यत्वम् ॥ १५ ॥ (४३-४६)

विभक्ततमःकार्यं अक्षरादि। तमसः एकीभावश्रवणात् चिदचितोरुत्पत्तिप्रलयश्रवणात्, अग्रे बहुत्वाभावेन शरीरशरीरिभावान्न स्वभावव्यवस्था युक्ता। 'भेदव्यपदेशात्' 'तदनन्यत्वम्' इत्यादिसूत्राणां व्याहतिश्चेत्यत्राह— अत्रेदम् इति। [1] परमात्मनित्यत्वोपादानत्वजीवनित्यत्वबहुत्ववैषम्यादिपरिहारोचितदेहात्मभावश्रुत्यन्यथानुपपत्त्या तदानीमपि चिदचिच्छरीरकत्वसिद्धिरिति भावः ॥

अस्य सूत्रस्य मृषावादिभिरुक्तमर्थं दूषयति — ये तु इति। [2] भास्करोक्तं व्युदस्यति— ये च इति। उपाधिसंबन्धात् इत्यन्तेन चिद्गतदोषसङ्ग उक्तः। हेयाकार इत्यचिद्दोषसङ्गः। न स्वरूपे हेयान्वयः, शक्तेरचिद्रूपपरिणामादित्यत्राह— शक्त इति ॥

यादवप्रकाशोक्तं व्युदस्यति— ये पुनः इत्यादिना। विप्लवः— विकारः। सदैव— कारणदशायामपीति भावः। 'यः सर्वज्ञः सर्ववित् ... तस्मादेतत्' इति हि श्रुतिः। ततः स्वयंभूः इति। भगवच्छब्दः ईश्वरपरः इति भावः। न्यायविरोधमाह— न च इति। सविशेषत्वात्— नियन्तृरूपविशेषवत्त्वात्। न लक्षणा; शक्तौ प्रत्ययविधानात् इत्यत्राह— न च पाचक इति। केषाञ्चिदेव इति। अन्यथा [3] विशेषोपादानवैयर्थ्यमिति भावः। पाचकादिषु शक्त्यर्थत्वं दृष्टमित्यत्राह— पाचक इति ॥

अनुवृत्तं सत्त्वं धर्म इति पक्षे दूषणमाह न च इति। प्रसङ्गादसत्त्वं

---

1. परमात्मनिर्दोषत्वोपादानात्। जीवनिर्जीवनित्यत्व-अ.
2. यादवप्रकाशोक्तं-अ.
3. विशेषोपादानवैधर्म्यम्-क.

शिक्षयति— **विरोधि** इति । द्रव्यपक्षे दूषणमाह— **द्रव्यमेव** इति । द्रव्यसंबन्धः क्रियादेः सत्त्वमित्यत्राह—**क्रियादिषु** इति । सूत्रार्थमुपसंहरति—**अतः** इति ॥ १५ ॥

**अथोच्येत— एकस्यैवावस्थान्तरयोगेऽपि .... ....**

## भावे चोपलब्धेः ॥ २-१-१६ ॥

**कुण्डलादिकार्यसद्भावे च कारणभूत ... ... बुद्धिशब्दान्तरादयोऽवस्थाभेदमात्रनिबन्धना इत्यवगम्यते । तस्मात् कारणादनन्यत् कार्यम् ॥ १६ ॥** (४६–४७)

उत्तरसूत्रशङ्कामाह —**अथोच्येत** इति । **भावे चोपलब्धेः** । 'मृत्तिका' इत्यादेरर्थ इह्योक्तः । सामानाधिकरण्येन प्रत्यभिज्ञा विवक्षिता । **प्रतिसन्धानानुपपत्तेः** । न हि घटस्थेम्भसि घटप्रतिसन्धान[1]मित्यर्थः । चोद्यं शङ्कते — **गोमय** इति । **न तत्रापि** इति । समवाय्यनुवृत्तिवादिना त्वयाऽपि आदिकारणप्रतिसन्धिर्वाच्या इति भावः । स्फुटम् ॥ १६ ॥

इतश्च

## सत्त्वाच्चापरस्य ॥ २-१-१७ ॥

**अपरस्य कार्यस्य कारणे सत्त्वाच्च ...... वेदे च 'सदेव सोम्येदमग्र आसीत्' इति ॥ १७ ॥** (४७)

**सत्त्वाच्चापरस्य** । पूर्वसूत्रे द्रव्यैक्यधीप्रत्यभिज्ञोक्ता; इह तु तथा व्यपदेशः । **व्यपदिश्यते** इति हि भाष्यम् । यद्वा अयं स इत्यभिज्ञोच्यते ॥

---

1. इत्यर्थः । न तत्रापीति—अ.

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च ॥ २-१-१८ ॥

यदुक्तं कारणे कार्यस्य सत्त्वं ... ... 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' इति सुस्पष्टमुक्तम् ॥ १८ ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च । द्रव्यधर्मावियुक्तम् इति । 'व्यवहारयोग्यता हि सत्त्वम्' इत्यादिना । अन्तरशब्दार्थमाह — तत्र इति । अश्रुतवाक्यशेषेषु प्रदेशेषु निर्वाहमाह — तदैकार्थ्यात् इति । स्फुटम् ॥ १८ ॥

इदानीं कार्यस्य कारणादनन्यत्वे निदर्शनद्वयं ... ...

## पटवच्च ॥ २-१-१९ ॥

यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यान्तरादिकं भजन्ते, तद्वत् ब्रह्मापि ॥ १९ ॥ (४८)

अनन्तरसूत्रद्वयकृत्यमाह — इदानीम् इति । इदानीम् — अनन्यत्वे साधिते । अतो न साध्यविकलतेति भावः । निदर्शनद्वयम् इति । लौकिकं वैदिकं च । पटवच्च । बहूनामेकावस्थत्वं [1] निदर्शितम् ॥ १९ ॥

## यथा च प्राणादिः ॥ २-१-२० ॥

यथा च वायुरेक एव शरीरे वृत्तिविशेषैः ... ... परमकारणात् परस्माद्ब्रह्मणोऽनन्यत्वं जगतः सिद्धम् ॥ २० ॥

यथा च प्राणादिः । एकस्य बह्ववस्थत्वं निदर्शितम् । [2] अधिकरणार्थमुपसंहरति — इति इति ॥ २० ॥

इति आरम्भणाधिकरणम्—६

1. दर्शितम्—क. 2. अधिकरणार्थं निगमयति—ख.

## ७. इतरव्यपदेशाधिकरणम् ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २-१-२१ ॥

जगतो ब्रह्मानन्यत्वं प्रतिपादयद्भिः ··· ··· अत इदमसङ्गतं ब्रह्मणो जगत्कारणत्वम् ॥ २१ ॥ (५१-५२)

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः । सङ्कल्पादिकं स्पष्टम् । इत्यादयः इति आदिशब्दात् सुखदुःखभोक्तृत्वम् ॥ २१ ॥

### सिद्धान्तः

इति प्राप्तेऽभिधीयते—

## अधिकं तु भेदनिर्देशात् ॥ २-१-२२ ॥

तुशब्दः पक्षं व्यावर्तयति; आध्यात्मिकादि .... .... सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादिभिः ॥ (५२-५३)

राद्धान्ते — अधिकं तु भेदनिर्देशात् ॥ २२ ॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २-१-२३ ॥

श्रुतिर्दर्शिता । [1] अथ श्रुत्यर्थापत्तिरुच्यते । अश्मादिवच्च तदनुपपत्तिः । अश्मकाष्ठ इति । सामानाधिकरण्ये तुल्येऽपि ऐक्यासंभवाद्धि अविद्यावृत्त्युपगमः । स चेतनेऽपि तुल्य इति भावः । अवस्थितेः इति सूत्रम् एतदधिकरणशेषम् । आदिशब्दात् 'न तु दृष्टान्तभावात्', 'उभयेऽपि हि' इत्यादि विवक्षितम् ॥

---

1. अथ—क.

चित्सामानाधिकरण्यनिर्वाहः कृतः, जगत्सामानाधिकरण्यनिर्वाहमाह — अतः सर्वं इति । [1]न व्यवस्थितिः, अविभागोक्तेरित्यत्राह— सदेव इति । स कथमित्यत्राह— अविभागस्तु इति ॥

ये पुनः इत्यादि । वियुक्तविषयत्वे दोष उक्तः । संसृष्टविषयत्वे दूषणमाह— न च इति । अकल्पितजिज्ञास्यस्वरूपस्य प्रक्रान्तत्वादित्यर्थः ॥

वैलक्षण्यम् [2]'अपीतौ' इत्यत्रोक्तमित्यत्राह— अपीतौ इति । अनुवदति — अस्य शेषत्वेन वदति । तर्हि तत्र कोऽर्थः प्रतिपाद्यः इत्यत्राह— तत्र हि इति । न तत्र विलक्षणयोः कार्यकारणभाव एव प्रतिपाद्यः, [3]असत्कार्यवादनिरासनिदर्शनादित्यत्राह — असद् इति । प्रसङ्गादारम्भणाधिकरणानुवाद इत्यर्थः । इहाभेदश्रुत्यविरोधेन भेदश्रुतिमुख्यार्थत्वं वर्णितम् । 'अपीतौ' इति, 'न तु दृष्टान्त' इति आचिद्गतदोषः, 'इतरव्यपदेशात्' इति चिद्गतदोषश्च परिहृतौ । सामानाधिकरण्यम् 'अवस्थितेः' इति निरूढमिति सूत्रत्रयम् एतदधिकरणशेषम् ॥ २३ ॥

इति इतरव्यपदेशाधिकरणम्—७

---

## ८. उपसंहारदर्शनाधिकरणम् ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २.१.२४ ॥

परस्य ब्रह्मणः सर्वज्ञस्य सत्यसङ्कल्पस्य ··· ··· क्षीरादिष्वातञ्चनाद्यपेक्षा न दध्यादिभावाय । अपि तु शैघ्र्यार्थं रसविशेषार्थं वा ॥ २४ ॥ (५७-५८)

---

1. अव्यवस्थितिः—क. 2. अपीतावित्यत्राह—अ

3. असत्कार्यवादनिरासंदर्शनात्—अ.

सत्यसङ्कल्पत्वादिधर्मैर्हि व्यावृत्तिरुक्ता। तत्र [1] सत्यसङ्कल्पत्वस्यासङ्कोचो निरूप्यत इति सङ्गतिः स्फुटम्। **क्षीरादिषु** इति। रविकरा [2] उत्सर्गमात्रहेतवः, न तु जलस्य हिमरूपपरिणाम इति भावः ॥ २४ ॥

## देवादिवदपि लोके ॥ २-१-२५ ॥

**यथा देवादयः स्वे स्वे लोके ... ... ब्रह्मणो वेदावगतशक्तेः सुखग्रहणायेति प्रतिपत्तव्यम् ॥ २५ ॥** (५८)

**देवादिवदपि लोके।** स्फुटोऽर्थः ॥ २५ ॥

इति उपसंहारदर्शनाधिकरणम्—८

---

### ९. कृत्स्नप्रसक्त्यधिकरणम् ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २-१-२६ ॥

**'सदेव सोम्येदमग्र आसीत्' ... ... अतो ब्रह्मकारणत्वं नोपपद्यते ॥ २६ ॥** (५९–६०)

**कृत्स्नप्रसक्तिः निरवयवत्वशब्दकोपो वा।** प्राक् दृष्टान्तितक्षीरवत् सावयवं वा न वेति शङ्कया सङ्गतिः। इति वचनभङ्ग्या एवमुक्तं भवतीत्यर्थः। **सत्** इति। यावद्बाधं हि सङ्कोचः। इह तदभावादसङ्कुचितमेकपदम् [3] अवयवतोऽपि भेदासहमिति भावः। **अवयवशब्दः** अंशपरः। तत्तच्चिदचिद्विशिष्टप्रदेशभेदस्वरूपं न संभवतीति हृदयम्। **इदं वा** इति। पृथिव्याद्यवयवविभागनिषेधान्निरवयवत्वसिद्धिरिति भावः। **आदि**

---

1. सत्यसङ्कल्पस्यासङ्कोचो—अ.
2. सर्गमात्र—अ.
3. अवयवतो विभेदासहम्—अ.

शब्दात् 'निष्कलम्' इत्यादि गृह्यते। एकशब्दव्याख्यानं निरवयव पदम्। आसीत् इत्यन्तेनोपात्तवाक्यानामर्थ उक्तः॥

फलितमर्थमाह— कारणावस्थायाम् इति। अविभागमेकं निरवयवम्। एकशब्दवाच्यत्वात् निरवयवम्। अत एव निरस्तचिदचिद्विभागम् इत्यर्थः। यद्यपि इति। एकशरीरे शरीरांशः समाप्त इति नान्यत्र स्यादित्यर्थः॥ २६॥

इत्याक्षिप्ते समाधत्ते—

**श्रुतेस्तु शब्दमूलत्वात्** ॥ २-१-२७॥

**तुशब्द उक्तदोषं व्यावर्तयति। .... ... न सामान्यतो दृष्टं साधनं दूषणं वा अर्हति ब्रह्म॥ २७॥** (६०)

श्रुतेस्तु शब्दमूलत्वात्। श्रुतेस्तु इति धर्मविषयम। शब्दमूलत्वात् इति धर्मिविषयम्। मानान्तरागोचरे धर्मिणि स्वमानेन धर्म्यन्तरविजातीयतयाऽवगते तद्धर्मविजातीयधर्मान्वयस्यापि स्वमानेनैव [1] अवगतौ न मानविरोध इत्यर्थः। सामान्यतो दृष्टम्— येन केनचिदाकारेण [2] साम्यनिबद्धम्॥ २७॥

**आत्मनि चैवं विचित्राश्च हि** ॥ २-१-२८॥

**किं च— एवं वस्त्वन्तरसंबन्धिनो ... ... चोद्यं सर्ववस्तुविलक्षणे परे ब्रह्मणि नावतरतीत्यर्थः॥ २८॥** (६०-६१)

आत्मनि चैवं विचित्राश्च हि। तदप्रसक्तिश्च इत्यध्याहारेण सूत्रखण्डयोजना। विचित्रशब्दविशेष्या भावाः। [3] स्फुटार्थत्वात् पुराणवचःप्राथम्यम्। परिचोद्य, यथोक्तम् इत्यन्वयः॥ २८॥

---

1. अनुगतौ-अ. 2. साम्यनिबन्धनम्-अ.
3. स्पष्टार्थत्वात्-अ.

इतश्च

## स्वपक्षदोषाच्च ॥ २-१-२९ ॥

स्वपक्षे—प्रधानादिकारणवादे ... ... संयुज्यमाना अपि न स्थूलकार्यारम्भाय प्रभवेयुः ॥ २९ ॥ (६१)

स्वपक्षदोषाच्च । दर्शनानुगुणम् [1] अनुमीयमानस्यैव [2] लोकदृष्ट-दोषप्रसङ्ग इत्यर्थः ॥ २९ ॥

## सर्वोपेता च तद्दर्शनात् ॥ २-१-३० ॥

सकलेतरवस्तुविसजातीया परा ... ... सर्वमिदमभ्यात्तोऽवाक्य-नादरः' इति च ॥ ३० ॥ (६१-६२)

सर्वोपेता च तद्दर्शनात् । निरवयवत्वश्रुतिबलात् धर्मिवैजात्यविलक्षण-शक्तियोगौ कल्प्यावित्युक्तम् । इह तत्कण्ठोक्तिरिति [3] भिदा । अपहत-पाप्मा इति पाप्मानर्हत्वात् धर्मिवैजात्यसिद्धिः । मनोमयः इति मलिनमनो-ग्राह्य [4] धर्मिवैलक्षण्यसत्यसङ्कल्पत्वफलितत्वात् सर्वशक्तियोगं प्रतिपादयन्ति इत्युक्तम् ॥ ३० ॥

## विकरणत्वान्नेति चेत् तदुक्तम् ॥ २-१-३१ ॥

यद्यप्येकमेव ब्रह्म सकलेतरविलक्षणम् ... ... अपाणिपादो जवनो ग्रहीता' इत्येवमाद्या ॥ ३१ ॥ (६२)

विकरणत्वान्नेति चेत तदुक्तम् । दण्डचक्राद्यनपेक्षत्वेऽपि देहा-

---

1. अनुमिमानस्यैव-अ. 2. लोकदृष्टिदोष-क. 3. भेदः-क.

4. धर्मिवैजात्यम् । सत्यसङ्कल्पफलितत्वात् सर्वशक्तियोगं प्रतिपादयतीत्युक्तम्-क.

यपेक्षाऽत्र परिह्रियते । कार्यं — शरीरम् । सूत्रे करण—उक्तिः प्रदर्शनार्था ॥ ३१ ॥

इति कृत्स्नप्रसक्त्यधिकरणम् — ९

## १०. प्रयोजनवत्त्वाधिकरणम् ॥

### न प्रयोजनवत्त्वात् ॥ २-१ ३२ ॥

यद्यपीश्वरः प्राक्सृष्टेरेक एव ... ... ब्रह्मणः कारणत्वं नोपपद्यते इति ॥ ३२ ॥ (६४-६५)

न प्रयोजनवत्त्वात् । सङ्कल्पादि स्फुटम् ॥ ३२ ॥

एवं प्राप्ते प्रचक्ष्महे —

### लोकवत् तु लीलाकैवल्यम् ॥ २-१-३३ ॥

अवाप्तसमस्तकामस्य परिपूर्णस्य ... ... लीलैव प्रयोजनमिति निरवद्यम् ॥ ३३ ॥ (६५)

लोकवत्तु लीलाकैवल्यम् । केवल इति पणबन्धव्युदासः ॥ ३३ ॥

### वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॥ ॥ २-१-३४ ॥

यद्यपि परमपुरुषस्य सकलेतर .... ... स्वशक्त्या स्वकर्मणैव देवादिवस्तुताप्राप्तिरिति ॥ ३४ ॥ (६५-६६)

वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति । साधारणत्वात् अप्रधानो हेतुर्निमित्तम् यथा क्षित्यादि प्रधानकारणीभूताः इत्युक्तत्वात् । [1]असाधारण्यम् प्राधान्यम् , यथा [2]बीजशक्तिः ॥ ३४ ॥

1. असाधारणं-क. 2. बीजशक्तेः-अ.

## न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाभ्युपलभ्यते च ॥ २-१-३५ ॥

प्राक्सृष्टेः क्षेत्रज्ञा नाम न सन्ति । ... .. विचित्रसृष्टियोगात् ब्रह्मैव जगत्कारणम् ॥ ३५ ॥ (६६)

न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च । अपि शब्दार्थमाह — तदनादित्वेऽपि इति । च–अर्थमाह — अकृत इति ॥

## सर्वधर्मोपपत्तेश्च ॥ २-१-३६ ॥

प्रधानपरमाण्वादीनां कारणत्वे ... ... ब्रह्मैव जगत्कारणमिति स्थितम् ॥ ३६ ॥

इति प्रयोजनवत्त्वाधिकरणम्–१०

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य प्रथमः पादः ॥

सर्वधर्मोपपत्तेश्च । एतत्पादसर्वाधिकरण[1]शेषभूतमिदं सूत्रम् ॥

इति प्रयोजनवत्त्वाधिकरणम्–१०

इति हरिकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥

---

1. शेषमिदं सूत्रम्–अ.

# द्वितीयाध्याये द्वितीयः पादः ॥

## १. रचनानुपपत्त्यधिकरणम् ॥

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च** ॥ २-२-१ ॥

**उक्तं जगज्जन्मादिकारणं परं ब्रह्मेति । ... ... अतस्त्रिगुणं जगत् गुणत्रयसाम्यरूपप्रधानैककारणमिति निश्चीयते ॥** (७०-७२)

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ।** पादप्रकार्थमनुवदन् सङ्गतिमाह —**उक्तम्** इत्यादिना । स्वपक्षे कारणविषयपरोक्तदोषः परिहृतः । परपक्षे [1]कारणविषयदोष उच्यते इति सङ्गतिः । अनेन तृतीयपादस्य द्वितीयत्वशङ्का व्युदस्ता, तस्य कार्यविषयत्वात् ॥

[2]कापिलनिरासप्राथम्ये हेतुमाह — **तत्र** इति । **आदिशब्दात्** चतुर्विंशतितत्त्वाङ्गीकार उच्यते । पौनरुक्त्यमाशङ्कयाह — **ईक्षतेः** इति । तत्सङ्ग्रहश्लोकं व्याचष्टे — **मूलप्रकृतिर्नाम** इति । **उपष्टम्भनम्** — पराभिभवः । येन केनाप्याकारान्तरेण साम्यशङ्काव्युदासायाह — **अन्यून** इति । **निर्धर्मकः** — ज्ञातृत्वरहितः । **निरस्तप्रायः** — तन्निरासः फलित इत्यर्थः ॥

**ते चैवम्** इत्यादिना स्थलशुद्धिः कृता । **भेदानाम्** इत्यादिश्लोकं व्याचष्टे— **अयमर्थः** इति । सरूपकारणकत्वमस्तु, कथं प्रधानसिद्धिरिति शङ्कायां **समन्वयात्** इति पदं व्याचष्टे— **सत्त्वरजस्तमोमय** इति । जगत् विचित्रसन्निवेशत्वात् कार्यम्; कार्यत्वात् सरूपकारणकम् इत्यनुमितिः ।

---

1. कारणदोषः–क.

2. कापिकनिरासप्राथम्यहेतुमाह –ख.

कार्ये सुखदुःखमोहान्वयात् [1] परिमितस्य कारणत्वेऽनवस्थितेश्च प्रधानं कारणमिति पक्षधर्मतावच्छसिद्धम् ॥

**अत्रोच्यते— रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ⋯ ⋯कार्यारंभायैव परिमितत्वमवश्याश्रयणीयम् ॥ १ ॥ (७२–७३)**

**अत्रोच्यते** इत्यादि । अधिष्ठितदार्वादेः चेतनस्य च व्यावर्तकं हेतुपदद्वयम् । प्रत्यनुमानोपयोगिनीं व्याप्तिं शिक्षयति— **यदेवम्** इति । निमित्तानुमिताविव विशेषविरोधप्रसङ्गोपयोगिनीं वा । दृष्टान्तेऽन्वयव्यतिरेकौ दर्शयन् वाक्यार्थमाह— **दार्वादेः** इति । **चकारात्** इति । कार्यान्वितमृदादेरिव सत्त्वादिमयसुखादेः [2] कार्ये अन्वयात् सत्त्वादीनां कारणत्वमिति **यत्**, तत् शौक्ल्यादावनैकान्तिकतया दृष्टमित्यर्थः । **गुणा इति** इति । [3] स्वारस्यं चाभग्नमिति भावः ॥

जगत् प्राज्ञानधिष्ठिताचित्कारणकं न भवति, कार्यत्वात् ; यत् कार्यं, तदभिज्ञाधिष्ठिताचित्कारणकं यथा घटः [4] इत्यनुमा। प्राज्ञाधिष्ठिताचित्कारणकत्वप्रसङ्ग इति वा । ननु एवम् ईश्वरानुमितिनिरासो व्याहतः । कार्यत्वादिना चेतने सिद्धे, इन्द्रियादिसृष्टेः प्राक् तदनपेक्षाधिष्ठातृतया [5] विशेषसिद्धिरिति । नैवम् । [6] विषमावस्थस्य कार्यारंभकदृष्ट्या समावस्थं [7] कारणमसिद्धम् । सिद्धेऽपि न त्वदीप्सितसिद्धिरिति [8] अभ्युपगमेनोक्तः । अनधिष्ठितस्याचितो [9] दार्वादेरिवानारम्भकत्वप्रसङ्ग इति वा ॥

---

1. परिमितस्य कारणत्वेनानवस्थितेश्च क
2. कार्यान्वयात्–क
3. स्वारस्यं चात्युक्तमिति–क.
4. इत्यनुमानम्–क.
5. विशेषसिद्धिरितिवत्–क.
6. विषमावस्थितस्य कार्यारम्भकत्वदृष्ट्या–क
7. कारणं सिद्धम्–अ.
8. अभ्युपगमेनोक्तेः–अ.
9. दार्वादेरनारम्भकत्वं च प्रसङ्गः–अ.

यच्च इत्यादि । अत एव — अनेकत्वादेव । अनेकत्वाभ्युपगमं दर्शयति — साम्य इति । ततः किमित्यत्राह — अतः इति । [1] अपरि-मितत्वात् व्यवस्था इत्यत्राह — न च इति । कथमित्यत्राह — अपरि-मितत्वे हि इति । पृथुकार्यारम्भोऽ[2]नेकेषां संयुक्तपार्श्वैः संयोगवत्त्वात्, [3] तच्च परिमितत्वात्, तच्च वैषम्यात् ; मितानां विषमाणां च सकारणकत्वात्, तेषामपि कारणानामीदृशत्वादनवस्थेत्यर्थः ॥

यत्र रथादिषु स्पष्टं चेतनाधिष्ठितत्वं, ... ...

## पयोऽम्बुवच्चेत् तत्रापि ॥ २-२-२ ॥

यदुक्तं प्रधानस्य प्राज्ञानधिष्ठितस्य ... ... न प्राज्ञाधिष्ठितत्वं पराकृतम्, 'योऽप्सु तिष्ठन्' इत्यादिश्रुतेः ॥ २ ॥ (७३-७४)

अनन्तरसूत्रमवतारयति — यत्र इति । क्षीरादिदृष्टान्तेन प्राज्ञा-नधिष्ठितत्वं साधयसि चेत्, तत् पक्षीकृतमित्याहेत्यर्थः ॥

पयोऽम्बुवच्चेत् तत्रापि । आद्यशब्दात् चक्रभ्रमणव्युदासः । स्पन्दः — अन्यथा भावः, न तु चलनम् । [4] प्रतिप्रति — प्रतिवस्तु गुणोन्मेषविशेषात् । प्रागुक्तेन विरुद्धमिदमित्याशङ्कयाह—उपसंहार इति ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २-२-३ ॥

इतश्च सत्यसङ्कल्पेश्वराधिष्ठानानपेक्ष .... ... क्षिपाम्यजस्र-मशुभानासुरीष्वेव योनिषु ॥" इति च ॥ (७४-७५)

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् । अज्ञाता एव कामाः इति

1. अपरिमितित्वादव्यवस्थेत्यत्राह—अ.
2. अनेकेषां संयुक्तम् । पार्श्वैः—अ.
3. तच्चापरिमितत्वात्—अ.
4. प्रतीति—अ, क.

**अवाप्तसमस्तकामः**। 'अक्ष्णस्' इतिवत्। अवाप्तव्यं नेत्यर्थः। तत्र हेतुः **परिपूर्णत्वम्** गुणविभूत्यादिभिः। विभूत्यादेरनुकूलत्वमाह — **अनवधिक** इति। **निरवद्यस्य** — अकर्मवश्यस्य। **निरञ्जनस्य** — सत्त्वादिरहितस्य। अतः इच्छाद्यभावान्न [1] सर्गादिरित्यर्थः। **परि** इति। परिणामविशेष-प्रतीक्षणान्न स्वातन्त्र्यहानिः तस्य स्वसङ्कल्पाधीनत्वात्। यथासङ्कल्पं प्रवृत्ति-क्षमत्वं हि स्वातन्त्र्यम्॥

**ननु** इत्यादिना कृतं चोद्यं परिहरति — **अनभिज्ञ** इति। कपिला-गमव्यावृत्त्यर्थमाह— **शास्त्रं च** इति। शास्त्राभिज्ञैरुक्तमित्याह— [2] **तथा चाह** इति। **बिभर्ति**— [3] आराधनतया स्वीकरोति। पापस्य तदपचार-रूपत्व[4]ज्ञापनायाह— **तथा च भगवता** इति॥

**स भगवान् पुरुषोत्तमोऽवाप्तसमस्तकामः ··· ··· अतः प्राज्ञा-नधिष्ठितं प्रधानं न कारणम्॥ ३॥** (७५-७६)

एभिर्वचनैः कथं चोद्यपरिहारः कृतः? दयालुः कथमहिते प्रवर्तयति? [5] कर्मसापेक्षनिग्रहानुग्रहत्वे स्वातन्त्र्यहानिः; स्वतन्त्रश्चेत् [6] जीवानां फलान्वयो न स्यात्, स्वतन्त्रकर्तर्येव फलान्वयस्य युक्तत्वात् इत्यत्राह— **स भगवान्** इति। [7] उभयलिङ्गत्वं, तत्कृतवैलक्षण्यं, सापेक्षत्वव्युदासः, फलदानानु-गुणज्ञानादिमत्त्वं च दर्शितं **भगवान्** [8] इत्यादिपदैः। [9] बह्वायासस्य लीलात्वा-योगं व्युदस्यति— **स्वमाहात्म्य** इति। स्वतन्त्रश्चेत् पुण्यापुण्ये विपर्ययेण कल्पयेदित्यत्राह— **एतानि** इति। अनादितद्व्यवस्था च अनादितत्स्वातन्त्र्या-धीनेत्यर्थः॥

---

1. सर्गे इत्यर्थः—क.
2. तथाह-इति भाष्यपाठः।
3. साधनतया—अ.
4. ज्ञापनाय चाह—अ.
5. कर्मसापेक्षत्वनिग्रह—अ.
6. किं जीवानां फलयोगो - क.
7. उभयलिङ्गकत्वं—अ.
8. इत्यादिपदेन—अ.
9. बाह्वायासस्य- क.

सर्वप्रवृत्तेः तदिच्छाधीनत्वे जीवानां न फलान्वयः स्यादित्यत्राह — तदुपादान इति । प्रवृत्तस्य प्रवर्तकः अनुमन्ता । परापेक्षा दर्शिता । जीवानां स्वातन्त्र्यावकाशं दर्शयति — क्षेत्रज्ञास्तु इति । स्वयमेव प्रथमप्रवृत्तितदनुगुणेच्छाज्ञानेषु भगवानुपेक्षक इत्यर्थः । ततः किमित्यत्राह — अतः स्वातन्त्र्य इति । आदिशब्दान्निर्दयत्वमुक्तम् । जीवानां फलान्वयायोगश्च । दयास्वरूपं शिक्षयति — दया हि इति । उपजीविनामुपजीव्यदुःखासहिष्णुत्वव्यावृत्त्यर्थमाह — स्वार्थ इति । तस्या अस्थाने [1] दोषमाह — सा च इति । तर्हि साऽनवकाशेत्यत्राह — स्वशासन इति । प्रीतिपूर्वकं ददामि इत्यन्वयः, सततयुक्तानाम् इति क्तस्याशंसार्थत्वात् । न चेत् भजताम् इति पुनरुक्तिः ॥

सामान्येन धारकत्वकरणकलेवरप्रदत्वानुमन्तृत्वफलप्रदत्वैरीश्वरापेक्षत्वात् सर्वतादधीन्यम् । प्रवृत्तिविशेषेषु जीवस्य स्वातन्त्र्यात् फलान्वयः । न च कृत्स्नस्य ईश्वराधीनत्वहानिः, तत्स्वातन्त्र्यस्यापि तदधीनत्वात् । न च व्याहतिः । अमात्यादिस्वातन्त्र्यस्य नृपाधीनत्वदृष्टेः । फलान्वयश्चामात्यादेः । ईश्वरः प्रथमप्रवृत्तावुपेक्षकः, ततोऽनुमन्ता । उन्मस्तकप्रीत्यप्रीतिकारिषु प्रयोजयिता च उपेक्षा च स्वातन्त्र्यात् । तच्च न दोषः । [2] धर्मिग्राहकत्वात् । अनुमतिश्च दण्डकल्पा । नृपादिषु दृष्टेः । दया चेन्न गुणः, निग्रहश्चेन्न दोषः अस्थानपातिनोस्तयोः विपरीतरूपत्वदर्शनात् । ततो [3] हेतुरनैकान्तः । राज्ञो दण्ड्यदण्डनं शास्त्रवश्यत्वात् गुण इति चेत् दयाऽपि [4] तथेत्यशास्त्रवश्ये ईश्वरे यथाशास्त्रं गुण इत्युपेत्यम् । दयावकाशस्तु दर्शित इति न काऽप्यनुपपत्तिः । उपसंहरति — अतः इति । अतः — ब्रह्मकारणवादस्य निर्दोषत्वात् । तत्रैव दोषस्थितेरित्यर्थः ॥ ३ ॥

---

1. दोषत्वमाह–अ.  2. धर्मिग्राहकात्–अ.
3. हेतुरनैकान्तिकः (?)  4. तथैवेत्यशास्त्र–अ.

अथ स्यात्— यद्यपि प्राज्ञानधिष्ठितायाः ··· ···

## अन्यत्राभावाच्च न तृणादिवत् ॥ २-२-४ ॥

नैतदुपपद्यते । तृणादेः ··· ··· अत्र प्रपञ्चितं तत्रैव व्यभिचारप्रदर्शनाय ॥ ४ ॥ (७६)

उत्तरसूत्रशङ्कामाह--- अथ स्यात् इति । केवलदार्वादिव्यवच्छेदाय चित्सन्निधिरेवालम्, न तु सङ्कल्पविशेषवत्पुरुषापेक्षेति भावः । गवि [1] सुप्तायामपि तद्भुक्ततृणादेः क्षीरत्वापत्तिदर्शनात् । न च तदपि पक्षीकार्यम् । तावता कार्ये संभवति, [2] अधिकक्लृप्तिरयुक्तेति भावः ॥

अन्यत्राभावाच्च न तृणादिवत् । अनडुदाद्युपयुक्तं प्रहीणं वा इति पदद्वयेन चित्सन्निधिमात्रवतः केवलस्य चाचितः परिणामे दृष्टान्तत्वं दूषितम् । सङ्कल्पविशेषान्वितचेतनविशेषाधिष्ठानं तु परानिष्टमित्यभिप्रेतम् प्राज्ञानधिष्ठितम् इति पदेन प्रपञ्चितम् । केवलदार्वादिव्यवच्छेदकेन सङ्कल्पाद्यशक्तचित्सन्निधिमात्रेण परिणामे [3] दृष्टान्तोऽस्तीत्यधिका शङ्काऽत्र परिहृतेति भावः ॥ तत्रैव—पयोदृष्टान्ते एव ॥ ४ ॥

## पुरुषाश्मवदिति चेत् तथाऽपि ॥ २-२-५ ॥

अथोच्येत — यद्यपि चैतन्यमात्रवपुः ... ... नित्यमुक्तत्वेन बन्धाभावोऽपवर्गाभावश्च ॥ ५ ॥ (७६-७७)

पुरुषाश्मवदिति चेत् तथाऽपि । उपभोगशब्देन दर्शनशब्दो व्याख्यातः । विभुत्वात् समीपगमनानपेक्षा चेत् नित्यसर्गप्रसङ्गः उक्तः ॥

1. सुषुप्तायामपि—अ.
2. अधिकक्लृप्त्ययुक्तेः—अ.
3. दृष्टान्तो नास्तीत्यधिकशङ्का—अ.

## अङ्गित्वानुपपत्तेश्च ॥ २-२-६ ॥

गुणानामुत्कर्षनिकर्षनिबन्धनाङ्गाङ्गिभावाद्धि ... ... अतश्च न प्राज्ञानधिष्ठितं प्रधानं कारणम् ॥ ६ ॥　　(७७)

अङ्गित्वानुपपत्तेश्च । [1] एवमन्तेन परोक्तानुमितेर्विशेषविरोध उक्तः ॥

## अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ २-२-७ ॥

दूषितप्रकारातिरिक्तप्रकारान्तरेण ... ... अतो न कथञ्चिदप्यनुमानेन प्रधानसिद्धिः ॥ ७ ॥　　(७७)

[2] अनुमानान्तरेऽप्युक्तमतिदिशति—अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् । ज्ञातृत्वे सति हि सङ्कल्पादधिष्ठात्रन्तरानपेक्षप्रवृत्तिसंभवः । तच्च नेति नित्यसर्गप्रसङ्गः इत्यर्थः ॥ ७ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ २-२-८ ॥

अनुमानेन प्रधानसिद्ध्यभ्युपगमेऽपि ··· ··· प्रकृतिसन्निधानस्य नित्यत्वेन कदाचिदप्यपवर्गो न सेत्स्यति ॥ ८ ॥　　(७७-७८)

अभ्युपगमेऽप्यर्थाभावात् । नित्यनिर्विकारस्य भोगापवर्गायोग उक्तः ॥ ८ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ २-२-९ ॥

विप्रतिषिद्धं चेदं सांख्यानां दर्शनम् । ··· ··· ब्रह्मणोऽयमेव स्वभाव इत्युपाधिसंबन्धाद्यनुपपत्तेरसामञ्जस्यं पूर्वमेवोक्तम् ॥ ९ ॥　　(७८-८०)

---

1. एवमनेन-क.　　2. अनुमान्तरे-अ.

तथाऽपि तदभ्युपगमशङ्कायामनन्तरसूत्रम् — **विप्रतिषेधाच्चासमञ्जसम्** । परार्थत्वप्रतियोग्याकारः **अधिष्ठातृत्वं** — स्वातन्त्र्यम् ; **साक्षि**स्वरूपेण अनुसन्धाता । **द्रष्टा**— इन्द्रियादिभिः । **त्रिगुणादिविपर्ययात्**— त्रिगुणतत्कार्यस्य जडस्य अधिष्ठातृत्वायोगात् । **कैवल्यार्थप्रवृत्तेश्च**— न हि त्याज्यमेव त्यागकर्ता । उक्तार्थेषु विप्रतिषेधं दर्शयति— **साक्षित्व** इत्यादिना । **स च** इति । **चेतनधर्म**त्वात् न प्रकृतेः **विकार**त्वाच्च पुरुषस्येत्यर्थः । **पुरुषस्य स्वात्मदर्शनम्** इति । [1]पुरुषकर्तृकदर्शनम् । स्वकर्तृकत्वेन **नाध्यस्यति च** इत्यर्थः ॥

सांख्यपक्षनिरासो मृषावादिनां [2]स्वकण्ठग्राहीत्याह — **येऽपि इति** । नित्यनिर्विकारत्वात् अध्यासाद्यनुपपत्तिः । **दृश्यत्वबाध्यत्वाभ्युपगमात्** इति । अविद्यानुभवतद्बाधकज्ञानरूपविकारौ नोपपद्येते इत्यर्थः । **अयमेव**— निर्विकारत्वनिर्दोषत्वादिरेव । उभयलिङ्गकत्वश्रुतिविरोधोऽभिप्रेतः । यद्वा उपाधिसंबन्धित्वात् सदुःखम् ; [3]बृहत्त्वात् दुःखप्रतिभटम् इत्येवं **विरुद्धोऽयं** स्वभावः स्यादिति **असामञ्जस्यम्** इत्यर्थः ॥ ९ ॥

इति रचनानुपपत्त्यधिकरणम्— १

---

## २. महद्दीर्घाधिकरणम् ॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २-२-१० ॥

**प्रधानकारणवादस्य युक्त्याभासमूलतया ... ... तदभ्युपगतं सर्वमसमञ्जसमित्येव सूत्रार्थः ॥ १० ॥** (८४)

---

1. पुरुषकर्तृकत्वदर्शनम्–अ
2. स्वकर्णग्राहीत्याह–अ.
3. ब्रह्मत्वात–अ.

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् । प्रकृति परमाण्वोरानुमानिकत्वात् तन्निरासौ सङ्गतौ । [1]द्व्यणुकत्रयाद्धि त्र्यणुकोत्पत्तिः, न तु द्व्यणुकपरमाणुभ्यामित्यत्राह—परमाणुभ्यः इति । अणुह्रस्वस्यापि प्रदर्शनार्थं महद्दीर्घोपादानमित्यर्थः, महद्दीर्घाणुह्रस्वोत्पत्तिवत् इति वक्ष्यमाणत्वात् । सर्षपमहीधरयोरेवासिद्धेः इति । सांशत्वे अवयवानन्त्यात् वैषम्याद्यधर्मासिद्धिः । तत्परिजिहीर्षया निरंशत्वे धर्मिणोरेव सर्षपमहीधरावयविनोः असिद्धिरित्यर्थः । किं कुर्मः ? किं मतमवलम्बनीयमित्यर्थः । वैदिकः — युक्तिबाधागोचरः इति भावः [2] । असङ्गतम्— पादासङ्गतम् । असङ्गतिपुनरुक्ती ग्रन्थद्वयेनोपपादयति— ब्रह्म इत्यादिना ॥ १० ॥

[3] किमत्रान्यदसमञ्जसमित्यत्राह—

## उभयथाऽपि न कर्मातस्तदभावः ॥ २-२-११ ॥

परमाणुकारणवादे हि ··· ··· अतो जगदुत्पत्तेरणुगतकर्मपूर्वकत्वाभावः ॥ ११ ॥ (८५)

अनन्तरसूत्रस्य शङ्कामाह— किमत्र इति । उभयथाऽपि न कर्मातस्तदभावः । आत्मगतस्य इति । व्यधिकरणत्वादित्यर्थः । विपाकः— फलाहदशा ॥ ११ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ २-२-१२ ॥

समवायाभ्युपगमाच्चासमञ्जसम् ... ... समवायमभ्युपगम्य तस्यैव स्वभाव इति कल्पयितुं युक्तम्— इति ॥ १२ ॥ (८५-८६)

---

1. द्व्यणुकत्रयात् त्र्यणुक—अ. 2. भावः । आत्मगतस्य—अ. अत्र मूलतालपत्रकोशे ११७-एकं पुटं नास्ति इति मातृकायां लिखितं वर्तते ।
3. किमन्यत् इति पाठभेदः ।

समवायाभ्युपगमाच्च साम्यादनवस्थितेः । [1] अवयवादीनां कथमुपपादकापेक्षा ? कथमस्य तत्सामर्थ्यं स्वपरनिर्वाहकस्येत्यत्राह— एतदुक्तम्— इति ॥ १२ ॥

समवायस्य नित्यत्वे अनित्यत्वे च .... ...

## नित्यमेव च भावात् ॥ २-२-१३ ॥

समवायस्य संबन्धत्वात् ... ... जगतश्च नित्यमेव भावादसमञ्जसम् ॥ १३ ॥ (८६)

**नित्यमेव च भावात्** । ततश्च नित्यत्वात् कारणभूतपरमाण्वीश्वरक्लृप्तिरयुक्तेति भावः ॥ १३ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ २-२-१४ ॥

परमाणूनां पार्थिवाप्यतैजस .... ... रूपादिमत्त्वं त्वया कल्प्यते । अतोऽप्यसमञ्जसम् ॥ १४ ॥ (८६)

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात्** । परमाणूनामयं विशेषो यन्नित्यत्वादिना घटादवैधर्म्यमित्यत्राह— न हि इति ॥ १४ ॥

अथैतद्दोषपरिजिहीर्षया परमाणूनां ... ...

## उभयथा च दोषात् ॥ २-२-१५ ॥

न केवलं परमाणूनां रूपादिमत्त्वाभ्युपगम ... ... पूर्वोक्तदोष इत्युभयथा च दोषादसमञ्जसम् ॥ १५ ॥ (८६-८७)

**उभयथा च दोषात्** । अन्यथा इत्यनुक्तत्वात् शिरोन्तरं नेति भावः ॥ १५ ॥

---

1. अवयव्यादीनां कथमुपकारकापेक्षा—अ.

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २-२-१६ ॥

**कापिलपक्षस्य श्रुतिन्यायविरोध … … अत्यन्तमनपेक्षैव निःश्रेयसार्थिभिः कार्या ॥ १६ ॥** (८७)

**अपरिग्रहाच्चात्यन्तमनपेक्षा । अत्यन्तशब्दव्यावर्त्यमाह — कापिल** इति। श्रुतिविरोधो दूषणतयोक्तः। १६ ॥

इति महद्दीर्घाधिकरणम्-२

---

## ३. समुदायाधिकरणम् ॥

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २-२-१७ ॥

**परमाणुकारणवादिनो वैशेषिकाः …. …. स च ज्ञातिवेति चोपपादितं पुरस्तात् ॥ १७ ॥** (८९-९०)

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।**

[1] परमाणुषु चातुर्विध्यैकान्तत्वोपगमसाम्यात् सङ्गतिः। सौगतेषु परमाणुकारणवादिनो विवेक्तुं [2] तद्विधाभेदं दर्शयति — **ते च** इति। अणूपगमवतोर्द्वयोः प्रस्तावात् इतरयोस्तत्साजात्यात् सङ्गतिरिति भावः ॥

**चित्त** इति। **चित्तं** — विज्ञानसन्तानः। **चैत्तं** — रागादिकम्। रूपस्कन्धोऽपि चित्तविषयत्वात् चित्तचैत्तान्तर्गत इति वाचस्पत्यादयः। रूपस्कन्धव्यतिरिक्तस्कन्धचतुष्टयं चित्तचैत्तान्तर्गतमिति भास्करीये। भूतेन्द्रियविषयो **रूपस्कन्धः**। अहमिति ग्राहकत्वाभिमानारूढो ज्ञप्तिसन्तानः **विज्ञानस्कन्धः**। प्रियाप्रियानुभवजनितसुखदुःखस्य चित्तस्य अवस्थाविशेषः—

---

1. परमाणुचातुर्विध्य-क. 2. चतुर्विधभेदं-क.

**वेदनास्कन्धः** । सविकल्पकप्रत्ययः — **संज्ञास्कन्धः** । रागद्वेषादयः — **संस्कारस्कन्धः** । **तत्प्राप्तिः** — समुदायत्वप्राप्तिः । व्याप्रियन्त इति **व्यापारः** — चलनम् । किंशब्दः क्षेपे । **स्पृशति** — इन्द्रियेण [1] संबन्धं करोति । **कदा** — न कदाचित् । तदेवोपपादयति — **स्पृष्ट्वा हि** इति । ततः किमित्यत्राह — **कथम्** इति । [2] ज्ञानस्यात्मत्वमयुक्तमित्याह — **अहमर्थ एव** इति । **उभयहेतुक**पदं न [3] बाह्यान्तरहेतुकत्वपरम् । चित्त-चैत्तानां [4] सङ्घातत्वायोगात् । अतोऽर्थान्तरोक्तिः ॥ १७ ॥

## इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घात-भावानिमित्तत्वात् ॥ २-२-१८ ॥

**अविद्यादीनामितरेतरहेतुत्वेनोपपन्नं … … संस्कारानुवृत्तिरपि न शक्या कल्पयितुम्** ॥ १८ ॥ (९१)

**इतरेतरप्रत्ययत्वादुपपन्नमिति चेन्न सङ्घातभावानिमित्तत्वात्** । अयं सम्यक् पाठः । **आदिशब्दात्** [5] ज्ञानविषयत्वव्यवहारग्रहणम् । **अविद्यादयः के**, कथं तेषामन्योन्यहेतुत्वं कथं च तेन [6] संघटितभावोपपत्तिः इत्यत्राह — **एतदुक्तम्** इति । **एतच्च** इति । **एतत्**—अविद्यादिभिः सङ्घातः, सङ्घातादविद्या इत्युपलभ्यमानं चक्रकम् अविद्यादिहेतुभूतसङ्घातानभ्युपगमे नोपपद्यत इत्यर्थः । **शुक्ति** इति । न हि शुक्तौ रजतभ्रमः शुक्तिद्वयसंहतिहेतुरित्यर्थः । सूत्राभि-प्रेतमाह — **किं च** इति । संस्कारेणेति चेत् तत्राह — **संस्काराश्रयम्** इति ॥ १८ ॥

---

1. 'संबद्धं करोति' इति श्रुतप्रकाशिकायाम् ।
2. ज्ञानस्य चात्मत्वम्-क 3. बाह्याभ्यन्तरहेतुत्वपरं-क.
4. संख्यातत्वायोगात्-क. 5. ज्ञानविषयव्यवहार-क.
6. सङ्घातभावोपपत्तिः-क.

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २-२-१९ ॥

**इतश्च क्षणिकत्वपक्षे जगदुत्पत्तिः ... ... न कस्यचिदर्थस्य ज्ञानविषयत्वं संभवति ॥ १९ ॥** (९१-९२)

**उत्तरोत्पादे च पूर्वनिरोधात्।** घटक्षणस्तद्देशसन्तानस्थघटक्षणान्तरहेतुरिति चायुक्तम् । देशान्तरनयने [1] घटक्षणादुत्पत्तिप्रसङ्गादिति भावः । उत्पत्तावुक्तो दोषो ज्ञप्तावपि तुल्य इत्याह — **किं च** इति ॥ १९ ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २-२-२० ॥

**असत्यपि हेतौ कार्यमुत्पद्यते .... .... इन्द्रियसंप्रयोगज्ञानयोर्यौगपद्यं प्रसज्येत ॥ २० ॥** (९२)

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा।** क्षणिकत्वं [2] **स्थितमेवेति चेत्** इति । उत्तरक्षणः पूर्वक्षणवर्तीति चेदित्यर्थः । दूषयति — **इन्द्रियस्य** इति । [3] कार्यकारणभावभङ्गप्रसङ्ग इत्यर्थः । ज्ञानतत्कारणयौगपद्यापादनमर्थेष्वपि घटादिषु प्रदर्शनार्थम् ॥ २० ॥

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २-२-२१ ॥

**एवं तावदसत उत्पत्तिर्निरस्ता ... ... तत्रापि अवस्थान्तरापत्तिकल्पनस्यैव युक्तत्वात् ॥ २१ ॥** (९२-९३)

**प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् । प्रतिपादितः** इति । अनुपलब्धिकल्पकान्यथासिद्धिभ्यामित्यर्थः । **निश्चिते** — अबाधितप्रत्यभिज्ञयेति भावः ॥ २१ ॥

---

1. घटक्षणानुत्पत्ति-क. 2. स्थिरमेवेति-ख.
3. कार्यकारणभङ्गप्रसङ्गः-क.

## उभयथा च दोषात् ॥ २-२-२२ ॥

क्षणिकत्ववादिभिरभ्युपेता तुच्छादुत्पत्तिः ··· ··· न भवदुक्त-प्रकाराबुत्पत्तिनिरोधौ ॥ २२ ॥

उभयथा च दोषात् । न च प्रतीयते, तुच्छतया इति शेषः ॥

## आकाशे चाविशेषात् ॥ २-२-२३ ॥

बाह्याभ्यन्तरवस्तुनः स्थिरत्व ... ... पञ्चीकरणेन रूपवत्त्वात् चाक्षुषत्वेऽप्यविरोधः ॥ २३ ॥ (९३-९४)

आकाशे चाविशेषात् । क्षणिकत्वनिरासानुपयोगात् प्रसङ्गात् सङ्गतिः ॥ २३ ॥

## अनुस्मृतेश्च ॥ २-२-२४ ॥

पूर्वंप्रस्तुतं वस्तुनः स्थिरत्वमेव ··· ··· न ह्यन्येनोपक्रान्त-मजानद्भिः अन्यैः समापयितुं शक्यम् ॥ २४ ॥ (९४-९५)

अनुस्मृतेश्च । तच्च इति । तर्कानुगृहीतप्रत्यभिज्ञा बलीयसीति भावः । प्रत्यक्षानुमित्योः [1] साधारणं दूषणमुक्तम् । प्रत्यक्षं प्रतिवक्ति — किं च इति । [2] व्यावृत्तिर्गमयति इति गम्यगमकत्वनिर्देशो [3] लोकप्रसिद्ध्यनुसारात् । वर्तमानकालयोग एव हि अवर्तमानात् व्यावृत्तिः । [4] पूर्वोत्तरावस्थातो वर्तमानत्वावस्थाभेदश्चेति क्षणिकत्वसाधकतयोच्यते । एकस्य

1. साधारणं प्रयुक्तम्-अ. 2. व्यावृत्तिगम्या इति-अ.

3. लोके प्रसिद्ध्यनुसारात्-क.

4. पूर्वोत्तरत्वावस्थान्वितो वर्तमानत्वाविशिष्टता, वर्तमानत्वविषयधियोऽवस्थावत् भेदविषयत्वाभ्युपगमादित्यर्थः । अभिमतविपरीतेति-अ.

नीलत्वोत्पलत्वयोगवत् कालद्वयस्यो विरोधात् न क्षणिकत्वसाधकता । **अभिमतविपरीत** इति । विपर्ययेणापि [1] व्याप्तिसंभवात् विरुद्धार्थस्यापि साधकमिति । **विरुद्धम्** — विपरीतम् । प्रकरणसममित्यर्थः ॥

अर्थक्रियाकारित्वं विरुद्धमेवेत्याह— **किं च** इति । घटक्षणसत्त्व-हेतोः सोपाधिकत्वमाह— **तथाऽन्यत्य** इति । **पूर्वं** इति । [2]न ह्यन्यदवभास्यम्, अन्यो विषयः । अतिप्रसङ्गादित्यर्थः । प्रत्यभिज्ञायाः संस्कार-सचिवेन्द्रियं सामग्री । एकस्य कालद्वयसंबन्धो विषयः । **तथेदम्** इति [3] परार्थानुमित्ययोग उक्तः ॥ २४ ॥

## नासतो दृष्टत्वात् ॥ २-२-२५ ॥

**एवं तावत् सौत्रान्तिकवैभाषिकयोः ... ... ज्ञानवैचित्र्य-मर्थस्य ज्ञानकालेऽवस्थानादेव भवति ॥ २५ ॥**　　(९५-९६)

**नासतो दृष्टत्वात्** । **उत्तरोत्पादे** इत्यादिसूत्रषट्कं दृष्टानुबन्धि-दूषणपरमिति, तदनन्तरं तत्परिहाराय सौत्रान्तिकावसरः । स एव योगा-चारमतमाशङ्क्याह — **न च पूर्वं** इति । **अत्र** इत्यादि । **प्रतिबिम्बादि** इति **आदि**शब्देन स्फटिके जपाया इव छायापत्तिर्विवक्षिता ॥ २५ ॥

पुनरपि साधारणं दूषणमाह —

## उदासीनानामपि चैवं सिद्धिः ॥ २-२-२६ ॥

**एवं क्षणिकत्वामदुत्पत्त्यहेतुक ... ... उदासीनानामप्यैहिका-मुष्मिकफलं मोक्षश्च सिद्ध्येत् ॥ २६ ॥**　　(९६)

1. व्याप्तिसद्भावात् इति श्रुतप्रकाशिकायाम् ।
2. न सत्यवदवभास्यमानो विषयः—क.
3. प्रत्यक्षानुमित्ययोगः—क.

उदासीनानामपि चैवं सिद्धिः। प्रसङ्गस्यानिष्टत्वमाह— **इष्टप्राप्तिः** इति। संस्कारादिः स्वर्गाय; विद्यादिः मोक्षाय ॥ २६ ॥

इति समुदायाधिकरणम्—३

## ४. उपलब्ध्यधिकरणम् ॥

## नाभाव उपलब्धेः ॥ ॥ २-२-२७ ॥

**विज्ञानमात्रास्तित्ववादिनो योगाचाराः ... ... द्रव्यत्वमविरुद्धमित्युक्तम्। अतो न बाह्यार्थाभावः ॥ २७ ॥** (१०१-१०२)

**नाभाव उपलब्धेः**। वैचित्र्यं कथमित्यत्राह— **तच्च** इति। विजातीयज्ञानोत्पत्तिः कथमित्यत्राह — **यद्घटाकार** इति। यथा **अर्थस्य** विजातीयोत्पादकत्वमभ्युपगतम् तद्वदिति भावः। **ज्ञानार्थयोः** इति। यथा चन्द्रयोरिति भावः ॥

**एवं प्राप्ते** इति। **एवंरूपेण** इति। ज्ञानेतरापारमार्थ्यं [1] किमनेन वा ज्ञानान्तरेण वा साध्यते? प्रथमेऽपरोक्षतया भातत्वाविशेषात् ज्ञानमपि तथा किं न स्यात्। द्वितीयमनुपलब्धिहतमिति भावः ॥

सहधीनियमं परिहरति— **यत् तु** इति। अभेदहेतुनियमोऽतीव भेदसाधक इत्याह — **तत्** इति। **संबन्धश्च** इति। **संबन्धः** — साक्षात्संबन्धः। द्रव्यस्य कथं नियतप्रकारत्वमित्यत्राह— **प्रभा** इति ॥ २७ ॥

**यत् परैः स्वप्नज्ञानदृष्टान्तेन ... ...**

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २-२-२८ ॥

---

1. किमनेनैव—क.

**स्वप्नज्ञानवैधर्म्यात् जागरित ···· ···· ज्ञानत्वस्यानैकान्त्यात् सुतरामर्थशून्यत्वासिद्धिः ॥ २८ ॥** (१०२)

अनन्तरसूत्रमवतारयति— **यत् परैः** इति । **वैधर्म्याच्च न स्वप्नादिवत्** । स्वप्नार्थमिथ्यात्वाभ्युपगमेनोक्तम् । तत्सत्यत्वं हि वक्ष्यते सूत्रकारैः ॥

## न भावोऽनुपलब्धेः ॥ २-२-२९ ॥

**न केवलमर्थशून्यस्य ज्ञानस्य ··· ··· नार्थशून्यत्वमिति ख्यातिनिरूपणे प्रतिपादितम् ॥ २९ ॥** (१०२)

**न भावोऽनुपलब्धेः । क्वचिदपि** इति । **सुप्तौ** धर्मिस्फुरणमेव, न तु धर्मधीस्फुरणमिति भावः ॥ २९ ॥

इति उपलब्ध्यधिकरणम्—४

## ५. सर्वथानुपपत्त्यधिकरणम् ॥

## सर्वथाऽनुपपत्तेश्च ॥ २-२-३० ॥

**अत्र सर्वशून्यवादी माध्यमिकः ···· ··· सर्वथा सर्वशून्यत्वं चानुपपन्नम् ॥ ३० ॥** (१०४-१०५)

**सर्वथाऽनुपपत्तेश्च । प्रयोजनाभावाच्च** इति । **स्वसत्ता ह्युत्पत्तेः** फलम् । सा प्रागेवास्तीति नोत्पत्तेः फलमित्यर्थः । **इति प्राप्ते** इति । **सत्** इति । दृष्टान्तार्थमुक्तम् । घटः स्वापेक्षया सन्, कपालापेक्षया असन् । अतः सदसदात्मकत्वं च युक्तम् । [1] अनुभयात्मकं च घटो हि स्वापेक्षया नासन्; [2] कपालापेक्षया न सन् अनुभयात्मकं नेति तु उभयात्मकसदसदिति

1. अनुभवात्मकं—ख.    2. कपालापेक्षया असन्- क.

उक्तं स्यात् इत्यवस्थाविशेषयोगात् तुच्छत्वासिद्धिः । सर्वथा-शब्देन [1] मानकल्पनानुपपत्तिश्चाभिप्रेता इति मन्वान आह — किं च इति । अधिकरणत्रयात्मकः सौगतनिरासः ॥ ३० ॥

इति सर्वथाऽनुपपत्त्यधिकरणम् — ५

---

## ६. एकस्मिन्नसंभवाधिकरणम् ॥

## नैकस्मिन्नसंभवात् ॥ २-२-३१ ॥

**निरस्ताः सौगताः । जैना अपि ... ... ईश्वरानधिष्ठित-परमाणुकारणवादे पूर्वोक्तदोषास्तथैवावतिष्ठन्ते ॥ ३१ ॥** (१०७-१०८)

**नैकस्मिन्नसंभवात्** । एकान्तत्वात् चातुर्विध्योपगमसाम्यात् काणाद-सौगतनिरासयोः सङ्गतत्वात् सौगतानन्तरमार्हतनिराससङ्गतिः । **स्थिति-हेतुभूतः** — स्थावरत्वादिहेतुः अप्रवृत्तिकर इत्यर्थः । तत्प्रयुक्त[2]सुखदुःखोपेक्षा इत्येकराशिः । अन्यथा चतुष्टयायोगात् ॥

राद्धान्ते — [3] आकारभेदादविरोध इत्यत्राह — **एतदुक्तम्** इति । द्रव्यावस्थयोर्भिन्नत्वपक्षे दूषणमाह — **द्रव्यस्य** इति । [4] तयोरभेदे नाकार-भेदादविरोधसिद्धिः । भेदाभेदे [5] त्वाकारान्तरापेक्षयाऽनवस्थेति [6] प्रागुक्तत्वान्न कण्ठोक्तम् । प्रस्तुतविरोधः कथमित्यत्राह — **तथा हि** इति । [7] सत्त्वासत्त्व-

---

1. मानविकल्पानुपपत्तिः-अ.
2. सुखदुःखापेक्षाहेतुरित्येकराशिः-अ.
3. आकारभेदादपि विरोधः-क.
4. तयोरभेदे आकारभेदादविरोधासिद्धिः-अ.
5. त्वाकारान्तरापेक्षयाऽनवस्थितिः-क.
6. प्रागुक्तत्वाच्च-अ. 7. सत्यत्वासत्यत्व-अ.

नित्यत्वानित्यत्वभिन्नत्वाभिन्नत्वविरोधा उपपादिताः । **पदार्थविशेषणतयैव** इति । [1] सहोपलब्धिनियमाभिप्रायेणोक्तम्, न तु जात्यादिवत् एकाश्रयत्वाभिप्रायेण सर्वपदार्थविशेषणतया कालाणुत्वनिरासः फलितः । एकस्मिन् काले [2] अनेके पदार्थाः सन्तीति [3] कालविशिष्टप्रतीतिः । **अनैकान्त्यस्य** [4] व्यभिचारमाह — **किं च** इति ॥ ३१ ॥

## एवं चात्माकार्त्स्न्यम् ॥ २-२-३२ ॥

**एवं भवदभ्युपगमे सति ... ... अकार्त्स्न्यं प्रसज्यते अपरिपूर्णता प्रसज्यते इत्यर्थः ॥ ३२ ॥** (१०८)

एवं चात्माकार्त्स्न्यम् । **असंख्यातप्रदेशः** — एकरूपसंख्याहीनदेशः । अनियतप्रदेश इत्यर्थः ॥ ३२ ॥

**अथ सङ्कोचविकासधर्मतया ... ...**

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २-२-३३ ॥

**न च सङ्कोचविकासरूप .... ... दोषप्रसक्तेः घटादितुल्यत्वप्रसङ्गात् ॥ ३३ ॥** (१०८-१०९)

अनन्तरसूत्रशङ्कामाह — **अथ** इति । **न च पर्यायादप्यविरोधो विकारादिभ्यः** । **विकारः** — उत्पत्त्यादिः । तेन परिमितकालवर्तित्वम् — **अनित्यत्वम्** ॥ ३३ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २-२-३४ ॥

---

1. सहोपलब्धनियम-क.
2. अनेकपदार्थाः-क.
3. काले हि विशिष्टप्रतीतिः-अ.
4. व्यभिचारानाह-अ.

जीवस्य यदन्त्यं परिमाणम् ... ... असङ्गतमेवेदमार्हतमतम् ॥ ३४ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः । यथा स्वरूपं मुक्तिदशास्थायि पूर्वमपि सत् । एवमन्त्यपरिमाणमपि मोक्षस्थायित्वात् पूर्वमपि सदिति [1] न देहपरिमाणत्वसिद्धिरित्यर्थः ॥ ३४ ॥

इति एकस्मिन्नसंभवाधिकरणम्——६

---

## ७. पशुपत्यधिकरणम् ॥

### पत्युरसामञ्जस्यात् ॥ २-२-३५ ॥

कपिलकणादसुगतार्हतमतानाम् .... ... कापालं व्रतमास्थाय यतिर्भवति मानवः ॥ इति ॥ (१११)

पत्युरसामञ्जस्यात् [2] वेदविरोधित्वसाम्यात् धीस्थतया सङ्गतिः । प्रधानोपगमसाम्येऽपि सांख्यानन्तर्यमनिलङ्घ्य, आर्हतानन्तरमेतन्निरासोऽस्यात्यन्तबाह्यत्वज्ञापनाय कृतः । निमित्त इति तत्त्वविरोधः । तथा इत्यनुष्ठानविरोधश्चोक्तः । मिथो व्याघातमाह — मुद्रिका इति । मुद्रिकाधारणादयो नानातन्त्रेषूक्ताः ; न त्वेकत्र ॥

#### सिद्धान्तः

तत्रेदमुच्यते — पत्युरसामञ्जस्यात् इति । ... ... वेदविरुद्धतत्त्वोपासनानुष्ठानाभिधानात् पशुपतिमतमनादरणीयमेव ॥ ३५ ॥ (११२-११३)

---

1. न देहपरिणामत्व-अ.
2. वेदविरोधित्वसाम्यस्थितया-क.

तत्रेदम् इत्यादि। वैदिकपक्षस्य [1] तद्वैषम्यमाह — वेदाः खलु इति। एकतां गताः — सर्वशाखाप्रत्ययनयादिति भावः। शम्भुशिवादि-शब्दार्थनिष्कर्षायाह — केवल इति। 'यस्य पर्णमयी' इति द्रव्यविशेष-निर्णयपरवाक्यवत् नारायणानुवाको देवताविशेषनिर्णयपरः। '[2] जुह्वा जुहोति' होमसाधनत्वविधिपरवाक्यवत् उपासनपरवाक्यानि तदनुगुणार्थानीति भावः॥

कारणवाक्येषु देवतान्तरप्रतीतिरित्यत्राह — तथा इति। छाग-पशुन्यायोऽभिप्रेतः। 'यतो वा इमानि' इति वाक्याभिप्रेतत्वात् जन्मादि इति सूत्रेऽप्यभिप्रेतोऽयमर्थ इति 'परस्मात् पुंसः' इत्यन्तेन सूचितम्॥

## अधिष्ठानानुपपत्तेश्च ॥ २-२-३६ ॥

वेदबाह्यानामनुमानाद्धि केवलनिमित्त ... .... 'शास्त्र-योनित्वात्' इत्यत्र दोषस्योक्तत्वात्॥ ३६॥ (११३)

अधिष्ठानानुपपत्तेश्च। वक्ष्यमाणदूषणस्य स्वास्पदीत्वायाह — वेदबाह्यानाम्। इति॥ ३६॥

## करणवच्चेन्न भोगादिभ्यः ॥ २-२-३७ ॥

यथा भोक्तुर्जीवस्य करणकलेवर ... ... सर्वं प्रसज्येत। अतो नाधिष्ठानसंभवः॥ ३७॥ (११३)

करणवच्चेन्न भोगादिभ्यः। शरीरत्वेन जगदधितिष्ठति चेत् भोगादिः स्यात्। न चेत्, देहान्तरापेक्षा स्यात्। शरीरे तु तदनपेक्षा शरीरत्वम्व्यवस्थानिर्वाहकत्वप्रयुक्ता॥ ३७॥

---

1. वैषम्यमाह—अ.
2. जुहुयात् जुहोतीति—क.

## अन्तवत्त्वमसर्वज्ञता वा ॥ २-२-३८ ॥

वाशब्दश्चार्थे। पशुपतेः पुण्यापुण्य ... ... सर्वमसमञ्ज-समेवेति 'असामञ्जस्यात्' इत्युक्तम् ॥ ३८ ॥ (११३-११४)

अन्तवत्त्वमसर्वज्ञता वा। इवशब्दो [1] विप्रलम्भार्थत्वद्योतकः ॥

इति पशुपत्यधिकरणम्—७

## ८. उत्पत्त्यसंभवाधिकरणम् ॥

## उत्पत्त्यसंभवात् ॥ २-२-३९ ॥

कपिलादितन्त्रसामान्यात् भगवदभिहित ... ... 'न जायते म्रियते वा विपश्चित्' इत्याद्याः ॥ ३९ ॥ (११५)

उत्पत्त्यसंभवात्। अवान्तरसङ्गतिमाह— कपिलादि इति। आशङ्क्य निराक्रियते इति पूर्वपक्षसिद्धान्त[2]सूत्रद्वयद्विकार्थौ। कथमाशङ्का इत्यत्राह— तत्रैवम् इति ॥ ३९ ॥

## न च कर्तुः करणम् ॥ २-२-४० ॥

'सङ्कर्षणात् प्रद्युम्नसंज्ञं मनो जायते ... ... अस्यापि तन्त्रस्य प्रामाण्यं प्रतिषिद्ध्यते इति ॥ ४० ॥ (११५)

न च कर्तुः करणम्। कर्ता— जीवः। सङ्कर्षणादिशब्दानां जीवादिविशेषणत्वं पूर्वपक्ष्यभिमतम्। जीवादिशब्दानां सङ्कर्षणादि-विशेषणत्वं तु राद्धान्त्यभिमतम् ॥ ४० ॥

---

1. विप्रलंभद्योतकः—क.
2. सूत्रद्वयार्थौ—क.

एवं प्राप्ते प्रचक्ष्महे —

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ २-२-४१ ॥**

**वाशब्दात् पक्षो विपरिवर्तते । ... ... यथा आकाश-प्राणादिशब्दैः ब्रह्मणोऽभिधानम् ॥ ४१ ॥**

**विज्ञानादिभावे वा तदप्रतिषेधः ।** सिद्धान्तसूत्रतां दर्शयति — **वाशब्दात्** इति । 'अपि वा कर्तृसामान्यात्', 'एकं वा संयोगरूप-चोदनाख्याविशेषात्' इतिवत इति भावः । **विज्ञानं च** इति । 'चैतन्य-स्वरूपिणे' इति, 'परा प्रकृतिः' इति च मन्त्राद्यनुसारेण ज्ञानस्वरूप-परमकारणभूतवासुदेवपरो [1]विज्ञानादिशब्द इत्यभिप्रायः । वाक्यार्थमाह — **सङ्कर्षण** इति ॥

के सङ्कर्षणादयः? कथं तेषां परब्रह्मत्वम्? तदा कथं ब्रह्मण उत्पत्तिः? ततश्च शास्त्रप्रामाण्यम् कथम्? इत्यत्राह — **एतदुक्तम्** इति । **चातुरात्म्यमुपास्यत** इत्यनेन चातुर्विध्यस्य आश्रयणीयतार्थत्वसिद्धिः । **स्वसंज्ञाभिः** — नमोन्तैः व्यूहनामभिः । तेषां परब्रह्मत्वं कथमित्यत्राह — **तच्च** इति । चातुरात्म्योपास्तिपरशास्त्रस्य वासुदेवाख्यब्रह्मोपासनपरत्वोक्तिः वासुदेवस्यैव चातुर्विध्ये घटते इत्यर्थः । न परं चातुरात्म्योपासनम्, विभवार्चनं चोच्यते । ते किमर्थे? वासुदेव एव हि [2]मोक्षदः इत्यत्राह — **तद्धि** इति । विभवादयः के इत्यत्राह — **विभवो हि** इति । **चतुर्व्यूहः** — चतुर्विभागः । [3]**आदिशब्दोपात्तवचनेषु** व्यूहविभवार्चनफलादि द्रष्टव्यम् । तेषां परब्रह्मत्वमस्तु, कथमुत्पत्तिसंभव इत्यत्राह — **अतः** इति । **अजायमानः** इति । न परं श्रुतिविरोधाभावः, [4]तदानुगुण्यं चेति भावः । जीवादि-सामानाधिकरण्यं निर्वहति — **तत्र** इति ॥ ४१ ॥

---

1. विज्ञानपरो विज्ञानादिशब्द–अ.　　2. मोक्षप्रदः–क.
3. आदिशब्दोपात्तवर्णनेषु–अ.　　4. तदानुगुण्यम्–अ.

# विप्रतिषेधाच्च ॥ २-२-४२ ॥

**विप्रतिषिद्धा हि जीवोत्पत्तिः ... ... पञ्चरात्रशास्त्रं स्वयमेव निरमिमीतेति निरवद्यम् ॥** (११७-११८)

सङ्कर्षणादीनां विशेष्यत्वेऽ[1]नुकूललिङ्गमुक्तम् । जीवादीनां विशेष्यत्वे प्रतिकूललिङ्गमुच्यते — **विप्रतिषेधाच्च** । विशेषेण विविधं वा प्रतिषेधः **विप्रतिषेधः**, यथा 'तच्छास्त्रैः विप्रतिषिद्धम्' इति । एतत्पादस्थयोः **विप्रतिषे**धशब्दयोः अर्थवैरूप्यं मुण्डोपनिषदि ब्रह्मशब्दयोरिवार्थवशादुपपद्यते । यद्वा तदुत्पत्तिनिषेधके शास्त्रे तदुत्पत्तिवचनं व्याहतम् । निषेधं दर्शयति — **यथोक्तम्** इति । उत्पत्तिप्रतिपादनेऽपि, तस्य श्रुतावपि दर्शनादविरोधनिर्वहणस्य च तुल्यन्यायत्वात् न शास्त्रस्य श्रुतिविरुद्धत्वमित्याह — **जन्म** इति । शरीरसंयोगवियोगकृतज्ञानविकाससङ्कोचरूपतया वक्ष्यते इत्यर्थः । उपसंहरति — **अतः** इति ॥

जीवोत्पत्त्युक्त्या शास्त्रस्याप्रामाण्यं राद्धान्तयद्भिः शास्त्राविवक्षितार्थं विवक्षितत्वेनारोप्य दूषणमुक्तं स्यादिति [2]मतान्तरमसमीचीनम् । जीवोत्पत्त्यतिरिक्तशङ्काहेतुमनूद्य व्युदस्यति — **यश्चैषः** इत्यादिना । परोक्तार्थमुपगम्य परिहृतम् । [3]अर्थान्तरं वक्तुं तद्दृष्टान्ते शिक्षयति — [4]**अथवा** इति । दार्ष्टान्तिकेऽप्याह — **एवम्** इति । कथमिदमित्यत्राह — **पश्चात्** इति । वेदार्थविशदीकरणरूपतां दर्शयति — **तथा** इति ॥

प्रश्नश्लोकानामुत्तररूपश्लोकः — [5]

'वेदान्तेषु यथा सारं सङ्गृह्य भगवान् हरिः ।

---

1. अनुकूललिङ्गत्वमुक्तम्–अ.
2. मतान्तरं समीचीनम्–अ.
3. अथ अर्थान्तरं–अ
4. अथ चेति–अ
5. उत्तरश्लोक–अ.

भक्तानुकम्पया विद्वान् सञ्चिक्षेप यथासुखम् ॥' इति ।

'[1] यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणः सत्यं सत्ये सामसु ॥'

'महतो वेदवृक्षस्य मूलभूतो महानयम् ।
स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने ॥'

इत्यादि चानुसन्धेयम् ॥

वेदार्थोऽत्र विवक्षितश्चेत् वेदा एव प्रवर्तयितव्याः । किं ग्रन्थान्तर-निर्माणेन? बुद्धागमादिवत् इदं विप्रलिप्सामूलं किं न स्यादित्यत्राह — **अतः स भगवान्** इति । **वेदैकवेद्यः** — पुरुषत्वात् अस्मद्वत् [2] इति तर्को बाधित इति भावः । वेदान्तवेद्यं हि ब्रह्मेत्यत्राह — **परब्रह्माभिधान** इति । भगवच्छब्दसमाख्यासिद्धमर्थमाह — **निखिल** इति । विप्रलिप्साद्यभावायाह — **अपार** इति । **भक्तान्** इति बुद्धागमादिव्यावृत्तिः । दुष्कृतामसुरादीनां विनाशाय हि तत्प्रणीतिः, न तु नारदशाण्डिल्यादि-साधुपरित्राणाय । इदं तु तथेति । **ऋग्यजुः** इति । वेदानन्त्यात् ग्रन्थान्तर-निर्माणमित्यर्थः ॥

[3] वेदाप्रामाण्याङ्गीकारे किं बहुशस्तदर्थोक्तिः? तदर्थवैशद्यार्थस्व-कण्ठोक्तिः भारतादिषु वेदार्थपरत्वेन प्रतिपादितत्वं साधुपरित्राणाय प्रवृत्तत्वं च । एतद्विपर्ययश्चास्य सुगतागमादेश्च वैषम्यम् । [4] नारदादिश्रोतृत्वकथनं विप्रलिप्सयेति चेत्, वेदेऽप्यनाश्वासः । केनापि कृत्वाऽपौरुषेयत्वं ख्यापित-मिति कथं न [5] शक्यते?

1. यं वाकेष्वनुवाकेषु महतो वेदवृक्षस्य इत्यादि वाऽनुसन्धेयः—अ.
2. इत्यादितर्का—अ.
3. वेदप्रामाण्याङ्गीक्रिया बहुशस्तदर्थोक्तिः—अ.
4. नारदादिश्रोतृकत्व—अ. 5. शक्येत—अ.

यत् तु — परैः सूत्रचतुष्टयं कस्यचिद्विरुद्धांशस्य ... ... यथागमं यथान्यायं निष्ठा नारायणः प्रभुः।” इत्यनेनैकार्थ्यात् ॥

इति उत्पत्त्यसंभवाधिकरणम्— ८

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

अथ परोक्तं सूत्रार्थमनूद्य व्युदस्यति — **यत् तु** इत्यादिना। **अक्षराननुगुणत्वम्** — वाशब्दअप्रतिषेधशब्दाननुगुणत्वम्। अभिप्रायविरोधं विवृणोति — **तथा हि** इति। **वेदान्तन्याय** इति। नान्यतरेणालम्, प्रयोजनभेदादिति भावः। अधीतशाखार्थस्य विशयविपर्ययापनोदः सूत्रफलम्। अनधीतशाखार्थैः सह तन्निष्कर्ष उपबृंहणफलम्। **इदं श्रेयः** — इत्यादिसामानाधिकरण्यमौपचारिकम्। एतत्प्रतिपाद्यं स्वर्गादिसाधनम्। **ब्रह्म** — प्राप्यम्। **हितम्** — मोक्षसाधनम् ॥

भारतप्रशस्तत्वमस्यानैकान्तिकमिति चोदयति— **ननु च** इति। इदं कार्त्स्न्येन वेदाविरोधात् कृत्स्नप्रामाण्यरूपम्। **एकनिष्ठत्वे** तत्त्वविशेषबुभुत्सा; **पृथङ्निष्ठत्वे** मानबुभुत्सा। किं ग्रन्थकाराभिप्रायः पृष्टः, उत अर्थतत्त्वमिति विकल्पे प्रथमशिरस्युत्तरं **ज्ञानान्येतानि** इति। **कृत्स्नस्य स्वयम्** इति वक्तव्यवक्तृविशेषणद्वयं श्रूयते। एभिः फलितमाह — **एवं वदतः** इति ॥

न्यायानुगृहीतवस्तुपरामर्शस्वरूपमाह — **अब्रह्मात्मकतया** इति। ततः किमित्यत्राह — **अतो वेदान्त** इति। [1]उक्तमर्थं वचनान्तरेण विशदयति — **अतस्तत्रैवेदम्** इति। **एकीभूतानि** इति। परस्पराङ्गत्वादार्थमेकत्वमुक्तम्। व्याख्येयस्थम् **एक**पदं पञ्चरात्रविशेषणम्। किम् अङ्गि, अङ्गानां कथमङ्गत्वम्, कस्मिन्नंशेऽपेक्षा, तत् सर्वं कथं पञ्चरात्रमासीत्

1. उक्तं वचनान्तरेण–अ.

इत्यत्राह — एतदुक्तम् इति । तर्हि कथं [1] निराकरणमित्यत्राह — शारीरके च इति । सांख्यादीनां कार्त्स्न्येन प्रामाण्यपरमिव [2] भारते वचनं व्याचष्टे — अतः इति । सांख्यादीनां कृत्स्नप्रामाण्यं चेदुक्तं, तदेव [3] वचनमप्रमाणं स्यात्, वेदविरुद्धांशेऽपि प्रामाण्याभिधायित्वात् । अविरुद्धांशस्य स्वीकार्यत्वे बुद्धागमादावपि तथा न शङ्कनीयम् । तत्र वेदप्रामाण्यानङ्गीकारात् । अतो यथोक्त एवार्थः ॥ ४२ ॥

इति उत्पत्त्यसंभवाधिकरणम्–८

इति हरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-
नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-
शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां
श्रुतप्रदीपिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

1. तन्निराकरण–अ.
2. भवतां वचनम्–क.
3. वचनं प्रमाणम्–अ.

# द्वितीयाध्याये तृतीयः पादः ॥

## १. वियदधिकरणम् ॥

### न वियदश्रुतेः ॥ २-३-१ ॥

सांख्यादिवेदबाह्यतन्त्राणां न्यायाभासमूलतया ... ... ... श्रूयमाणा वियदुत्पत्तिः अर्थविरोधाद्बाध्यते — इति ॥ १ ॥ (१२३)

**न वियदश्रुतेः**। सङ्गतिमाह — **सांख्यादि** इति । कारणविषये परोक्तदोषपरिहारपरपक्षप्रतिक्षेपौ पादद्वयेन कृतौ । अथ कार्यविषये परोक्तदोषाः परिह्रियन्ते इति सङ्गतिः । आत्मन उत्पत्त्यसंभवः प्रस्तुतः । तद्वन्निरवयवद्रव्यस्य वियतोऽनुत्पत्तिरिति अवान्तरसङ्गतिः । चितोऽचितश्च कार्यत्वं किमेकरूपम्, उत भिन्नरूपमिति संशयः । ऐकरूप्यं पूर्वपक्षीकृत्य वैरूप्यं सिद्धान्तीक्रियते पादद्वयेन ॥

तत्र प्रथमाधिकरणस्य संशयमाह — **तत्र** इति । कथमश्रुतिः ? 'आकाशः संभूतः' इति [1]श्रुतिरस्तीत्यत्राह — **संभावितस्य** इति । **श्रवणम्** — शब्दजन्यप्रमितिः । न ह्ययोग्ये [2]यूपादित्यतादात्म्यादाविव इति भावः । खपुष्पं दृष्टान्ततयोक्तम् । असंभवं निरवयवद्रव्यत्वेन सर्वगतत्वेन चोपपादयति — **न खलु** इति । केवलतर्को [3]बाध्य इत्यत्राह — **अतः** इति । तेजस्सर्गप्राथम्यं श्रुत्यर्थापत्तिः । तर्कापेतश्रुतेः [4]तद्युक्ता सा बलीयसीति भावः ॥ १ ॥

---

1. श्रुतिरस्तीत्याह—**क.**

2. यूपादित्यादाविवात्मादौ सेति भावः—**क.**

3. बाध्यते—**ख.**

4. अस्ति तु । मानान्तरागोचरत्वं नायोगता । अपि तु तद्बाधितत्वं यथा यूपादित्यैक्ये । सा चेह नास्ति—**क.** (मध्ये ग्रन्थपातः ।)

## सिद्धान्तः

एवं प्राप्तेऽभिधीयते —

### अस्ति तु ॥ २-३-२ ॥

अस्ति त्वाकाशस्योत्पत्तिः । अतीन्द्रियार्थ … … आत्मनोऽनुत्पत्तिर्न निरवयवत्वप्रयुक्तेति वक्ष्यते ॥ २ ॥　　(१२४)

अस्ति तु । न मानान्तरागोचरत्वमयोग्यता, यागादेः स्वर्गसाधनत्वादिप्रमित्ययोगात् । बाधकं तु न धर्मिणोऽध्यक्षतामात्रेण नागमोक्तधर्मबाधः प्रागुक्तदोषात् किं त्वध्यक्षावगतधर्मविरोधात अयोग्यता यथा यूपादित्यैक्यस्य । न चेह साऽस्ति । सर्वगतत्वनिरवयवद्रव्यत्वे असिद्धे । दशगुणत्वपञ्चीकरणत्वोक्तेः[1] । चरमं तु महदादावनैकान्तिकं च । [2]अनुमानं चागमबाधितमित्यर्थः । तर्हि कथमात्मनित्यत्वमित्यत्राह — आत्मनोऽपि इति ॥ २ ॥

पुनश्चोदयति —

### गौण्यसंभवाच्छब्दाच्च ॥ २-३-३ ॥

'तस्माद्वा एतस्मादात्मन आकाशः … … इति वियतोऽमृतत्वशब्दाच्च ॥ ३ ॥　　(१२४)

उत्तरसूत्रसङ्गतिमाह — पुनः इति । गौण्यसंभवाच्छब्दाच्च । तेजःप्राथम्यात् ततः प्राक् न वियत्सृष्टिसंभवः । पश्चात्तु त्वन्मतेऽपि नेत्यर्थः ॥

कथमेकस्य संभूतशब्दस्य आकाशापेक्षया … …

### स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २-३-४ ॥

---

1. पञ्चीकरणोक्तेः-अ.　　2. अनुमानान्तरं तु आगमं-क.

एकस्यैव 'तस्माद्वा एतस्मात् ... .... अनुषङ्गे च श्रवणा-
वृत्ताविवाभिधानावृत्तिर्विद्यत एव इत्यर्थः ॥ ४ ॥ (१२४-१२५)

स्याच्चैकस्य ब्रह्मशब्दवत् । तत्र ब्रह्मशब्दो द्विः प्रयुक्तः । इह तु अनुषङ्गादेकस्य कथं मुख्यगौणत्वे इत्यत्राह — अनुषङ्गे च इति । [1] प्रयोगभेदेऽपि वृत्तिभेदक्लृप्तिः अभिधानावृत्त्या । साऽनुषङ्गेऽपि तुल्येति तया तत्क्लृप्तिरविरुद्धा इत्यर्थः । [2] अभिधानावृत्तिः—बोधनव्यापारावृत्तिः ॥

परिहरति —

## प्रतिज्ञाहानिरव्यतिरेकात् ॥ २-३-५ ॥

छान्दोग्यश्रुत्यनुसारेणान्यासां ... .... आकाशस्यापि ब्रह्म-
कार्यत्वेन तदव्यतिरेकादेव भवति ॥ ५ ॥ (१२५)

अनन्तरस्य राद्धान्तसूत्रतामाह — परिहरति इति । प्रतिज्ञा-हानिरव्यतिरेकात् । स्फुटम् ॥ ५ ॥

## शब्देभ्यः ॥ २-३-६ ॥

इतश्च वियदुत्पत्तिः छान्दोग्ये प्रतीयते ... ... श्रुत्यन्तर-
प्रतिपन्नां वियदुत्पत्तिं न निवारयितुमलम् ॥ ६ ॥ (१२५)

शब्देभ्यः । 'ऐतदात्म्यम्' इत्यादिवाक्यं कृत्स्नकार्यस्य [3] कारण-ब्रह्मात्मकत्वपरत्वादुपात्तम् । आदिशब्दात् 'सन्मूलाः' [4] इत्यादि गृह्यते । न च इति । न हि घटोत्पत्तिवचनं पटोत्पत्तिवारकमित्यर्थः । प्राथम्यं

1. प्रयोगेभेदेऽपि—अ.
2. अभिधानावृत्तिः । अनन्तरस्य राद्धान्तसूत्रतामाह—अ.
3. कारणब्रह्मात्मकत्वपरत्वापादकम्—क.
4. इति गृह्यते—अ

वारकमित्यत्राह — वियत् इति । श्रुतग्रहणेन [1] अश्रुतप्राथम्यक्लृप्तिरयुक्तेति भावः ॥

## यावद्विकारं तु विभागो लोकवत् ॥ २-३-७ ॥

तुशब्दश्चार्थे । 'ऐतदात्म्यम् ... ... सुराणामिव चिरकालस्थायित्वाभिप्रायम् ॥ ७ ॥ (१२५-१२६)

यावद्विकारं तु विभागो लोकवत् । विकारत्वम् — कार्यत्वम् । आदिशब्दादेकत्वावधारणादि । एवं च इति । अन्यथा [2] वायोरप्यनुत्पत्तिः स्यादिति भावः ॥ ७ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ २-३-८ ॥

अनेनैव हेतुना मातरिश्वनो वायोरपि ... ... मातरिश्वपरामर्शार्थम् ॥ ८ ॥ (१२६)

एतेन मातरिश्वा व्याख्यातः । अतिदेशसूत्रत्वाभावः शङ्काधिक्याभावात् । मातरिश्वनः पृथग्योगमकृत्वा 'तेजो मातरिश्वनः' इत्युत्तरसूत्रं [3]न कृतम् । अतः [4]इत्यादेस्तत ऊर्ध्वमनुवृत्त्यर्थम् । असंभवस्तु इति सूत्रस्य महदादिविषयत्वात् [5]वियत्सूत्रानन्तर्यं मातरिश्वसूत्रस्य ॥ ८ ॥

## असंभवस्तु सतोऽनुपपत्तेः ॥ २-३-९ ॥

तुशब्दोऽवधारणार्थः । असंभवः ... ... अवगतकार्यभावस्यानुत्पत्तिर्नोपपद्यते इति ॥ ९ ॥ (१२६)

1. अश्रुतपूर्वप्राथम्य—अ.
2. वायोरप्यनुत्पत्त्यादिः-क.
3. किं न कृतम्-अ. 4. इत्यादेस्तदूर्ध्वम्—क.
5. द्विविधसूत्रानन्तर्यं-क.

असंभवस्तु सतोऽनुपपत्तेः । न हि [1]ब्रह्मणोऽनुत्पत्तिर्वाच्या । वियदादिकं विना केषामनुत्पत्त्यसंभवः ? कस्य चानुपपत्तिरित्यत्राह — एतदुक्तम् इति । प्रतिज्ञादिभिः इति आदिशब्दात् एकत्वावधारणाद्युक्तम् ॥

इति वियदधिकरणम्—१

---

## २. तेजोधिकरणम् ॥

### तेजोऽतस्तथा ह्याह ॥ २-३-१० ॥

ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य ... ... 'वायोरग्निः' इति ह्याह ॥ १० ॥ (१२९)

तेजोऽतस्तथा ह्याह । अवान्तरसङ्गतिमाह— ब्रह्म इति ॥ १० ॥

### आपः ॥ २-३-११ ॥

आपोऽपि, अतः तेजसः ... ... .... 'तदपोऽसृजत' इति ह्याह ॥ ११ ॥ (१२९)

आपः । अतः इत्याद्यनुषङ्गः ॥ ११ ॥

### पृथिवी ॥ २-३-१२ ॥

पृथिवी अद्भ्य उत्पद्यते ... ... 'ता अन्नमसृजन्त' इति ह्याह ॥ १२ ॥ (१३०)

पृथिवी । तथा इह्याप्यनुषङ्गः ॥ १२ ॥

नन्वन्नशब्देन कथं पृथिव्यभिधीयते ? अत आह—

---

1. ब्रह्मणोऽनुपपत्तिः—अ.

## अधिकाररूपशब्दान्तरेभ्यः ॥ २-३-१३ ॥

महाभूतसृष्ट्यधिकारात् पृथिव्येव ... .... ब्रह्मणः परम्परया कारणत्वेऽप्युपपद्यन्ते इति ॥ १३ ॥ (१३०)

उत्तरसूत्रावतारायाह — ननु इति । अधिकाररूपशब्दान्तरेभ्यः । अधिकारः— प्रस्तावः ॥ १३ ॥

### सिद्धान्तः

एवं प्राप्ते प्रचक्ष्महे —

## तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ २-३-१४ ॥

तुशब्दात् पक्षो व्यावृत्तः ... ... 'यस्य बुद्धिः शरीरम्,' 'यस्याव्यक्तं शरीरम्' इत्यादि ॥ १४ ॥ (१३०-१३१)

तदभिध्यानादेव तु तल्लिङ्गात् सः । तल्लिङ्गात्— अभिध्यानमेव परलिङ्गम् । सर्वशाखाप्रत्ययनयात् महदादिष्वपि ईक्षासिद्धिमाह — महदहङ्कार इति । न परमीक्षानुपपत्त्या तत्तच्छरीरकस्य कारणत्वम्, श्रौतं च तत्तच्छरीरकत्वमित्याह — श्रूयते च इति ॥ १४ ॥

यथोक्तम् 'एतस्माज्जायते प्राणो ... ...

## विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ २-३-१५ ॥

तुशब्दोऽवधारणार्थः । ... ... इत्यादिकमपि सर्वस्य ब्रह्मणः साक्षात्संभवस्योत्तंभनम् ॥ १५ ॥ (१३१)

विपर्ययेण तु क्रमोऽत उपपद्यते च । अतःशब्दार्थमाह— स च इति । उपरुध्येत इति स्वारस्यहानिरुक्ता । उत्तंभनम् — स्थापकम् ॥ १५ ॥

ज्ञापकम् स्थापकम्

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २-३-१६ ॥

**विज्ञानसाधनत्वात् इन्द्रियाणि विज्ञानम् ... .... तेजः प्रभृतयश्च शब्दास्तदात्मभूतं ब्रह्मैवाभिदधति ॥ १६ ॥ (१३१-१३२)**

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्**। व्याख्येयं पदं व्याचष्टे— **विज्ञान** इति। **अत्रापि**— न केवलं श्रुत्यन्तरेण्वेव इति भावः। **तैः सह पाठलिङ्गात्**— अप्रथप्रायन्यायादिति भावः। कस्याविशेष इत्यत्राह— **एतस्मात्** इति। 'एतस्मात् प्राणः,' 'एतस्मान्मनः' इति ईदृशो ह्यन्वय इति भावः। दीपे कण्ठोक्ततया व्याख्यातम्। **श्रुत्यन्तरसिद्ध** इति। [1]वायुविकारस्य प्राणस्य भूतेभ्यः प्रागुत्पत्तिविरोधादिति भावः। व्यवहितकार्याणामपि ब्रह्मण उत्पत्तिश्चेत्, कथं तेजःप्रभृतिशब्दैरभिधानमित्यत्राह — **तेजःप्रभृतयः** इति ॥ १६ ॥

**ननु एवं सर्वशब्दानां ब्रह्मवाचित्वे ... ...**

## चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात् ॥ २-३-१७ ॥

**तुशब्दः चोदिताशङ्कानिवृत्त्यर्थः। ... ... नामरूपव्याकरणश्रुत्या हि तथाऽवगतम् ॥ १७ ॥** (१३२-१३३)

अनन्तरसूत्रशङ्कामाह— **ननु** इति। **चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशोऽभाक्तस्तद्भावभावित्वात्**। हेतुखण्डं विवृण्वन् वाक्यार्थमाह— **समस्त** इति। प्रथमयोजनायां व्युत्पत्त्यभावान्यथासिद्धिः कण्ठोक्ता स्यात्।

---

1. वविकारस्य-क.

द्वितीयस्यां ब्रह्मार्थेन्तत्वे मानोपन्यासः श्रौतः स्यात्। उभयोः अन्यतरार्थः [1] आर्थः॥ १७॥

इति तेजोऽधिकरणम्—२

---

## ३. आत्माधिकरणम्॥

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः॥ २-३-१८॥

**वियदादेः कृत्स्नस्य परस्मात् ब्रह्मणः ... ... सेयं स्वरूपान्यथाभावलक्षणोत्पत्तिर्जीवे प्रतिषिध्यते॥ (१३६-१३७)**

**नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः।** सङ्गतिमाह — **वियदादेः** इति। एवं स्वानन्तरकारणशरीरकब्रह्मणो वियदाद्युत्पत्तिरुक्ता। तर्हि तद्भिन्नरवयवस्यात्मनोऽपि सेति सङ्गतिः। वियदादिवत् उत्पत्तिरस्ति नास्तीति [2] संशयः। श्रुत्यर्थापत्तिश्रुतिभिः पूर्वपक्षः। **प्रजाशब्दश्च** संसृष्टजीवपरः॥

राद्धान्ते **आत्मनः** इति। **ताभ्यः** सिद्धान्तितत्वात् इति शब्दार्थः। **कथम्** इति कृतं चोद्यं परिहरति — **इत्थम्** इति। व्याहतिं परिहर्तुं कार्यलक्षणमाह — **कार्यत्वं हि** इति। वैषम्यमाह — **इयान्** इति॥

**एतदुक्तं भवति — भोग्यभोक्तृनियन्तॄन् ... ... प्रकारभूतचिदचिद्वस्तुगताः अपुरुषार्थाः स्वरूपान्यथाभावाश्चेति सर्वं समञ्जसम्॥ १८॥ (१३७-१३९)**

अचितः कार्यत्वं [3]स्वरूपान्यथात्वरूपम्, चितस्तु धीसङ्कोचविकासरूपमिति कृतो विभागः। परस्य च कार्यत्वं तयोरन्यतरप्रकारेणेति चेतनत्वात्

---

1. आर्थम्-अ. 2. न संशयः-अ.

3. स्वरूपान्यथात्वम्-अ.

धर्मान्यथाभावरूपकार्यत्वं, तेन च कर्ममूकासावैरूप्यं स्यादित्यत्राह — **एतदुक्तम्** इति। **भोग्यगतम्** — न तु स्वासाधारणमिति भावः। **उत्पत्त्यादि** इति विनाशग्रहणम्। घटकश्रुत्यर्थमाह— **सर्वावस्थयोः** इति। सदैवं चेत् कथं कार्यकारणभाव इत्यत्राह— **तत् कदाचित्** इति। [1]कार्यत्वम् अवस्थान्तरापत्तिरूपमिति फलितम्। कार्यत्वावान्तरभिदामुपपादयति— **तत्र** इति। 'तथा सति ब्रह्मणः कार्यत्वं कथमित्यपेक्षायां साधारणं कार्यत्वमाह — **कारणावस्थाया** इति। प्रतिज्ञादृष्टान्तौ कथमित्यत्राह— **अत एव** इति। अनेकाकारविशिष्टैकवस्तुनोऽवस्थाभेदमात्रे दृष्टान्तः। काठिन्यादिवत् मानविरुद्धाकारस्तु त्याज्य इति भावः। उत्पत्त्यनुत्पत्त्यादिश्रुतीनां विषयभेदमाह— **ईदृश** इति। **अनिष्टशब्दः** सद्वारकावस्थानियन्तृत्वव्युदासार्थः। एकत्वावधारणं निर्वहति — **एवम्** इति॥

**ये तु** इति। सौत्रत्वात् स्वोपगमाच्चेत्यर्थः। तर्हि [2]तत्पक्ष एव स्वीकार्य इत्यत्राह — **इयान्** इति। नियन्त्रंशस्य न भोक्तृत्वमित्यत्राह — **नियन्त्रंशस्य** इति॥ १८॥

इति आत्माधिकरणम् — ३

---

## ४. ज्ञाधिकरणम्॥

### ज्ञोऽत एव॥ २-३-१९॥

**वियदादिवज्जीवो नोत्पद्यत इत्युक्तम्, तत्प्रसङ्गेन जीवस्वरूपं निरूप्यते। ... ... कर्ता विज्ञानात्मा पुरुषः, 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः' इति॥ १९॥** (१३९-१४१)

ज्ञोऽत एव। सङ्गतिमाह — **वियदादिवत्** इति। सङ्गतिः

1. साधारणं कार्यत्वम्–अ. 2. तत्पक्षाः स्वीकार्याः–अ.

प्रासङ्गिकी। कार्यताप्रकारो हि पादनिरूप्यः। [1]स्वात्मानं प्रति ज्ञातृत्वम् स्वस्वान्यभानप्रतिसंबन्धित्वं विवक्षितम्। स्वरूपम् — स्वाभाविकाकारः। अकादाचित्कमित्यर्थः। अतः शिरोद्वयप्रतियोगित्वं तृतीयशिरसः। [2]इदमेवात्र निरूप्यम्। तत्र स्वभानप्रतिसंबन्धितया प्रत्यक्त्वम्; [3]तस्य स्वापेऽपि विद्यमानत्वात् अजडस्वरूपत्वम्। अन्यभानप्रतिसंबन्धितया ज्ञानाश्रयत्वम्। शङ्काविशेषपरिहारार्थमणुत्वमित्येषामर्थानां ज्ञत्वनिरूपणान्तर्भाग-दैकाधिकरण्यम्॥

अपरः — काणादादिः। सर्वगतत्वं च इति। ज्ञानादिकं कार्य-शब्दार्थः। भोग्यवस्तु चाभिप्रेतम्। अणुत्वगत्योर्द्वयोः कल्पतेः विभुत्व-क्लृप्तेरेरमिति लाघवमभिप्रेतम्॥

राद्धान्ते — एतच्छब्दः प्रकृतजातीयपरामर्शीति श्रुतिव्यक्तिभेदा-विरोधः॥ १९॥

यत्तूक्तं ज्ञातृत्वे स्वाभाविके सति ... ...

## उत्क्रान्तिगत्यागतीनाम्॥ २-३-२०॥

नायं सर्वगतः, अपि त्वणुरेवायमात्मा .... ... विभुत्वे ह्येता उत्क्रान्त्यादयो नोपपद्येरन्॥ २०॥ (१४१)

उत्क्रान्तिगत्यागतीनाम्। श्रुत्यर्थानुक्तिरुक्ता॥ २०॥

## स्वात्मना चोत्तरयोः॥ २-६-२१॥

चशब्दोऽवधारणे। यद्यपि शरीरवियोगरूपत्वेन ... ... अतस्ते स्वात्मनैव संपाद्ये॥ २१॥ (१४२)

---

1. सा चात्मानं प्रति। ज्ञातृत्वं स्वतः स्वान्यभानप्रतिसंबन्धित्वं विवक्षितम्–अ.
2. इदमत्र निरूप्यम्–अ 3. तस्य च–अ.

स्वात्मना चोत्तरयोः । कथञ्चित् इति अस्वारस्यसूचनम् । गतेः श्रौतत्वात् अणुत्वमेव कल्प्यमिति न गौरवम् । विभुत्वकल्पनं तु श्रुतिविरुद्धेति भिदेत्यर्थः ॥ २१ ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २-३-२२ ॥

'योऽयं विज्ञानमयः प्राणेषु' इति जीव ... ... मध्ये परः प्रतिपाद्यत इति तत्संबन्धीदं महत्त्वम्; न जीवस्य ॥ २२ ॥ (१४२)

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् । यस्य—जीवस्य, अनुवित्तः—उपास्यः, प्राप्यो वा । विदेर्ज्ञानलाभार्थत्वात् । ज्ञानार्थत्वे इडनित्यत्वं छान्दसम् । [1] अदृष्टो द्रष्टेतिवत् अर्हार्थीया निष्ठा । प्रतिबुद्धः—प्राज्ञः ॥ २२ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २-३-२३ ॥

साक्षादणुशब्द एव श्रूयते 'एषोऽणुरात्मा .... ... अतोऽणुरेवायमात्मा ॥ २३ ॥ (१४२)

स्वशब्दोन्मानाभ्यां च । इह श्रुतिर्दर्शिता । अणुत्वं च श्रौतमिति न किञ्चित् कल्प्यम् । स्वशब्दः अणुत्ववाचकः । न त्वाक्षेपकः ॥ २३ ॥

अथ स्यात् — आत्मनोऽणुत्वे ... ...

## अविरोधश्चन्दनवत् ॥ २-३-२४ ॥

यथा हरिचन्दनबिन्दुः ... ... देहैकदेशवर्ती सकलदेशवर्तिनीं वेदनामनुभवति ॥ २४ ॥ (१४२)

1. अदृष्टेतिवत्-क.

शङ्कामाह — अथ इति । वेदना — दुःखानुभवः; प्रदर्शनं वा सुखस्य ॥

अविरोधश्चन्दनवत् वेदनामनुभवति — दुःखमनुभवतीत्यर्थः ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि

॥ २-३-२५ ॥

हरिचन्दनबिन्द्वादेर्देहदेशविशेष ... ... चन्दनदृष्टान्तः प्रदर्शितः, न तु चन्दनस्य देशविशेषापेक्षा ॥ २५ ॥ (१४३)

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि । [1]कार्यकरत्वौपयिकत्वात् तत्रैकशतम् अभ्युपात्तम । न तु इति । न तु हन्मात्रापेक्षा । नासानयनादिमर्मस्थित्या कार्यकरत्वादित्यर्थः ॥ २५ ॥

एकदेशवर्तिनः सकलदेहव्यापि ... ...

## गुणाद्वाऽऽलोकवत् ॥ २-३-२६ ॥

वाशब्दो मतान्तरव्यावृत्त्यर्थः; आत्मा .... ... अन्यत्र वृत्तिर्मणिप्रभावदुपपद्यत इति प्रथमसूत्रे स्थापितम् ॥ २६ ॥ (१४३)

[2]सौभर्यादीनामेकेतरदेहेषु प्रागुक्तदिशा कार्यकरत्वायोगान्निर्वाहान्तरोक्तिः ॥

गुणाद्वाऽऽलोकवत् । [3]कथमयुतसिद्धधर्मस्य देशान्तरे वृत्तिरित्यत्राह — ज्ञातुः प्रभा इति ॥ २६ ॥

---

1. कार्यकरत्वोपाधिकृतत्वादत्रैकशतम् – अ.
2. सौगन्ध्यादीनाम् – अ.
3. अयुतसिद्धधर्मस्य देशान्तरेऽप्रसक्तिरित्यत्राह – क.

ननु — उक्तं ज्ञानमात्रमेवात्मेति । ... ...

**व्यतिरेको गन्धवत् तथा च दर्शयति ॥ २-३-२७ ॥**

यथा पृथिव्याः गन्धस्य गुणत्वेन ... ... दर्शयति च श्रुतिः 'जानात्येवायं पुरुषः' इति ॥ २७ ॥ (१४३)

ननु इति [1] ज्ञानस्वरूपवचनमभिप्रेतम् । तन्निर्वाहाय व्यतिरेके मानं दर्श्यते ॥

व्यतिरेको गन्धवत् [2] तथा च दर्शयति । जानाति इति विशिष्टवाचकशब्दः ॥ २७ ॥

**पृथगुपदेशात् ॥ २-३-२८ ॥**

स्वशब्देनैव विज्ञानं विज्ञातुः पृथगुपदिश्यते — 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इति ॥ २८ ॥ (१४३)

पृथगुपदेशात् । विशेषणस्य पदान्तरेण निर्देशो दर्शितः ॥ २८ ॥

यत् तु उक्तम् 'यो विज्ञाने तिष्ठन्' ... ...

**तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् ॥ २-३-२९ ॥**

तुशब्दश्चोद्यं व्यावर्तयति । ... ... 'यः सर्वज्ञः' इत्यादिषु प्राज्ञस्य ज्ञानं सारभूतो गुण इति विज्ञायते ॥ २९ ॥ (१४४)

व्यतिरेके [3] मानसिद्धे ज्ञानरूपत्ववचनं निर्वोढुं [4] प्रागुक्तशङ्कामुद्धाटयति — यत् तु इति ॥

---

1. ज्ञानस्वरूपत्व—अ. 2. तथा हि—अ.
3. ज्ञानसिद्धे—क. 4. प्रागुक्तशङ्कामुत्पादयति—अ.

तद्गुणसारत्वात् तु तद्व्यपदेशः प्राज्ञवत् । तच्छब्दार्थमाह — विज्ञान इति । षष्ठीतत्पुरुषशङ्काव्युदासायाह — विज्ञानमेव इति । गुणशब्दः अप्रधानवाची । [1]गुणः शेषभूतः, तस्य सारत्वं गुणान्तरापेक्षया प्रकृष्टत्वम् । तच्च होमादिगुणभूतदध्यादिव्यावर्तकम् [2]अपृथक्सिद्धत्वम् । तेन गुणिपर्यन्तबोधनस्य [3]मुख्यत्वसिद्धिः । विज्ञानमेव — द्रव्यमेव सदयुतसिद्धमिति भावः । प्राज्ञवत् इत्यंशं व्याचष्टे — यथा इति । दृष्टान्ते धर्मधर्मिभावस्य प्रामाणिकत्वं दर्शयति — यद्वेष इति । स्पष्टम् ॥ २९ ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २-३-३० ॥

**विज्ञानस्य यावदात्मभाविधर्मत्वात् ... ... स्वप्रकाशत्वेन विज्ञानमिति व्यपदेशो न दोष इति समुच्चिनोति ॥ ३० ॥ (१४४)**

'पटः शुक्ल' इत्यादौ गुणशब्देन गुण्युक्तिः धर्मिसमर्पकपदान्तरसमभिव्याहारात् । इह तु तदभावान्न गुण्युक्तिर्युक्तेति स्वरूपमेव ज्ञानमुच्यते, न धीधर्मकं स्वरूपमित्यत्राह— यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् । आत्मशब्दो धर्मिपरः । तद्व्यपदेशः न दोषः । [4]दूष्यत इति दोषः । कर्मणि घञ् । धर्मिवाचिपदान्तराभावस्वरूपदोषदुष्टो न भवतीत्यर्थः । तद्दर्शनात् इत्येतत् व्याचष्टे — तथा इति । कथं शङ्कायाः परिहृतत्वमित्यत्राह — स्वरूप इति । शौक्ल्यस्य पटनिरूपकत्वाभावात् [5]धर्मिवाचिपदान्तरापेक्षा । गोत्वादेस्तु निरूपकत्वात् न गवादिपदानां तदपेक्षा । ज्ञानपदं तद्वदित्यर्थः । ज्ञानमचिदपेक्षया जीवस्य निरूपकम् । परस्य तु

1. गुणस्य शेषभूतस्य सारत्वम्-क.
2. पृथक्सिद्धत्वम्-अ. 3. मुख्यसिद्धिः-क.
4. दुष्यत इति दोषः । कर्मणि घञ्-क.
5. धर्मिवाचकपदान्तरापेक्षा । गोत्वादेस्तु तन्निरूपकत्वात् । न गोत्वादिपदानाम्-क.

स्वतो नित्यासंकुचितं ज्ञानं निरूपकम् । अत्र पूर्वसूत्रोक्तस्यायुतसिद्धत्वस्य हेतोः असिद्धिशङ्का च यावदात्मभावित्वोक्त्याऽर्थान्निरस्ता भवति । अयावद्धर्मिभाविनामपि गुणानामयुतसिद्धिरस्ति । किं पुनर्यावद्धर्मिभाविनामिति ॥

यच्चोक्तम् — सुषुप्त्यादिषु ज्ञानाभावात् ... ...

**पुंस्त्वादिवत् त्वस्य सतोऽभिव्यक्तियोगात् ॥ २-३-३१ ॥**

तुशब्दश्चोदिताशङ्कानिवृत्त्यर्थः । ... ... 'मनसैतान् कामान् पश्यन् रमते' इत्यादिश्रुत्यैकार्थ्यात् ॥ ३१ ॥ (१४५)

पुंस्त्वादिवत् त्वस्य सतोऽभिव्यक्तियोगात् । न बाल्ये पुंस्त्वमित्यत्राह–सप्तधातु इति । [1]स्वापेऽपि धियः स्वप्रकाशताऽर्हत्वान्न जडत्वम् । स्वसिद्ध्यहमर्थस्यापि ज्ञानस्यैवोपलम्भो विषयसंबन्धापेक्ष इत्यत्राह–सुषुप्त्यादिष्वपि इति । अहन्धीवेद्यत्वे [2]जडत्वादीत्यत्राह — एते च इति । नित्योपलब्ध्याद्यप्रसङ्गायाह — स चायम् इति । न प्रेत्य इति । देहात्मधीर्नेत्यर्थः ॥ ३१ ॥

संप्रति ज्ञानात्मवादे तस्य सर्वगतत्वे दूषणमाह —

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ॥ २-३-३२ ॥**

अन्यथा सर्वगतत्वपक्षे तस्य ज्ञानमात्रत्वपक्षे च ... .... करणैः सर्वदा संयुक्तत्वात् अदृष्टादेरप्यनियमादुक्तदोषः समानः ॥ (१४५-१४६)

---

1. स्वापे धियः स्वयंप्रकाशताऽर्हे–क.
2. जडत्वादित्यत्र–क.

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा। नित्योपलब्धिः प्रसजतु। कथमनुपलब्धिः? [1] उभयं च सदा प्रसजेदित्यत्राह— **एतदुक्तम्** इति। विकल्पितशिरोऽभिप्रायेणोक्तमित्यर्थः। स्वमते स्वप्रसङ्गमाह — **अस्माकम्** इति। [2] जडात्मविभुत्वपक्षेऽपि शिरोभेदेन दूषणत्रयसाम्यमाह — **करणायत्त** इति। **अदृष्टादेः** इति। देहसाधारण्यात् तत्कृतादृष्टानियम इत्यर्थः ॥ ३२ ॥

इति ज्ञाधिकरणम्—४

---

## ५. कर्त्रधिकरणम् ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ २-३-३३ ॥

**अयमात्मा ज्ञाता, स चाणुपरिमाण इत्युक्तम्। इदानीं ... य आत्मानमेव केवलं कर्तारं मन्यते, न स पश्यतीत्यर्थः ॥ ३३ ॥**
(१५१-१५२)

**कर्ता शास्त्रार्थवत्त्वात्।** ज्ञातृत्वसापेक्षत्वात् कर्तृत्वस्य, तदनन्तरं तच्चिन्तासङ्गतिः। **हन्तारम्** इति। 'महान्तं विभुम्' इति प्रकरणोक्ते परमात्मनि '**न जायते**' इत्यचिद्धर्मः, **हन्तारम्** इति पुण्यपापकर्तृत्वरूपजीवधर्मश्च निषिध्यत इति शङ्काव्युदासायोक्तं **जीवस्य** इति। अवान्तरप्रकरणे परस्य न प्रसङ्ग इति भावः। प्रकृतौ नित्यायां कर्तृत्वरूपजीवधर्मः नाशित्वं च निषिध्यत इति शङ्काव्युदासायोक्तं **सर्वं प्रकृतिधर्मम्** इति। कार्त्स्न्येन प्रकृतिधर्मनिषेधपरं प्रकरणमिति भावः। **हन्तुम्** इति द्वितीयान्तः, जन्तुन् इतिवत्। हननमात्रे कर्तृत्वनिषेधः, न सर्वक्रियासु इति शङ्काव्युदासायाह — **तथा च** इति ॥

---

1. उभयं तु—अ. 2. विभुत्वपक्षे शिरोभेदेन—क.

राद्धान्ते — शास्त्रार्थवत्त्वात् इति । प्रयोजनतया हेतुत्वम् । अवयवार्थनिरूपणेन कर्तृत्वमाह — शासनाच्च इति । गुणानामेव कर्तृता इति औपचारिकोक्तिः । गुणमहत्कृतत्वं स्फुटयति — तथा च इति । आत्मनः कर्तृत्वं भगवद्गीतायामभ्युपगतमित्याह — तथा इति । इदमपि वचनं विशदयितुमाह — अधिष्ठानम् इति । 'शरीरवाङ्मनोभिः' [1]इत्यादिरप्यनुसन्धेयः ॥ ३३ ॥

## उपादानाद्विहारोपदेशाच्च ॥ २-३-३४ ॥

'स यथा महाराजः' इति प्रकृत्य ... .... प्राणानामुपादाने विहारे च कर्तृत्वमुपदिश्यते ॥ ३४ ॥ (१५२)

उपादानाद्विहारोपदेशाच्च । इन्द्रियप्राणदेहप्रेरणकर्तृत्वमुक्तमित्यर्थः ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २-३-३५ ॥

'विज्ञानं यज्ञं तनुते कर्माणि तनुते ... ... बुद्धेः करणत्वात् विज्ञानेनेति करणविभक्तिनिर्देशः स्यात् ॥ ३५ ॥ (१५३)

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः । विज्ञानेन इति । उपचरितत्वे तदेव दोष इति भावः ॥ ३५ ॥

## उपलब्धिवदनियमः ॥ २-३-३६ ॥

आत्मनोऽकर्तृत्वे दोष उच्यते । ... ... अन्तःकरणादीनामपि नियमो नोपपद्यते ; यदायत्ता व्यवस्था स्यात् ॥ ३६ ॥ (१५३)

---

1. इत्यादिरप्यनुसन्धेयः । अन्तःकरणभेदात् व्यवस्थेत्यत आह — अत एव चेति ॥ (मध्ये ग्रन्थाभावः) -अ.

उपलब्धिवदनियमः । अन्तःकरणभेदात् व्यवस्थेत्यत्राह—अत एव च इति ॥ ३६ ॥

## शक्तिविपर्ययात् ॥ २-३-३७ ॥

बुद्धेः कर्तृत्वे कर्तुरन्यस्य भोक्तृत्वानुपपत्तेः ··· ··· पुरुषोऽस्ति भोक्तृभावात्' इति हि तेषामभ्युपगमः ॥ ३७ ॥ (१५२)

शक्तिविपर्ययात् । कथं मानाभाव इत्यत्राह — पुरुषोऽस्ति इति ॥

## समाध्यभावाच्च ॥ २-३-३८ ॥

बुद्धेः कर्तृत्वे मोक्षसाधनभूतसमाधावपि ··· ··· प्रकृतिः समाधातुमलम् । अतोऽप्यात्मैव कर्ता ॥ ३८ ॥ (१५३)

समाध्यभावाच्च । अचेतनत्वात् प्रकृतेरन्यथाविषयत्वाच्च समाध्यनुपपत्तिः ॥ ३८ ॥

## यथा च तक्षोभयथा ॥ २-३-३९ ॥

वागादिकरणसंपन्नोऽप्यात्मा ··· ··· भोगवाञ्छादिनियमकारणाभावात् सर्वदा कर्तृत्वमेव स्यात् ॥ ३९ ॥ (१५४)

यथा च तक्षोभयथा । त्वदुक्तो दोषस्त्वन्मते एवेत्याह — बुद्धेस्तु इति ॥ ३९ ॥

इति कर्त्रधिकरणम्—५

---

## ६. परायत्ताधिकरणम् ॥

### परात् तु तच्छ्रुतेः ॥ २-३-४० ॥

इदं जीवस्य कर्तृत्वं किं स्वातन्त्र्येण? ... ... भ्रामयन् सर्व-भूतानि यन्त्रारूढानि मायया' इति ॥ ४० ॥ (१५६)

परात् तु तच्छ्रुतेः । सङ्गतिः स्फुटा ॥

राद्धान्ते–तत् इति व्याख्येयम् । कर्तृत्वम् इति व्याख्यानम् ॥ ४० ॥

नन्वेवं विधिनिषेधशास्त्रानर्थक्यं ... ...

### कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-दिभ्यः ॥ २-३-४१ ॥

सर्वासु क्रियासु पुरुषेण कृतं ... ... क्षिपाम्यजस्रमशुभाना-सुरीष्वेव योनिषु' इत्युक्तम् ॥ ४१ ॥ (१५६-१५७)

अनन्तरसूत्रशङ्कामाह— ननु इति । कृतप्रयत्नापेक्षस्तु विहित-प्रतिषिद्धावैयर्थ्यादिभ्यः । आदिशब्दं व्याचष्टे— [1]निग्रह इति । भाष्यस्थ—आदिशब्देन फलदानग्रहणम् । प्रवृत्तस्य प्रवर्तकोऽनुमन्ता । अन्य-सापेक्षत्वे प्रथमप्रवृत्तस्य च फलान्वये च दृष्टान्तमाह— यथा इति । राजसंश्रयणादिकमुदाहरणम् । अन्यापेक्षत्वेऽपि विधिनिषेधभाक्त्वं रथाकर्षकेषु दृष्टम् । अंशे पारतन्त्र्यात् न फलमिति पूर्वः पक्षः । अंशे स्वातन्त्र्यात् फलमिति सिद्धान्तः ॥

साधारणकारणमीश्वरः करणकलेवरचित्प्रवृत्तिदानादिना । विशेष-

1. आदिशब्देन इति श्रुतप्रकाशिकायाम् ।

कर्तृत्वे तु प्रागुपेक्षकः । पश्चात् त्वनुमन्ता । अनुमतिश्च फलदानतुल्या । अतः परायत्तत्वम् । प्रथमप्रवृत्तौ स्वातन्त्र्यात् फलान्वयः । दया त्वन्यत्र सावकाशा । अप्रवृत्तप्रवर्तनरूपं प्रयोजयितृत्वं दृश्यत इति चोदयति — ननु इति । फलदानकल्पमिति बुद्ध्या परिहरति — उच्यते इति । लोकदृष्ट्याऽनुमन्तृत्वात् दोषापादनं धर्मिग्राहकप्रस्तम । अनुमन्तुः फलान्वयश्च शास्त्रवश्यत्वे सत्यनुमन्तृत्वात् । न त्वनुमन्तृत्वमात्रात् । अतः सर्वमुपपन्नम् ॥

इति परायत्ताधिकरणम्–६

## ७. अंशाधिकरणम् ॥

# अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २-३-४२ ॥

जीवस्य कर्तृत्वं परमपुरुषायत्तम् ... ... उभयव्यपदेशोपपत्तये जीवोऽयं ब्रह्मणोंऽश इत्यभ्युपेत्यम् ॥ ४२ ॥ (१५८-१६०)

**अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके।** [1] जीवोऽनुमतिदानात् प्रवृत्तश्चेत् राजभृत्यादिवत् [2] स्पष्टभेदः स्यात् इति शङ्कया सङ्गतिः । **ब्रह्मांश** इति पक्षे च किं विशेष्यैकदेशतयांशः, उत विशिष्टैकदेशरूपविशेषणतया इति विकल्पो गर्भितः । **श्रुति** इति । वादिविमतेरपि श्रुतिवैविध्यमूलत्वात् इति भावः । **ननु** इति शङ्कनं पौनरुक्त्यं परिहरति — **सत्यम्** इति । पूर्वं शरीरात्मभावेनाभेदश्रुतिमुख्यत्वमुक्तम् । तच्चात्र शरीरवाचिनामाकृतिनयविषयत्वे स्थापिते सिध्येत् । तच्च प्रभाया इवायुतसिद्धविशेषणतयांशत्वे सिध्यति । विशेषणतयांशत्वात् विलक्षणत्वसिद्धिरिति उभयव्यपदेशमुख्यत्वमिहैव प्रतिष्ठितमित्यर्थः । **किं तावत्** इत्यादि । विशेष्यैक-

1. जीवो मतिदानात्–क. 2. स्वनिष्ठः स्यात्–अ.

देशरूपांशवादिनम् अत्यन्तभेदवादी दूषयति — ब्रह्मणोऽशः इति । यद्वा इति । अभेदे षड्विधतात्पर्यलिङ्गसद्भावोऽभिप्रेतः ॥

[1]राद्धान्ते— ततश्च इति । निकृष्टैरपि सामानाधिकरण्यमभेदस्यौपचारिकत्वविरोधीति भावः । परोक्तान्यथासिद्धिं दूषयति—न च इति । अभेदश्रुतिविरोधपरिहारादिकं पूर्ववत् । [2]स्पष्टम् । सत्योपाध्यवच्छिन्नब्रह्मजीवपक्षं दूषयति — उपाध्यवच्छिन्नम् इत्यादिना ॥ ४२ ॥

## मन्त्रवर्णात् ॥ २-३-४३ ॥

पादोऽस्य विश्वा भूतानि .... .... 'असन्ततेश्चाव्यतिकरः इत्यनन्तरमेव चात्मबहुत्वं वक्ष्यति ॥ ४३ ॥ (१६०–१६१)

मन्त्रवर्णात् । कथमंशत्वप्रतीतिरित्यत्राह — अंशवाची इति । नित्यो नित्यानाम् इति विशिष्टविधिः । भेदस्य [3]स्वाभाविकत्वमलौकिकम् । भेदकाकाराभावान्मुक्तौ कथं भेदधीरित्यत्राह— एवम् इति । ज्ञानस्वरूपत्वेन इति जीवाद्वैतवचननिर्वाहः सूचितः । प्रत्यक्तया पराक्तया च भेदः ॥

## अपि स्मर्यते ॥ २-३-४४ ॥

'ममैवांशो जीवलोके जीवभूतः ... ... पुरुषोत्तमांशत्वं स्मर्यते । अतश्चायमंशः ॥ ४४ ॥ (१६१)

अपि स्मर्यते । स्फुटम् ।

अंशत्वेऽपि जीवस्य ब्रह्मैकदेशत्वेन ... ...

---

1. राद्धान्ते निकृष्टैरपि-अ.
2. स्पष्टम् । मन्त्रवर्णात् । -अ.
3. स्वाभाविकत्वं लौकिकम्–अ.

## प्रकाशादिवत् तु नैवं परः ॥ २-३-४५ ॥

तुशब्दश्चोद्यं व्यावर्तयति ... ... जीवशरीरकब्रह्मवाचकत्वे-नैकार्थाभिधायित्वादित्ययमर्थः प्रागेव प्रपञ्चितः ॥ ४५ ॥
(१६१-१६२)

शङ्कामाह — **अंशत्वेऽपि** इति । **प्रकाशादिवत् तु नैवं परः** । आदिशब्दार्थमाह — **यथा गवाश्व** इति । कथमंशत्वमित्यत्राह — **एकवस्तु** इति । ततः किं प्रकृतशङ्काया इत्यत्राह — **विशेषणविशेष्ययोः** इति । बहुलत्वविरलत्वादिस्वभावे वैलक्षण्यम् । अयमर्थः सौत्र इत्याह — **तदिदम्** इति । सूत्रखण्डेऽ[1]मुमर्थं दर्शयति — **यथाभूतः** इति । वाक्यार्थमाह — **यथैव हि** इति । तेनोभयव्यपदेशमुख्यत्वसिद्धिमाह — **एवम्** इति । 'भानुः भानुमान्' इत्यादयः सपक्षाः इति । **प्रागेव** इति । प्रागुक्तार्थं एतत्सूत्राभिप्रेत इत्यर्थः ॥ ४५ ॥

## स्मरन्ति च ॥ २-३-४६ ॥

एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण .... .... आत्मशरीर-भावेनांशांशित्वं वदन्ति इत्युच्यते ॥ ४६ ॥ (१६२)

**स्मरन्ति च** । अंशत्वे स्मृतिः प्रागुक्ता । विशेषणतयांशत्वे त्वियमुपात्ता । स्मृतौ दृष्टान्तेन [2]वैशद्यात् तत्कण्ठोक्तिः ॥ ४६ ॥

एवं ब्रह्मणोंऽशत्वे ब्रह्मप्रवर्त्यत्वे ... ...

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ २-३-४७ ॥

1. इममर्थम्-अ
2. वैशद्यात् कण्ठोक्तिः-क.

सर्वेषां ब्रह्मांशत्वज्ञत्वादिनैकरूपत्वे .... श्रोत्रियादेरनुज्ञायते । अभिशस्तादेस्तु परिह्रियते ॥ ४७ ॥ (१६२)

अधिकरणतयार्थमनुवदन् अनन्तरसूत्रशङ्कामाह — **एवम्** इति । **अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत्** । आदिशब्दार्थमाह — **यथा च** इति ॥ ४७ ॥

## असन्ततेश्चाऽव्यतिकरः ॥ २-३-४८ ॥

ब्रह्मांशत्वादिनैकरूपत्वे सत्यपि ... ... इत्यभिप्रायेण स्वपक्षे भोगव्यतिकराभाव उक्तः ॥ ४८ ॥ (१६३)

**असन्ततेश्चाऽव्यतिकरः** । समन्तात् ततिः **सन्ततिः**, तदभावः अणुत्वम् । [1] तात्पर्यमाह — **भ्रान्त** इति ॥ ४८ ॥

ननु भ्रान्तब्रह्मजीववादेऽपि ... ...

## आभास एव च ॥ २-३-४९ ॥

अखण्डैकरसप्रकाशमात्रस्वरूपस्य ... ... एकत्वाभ्युपगमात् भोगव्यतिकरस्तदवस्थ एव ॥ ४९ ॥ (१६३)

**आभास एव च** । तिरोधानादिकमेवानुपपन्नम् । उपपन्नेऽपि न व्यवस्थोपपत्तिरित्यर्थः ॥ ४९ ॥

पारमार्थिकोपाध्युपहितब्रह्मजीववादे ... ...

## अदृष्टानियमात् ॥ २-३-५० ॥

उपाधिपरंपराहेतुभूतस्यादृष्टस्यापि ... ... स्वसंबन्धेन ब्रह्मस्वरूपच्छेदासंभवात् ॥ ५० ॥ (१६३)

---

1. तात्पर्यार्थमाह-क.

[1] अदृष्टानियमात् प्रदेशभेदादनियम इत्यत्राह — उपाधिभिः इति ॥ ५० ॥

## अभिसन्ध्यादिष्वपि चैवम् ॥ २-३-५१ ॥

अदृष्टहेतुभूताभिसन्ध्यादिष्वप्युक्तादेव हेतोरनियम एव ॥ ५१ ॥

अभिसन्ध्यादिष्वपि चैवम् । चः अवधारणे । आदिशब्दादुद्योगानुष्ठानादिः । [2] उक्तात् — अच्छेद्यत्वादिकात् ॥ ५१ ॥

## प्रदेशभेदादिति चेन्नान्तर्भावात् ॥ २-३-५१ ॥

यद्यप्येकमेव ब्रह्मस्वरूपम्, तच्छेदानर्हम् ... ... सूत्रैर्वेदावलम्बिनामात्मैकत्ववादिनां दोष उच्यते ॥ ५२ ॥

इति अंशाधिकरणम् — ७

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
द्वितीयस्याध्यायस्य तृतीयः पादः ॥ ३ ॥

प्रदेशभेदादिति चेन्नान्तर्भावात् । उपाधीनाम् इत्यादिग्रन्थद्वये जीवानां मिथ ईश्वरेण च व्यतिकर उक्तः । पुनरुक्तिमाशङ्क्याह — पूर्वत्र इति ॥ ५२ ॥

इति अंशाधिकरणम् — ७

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रदीपिकायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥

1. अदृष्टत्वनियमात्–अ.  2. उक्तादेवेति–क.

# द्वितीयाध्याये चतुर्थः पादः ॥

## १. प्राणोत्पत्त्यधिकरणम् ॥

### तथा प्राणाः ॥ २-४-१ ॥

**ब्रह्मव्यतिरिक्तस्य वियदादेः कृत्स्नस्य ... ... ऋषिशब्दश्च सर्वज्ञे तस्मिन्नेव युज्यते । न त्वचेतनेष्विन्द्रियेषु ॥ १ ॥**

(१६९-१७०)

**तथा प्राणाः** । पादसङ्गतिमाह — **ब्रह्मव्यतिरिक्तस्य** इति । [1]उत्पत्तिद्वैविध्ये सिद्धे हि प्राणानां सा कीदृशीति चिन्ताप्राप्तिः । अतस्तस्मिन् पूर्वपादसिद्धे प्राक् प्रकृतजीवोपकरणानामुत्पत्तिप्रकारचिन्तेति सङ्गतिरित्यर्थः । प्राणविषयत्वेनोपगते वाक्ये नित्यत्वस्योत्पत्तिनिषेधस्य चाभावात्, किमुत्पद्यते न वेति चिन्ता न कृता । कथं [2]श्रौतत्वस्य सूत्रितत्वमित्यत्राह — **तथा** इति । श्रुतेरस्पष्टत्वादाह — **का पुनः** इति । परमात्मपरत्वव्यावृत्त्यर्थमाह — **बहुवचनात्** इति ॥

राद्धान्ते — अनन्तरसूत्रस्य बहुवचनश्रुतिनिर्वाहपरत्वात् राद्धान्तयुक्तयोऽन्यत्रोक्ताः अत्राभिप्रेताः इति भावेनाह — **वियदादि** इति । **ऋषिशब्दश्च** इति । [3]न करणस्वारस्यम्, अपि तु द्रष्टृत्वेनेति भावः । प्रकृत्यस्वारस्यादपि विभक्तिप्रत्ययास्वारस्यं न्याय्यम ॥ १ ॥

**ऋषयः प्राणा इति च बहुवचनश्रुतिः ... ...**

### गौण्यसंभवात् तत्प्राक्छ्रुतेश्च ॥ २-४-२ ॥

---

1. उत्पत्तिद्वैविध्ये हि प्राणानां वा कीदृशी–अ.

2. श्रुतत्वस्य–क.　　　3. न कारणे स्वारस्यम्–अ.

बहुवचनश्रुतिर्गौणी, बह्वर्थासंभवात् । तस्यैव परमात्मनः सृष्टेः प्रागवस्थानश्रुतेरेव ॥ २ ॥ (१७०)

गौण्यसंभवात् तत्प्राक्छ्रुतेश्च । एव इति च-अर्थ उक्तः ॥ २ ॥

## तत्पूर्वकत्वाद्वाचः ॥ २-४-३ ॥

इतश्च प्राणशब्दः परमात्मवचनः, ... ... तदानीं वागादीन्द्रियकार्याभावाच्च तानि च सन्तीत्यर्थः ॥ ३ ॥

तत्पूर्वकत्वाद्वाचः । वाक्—शब्दः प्रदर्शनार्थः । सृष्टेः प्राक् वाक्चक्षुरादीन्द्रियविषयभूतानां रूपाद्यभावेन वागिन्द्रियकार्याभावात् [1] न तत्क्लृप्तिरित्यर्थः । सौत्रो वाक्शब्दः शब्दपरः । उक्तार्थे श्रुतिं दर्शयन् फलितमाह— तद्धेदम् इति ॥ ३ ॥

इति प्राणोत्पत्त्यधिकरणम्—१

## २. सप्तगत्यधिकरणम् ॥

## सप्त गतेर्विशेषितत्वाच्च ॥ २-४-४ ॥

तानीन्द्रियाणि किं सप्तैव स्युः अथवा ... ... जीवस्याल्पाल्पोपकारकत्वमात्रेणौपचारिकः प्राणव्यपदेशः ॥ ४ ॥ (१७२-१७३)

सप्त गतेर्विशेषितत्वाच्च । सङ्गतिः स्फुटा । श्रुतिविप्रतिपत्तेः, न तु वादिविमतेरित्यर्थः । पुरुषभेदाभिप्राया इति । 'सप्त प्राणाः' इति—प्रागुक्तेरिति भावः । स्वरूपतः, न तु कार्यादिभिः । परमा गतिः —योगः, मोक्षार्थगमनरूपत्वात् । ज्ञानानि इति । करणे ल्युडिति भावः ॥४॥

1. न तत्क्लृप्तिरित्यर्थः । पुरुषभेदाभिप्रायेति—अ. (मध्ये ग्रन्थाभावः)

## सिद्धान्तः

इति प्राप्ते प्रचक्ष्महे —

### हस्तादयस्तु स्थितेऽतो नैवम् ॥ २-४-५ ॥

**न सप्तैवेन्द्रियाणि, अपि त्वेकादश, ... ... न्यूनव्यपदेशास्तु तत्र तत्र विवक्षितगमनादिकार्यविशेषप्रयुक्ताः ॥ ५ ॥** (१७३)

राद्धान्ते — **हस्तादयस्तु स्थितेऽतो नैवम्** । कारणान्तरापेक्षाव्युदासायाह — **कार्यभेदाच्च** इति । महदहङ्कारप्राक्संस्कारानुगृहीतमनःकार्याः [1] अध्यवसायाभिमानचिन्ताः । अतः इति । **स्थिता** इत्यन्वयः ॥ ५ ॥

इति सप्तगत्यधिकरणम्.२

---

### ३. प्राणाणुत्वाधिकरणम् ॥

### अणवश्च ॥ २-४-६ ॥

**'त एते सर्व एव समाः सर्वेऽनन्ताः' ... ... उपास्यप्राणविशेषणभूतकार्यबाहुल्याभिप्राया ॥ ६ ॥** (१७५)

**अणवश्च** । अधिकरणान्तरम । सांख्यः पूर्वपक्षी । मितत्वे सत्युपलब्ध्यनर्हत्वम् [2] अणुत्वमिह विवक्षितम् । **समत्वम्** उपकरणत्वे, त्वगक्षादेः परिमाणवैषम्यात् ॥ ६ ॥

### श्रेष्ठश्च ॥ २-४-७ ॥

**प्राणसंवादे शरीरस्थितिहेतुत्वेन ... ... पूर्वेणैव तुल्यन्यायत्वेऽपि पृथग्योगकरणमुत्तरचिन्तार्थम् ॥ ७ ॥** (१७६)

---

1. अध्यवसायाभिमानाः चिन्ताः–अ. 2. अणुत्वम् इति–अ.

श्रेष्ठश्च । श्रेष्ठत्वे हेतुं वदन् व्याचष्टे — प्राण इति । जैवम् — [1] जीवसंबन्धि । नेदमधिकरणान्तरम्; किन्तूत्तरस्योपयोगि । अधिकशङ्का-परिहाराभावात् ॥ ७ ॥

इति प्राणाणुत्वाधिकरणम् — ३

## ४. वायुक्रियाधिकरणम् ॥

## न वायुक्रिये पृथगुपदेशात् ॥ २-४-८ ॥

**सोऽयं श्रेष्ठः प्राणः किं महाभूतद्वितीयवायुमात्रम् ...... क्रिया-वति द्रव्य एव प्राणशब्दप्रसिद्धिः । न क्रियामात्रे ॥ ८ ॥**

(१७६-१७७)

न वायुक्रिये पृथगुपदेशात् । अधिकरणान्तरम् । राद्धान्ते— पृथगुपदेशात् इति सूत्रखण्डः । ननु अस्मिन् वाक्ये वायोरिव तत्क्रियायाः पृथक् प्राणस्य निर्देश इत्यत्राह — न हि इति । तेज आदिभूतविशेष-रूपाग्न्यादेः पृथगुक्त्यभावात् प्राणो न वायुविशेष इति युक्तिः ‘यः प्राणः स वायुः’ इति [2] बाधिता । पूर्वोक्तसिद्धान्तयुक्तिस्त्वबाधिता ॥ ८ ॥

**किमयं प्राणो वायोर्विकारः सन् ......**

## चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः ॥ २-४-९ ॥

**नायं भूतविशेषः, अपि तु चक्षुरादिवत् ...... ‘योऽयं मध्यमः प्राणः’ इत्यादिषु विशिष्याभिधानात् ॥ ९ ॥**                    (१७७)

अनन्तरसूत्रशङ्कामाह — किम् इति । किमग्नेरिव वायुत्वप्रहाणेना-वस्थान्तरापत्तिरिति शङ्का । चक्षुरादिवत् तु तत्सहशिष्ट्यादिभ्यः ।

1. जीवसंबन्धी-क.          2. श्रुतिबाधिता-अ.

विशेष्याभिधानकरणतुल्योपकारौ आदिशब्दोक्तौ। शरीरवत् भूतत्वाप्रहाणेन [१]अवस्थान्तरापन्नं जीवोपकरणं प्राणः। तच्च 'यः प्राणः स वायुः' इति सिद्धम् ॥ ९ ॥

चक्षुरादिवत् अस्यापि करणत्वे ... ...

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ २-४-१० ॥

अकरणत्वात् – करणं क्रिया, अक्रियत्वात् ... ... जीवस्योपकरोतीति चक्षुरादिवत् करणत्वम् ॥ १० ॥ (१७७-१७८)

अकरणत्वाच्च न दोषस्तथा हि दर्शयति। शैथिल्याभिधानात् दर्शयति इत्यन्वयः ॥ १० ॥

नन्वेवं नामभेदात् कार्यभेदाच्च ...

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ २-४-११ ॥

यथा कामादिवृत्तिभेदे तत्कार्यभेदेऽपि ... ... प्राणस्यैव वृत्तिविशेषाः, न तत्त्वान्तरमित्यवगम्यते ॥ ११ ॥ (१७८)

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते। विचिकित्सा – सन्देहः। श्रद्धा – त्वरा। धीः – चिन्ता। तत्तदवस्थाज्ञानहेतुत्वरूपावस्थाभेदवत् मनस्तैः शब्दैरुच्यते ॥ ११ ॥

इति वायुक्रियाधिकरणम् – ४

---

### ५. श्रेष्ठाणुत्वाधिकरणम् ॥

## अणुश्च ॥ २-४-१२ ॥

---

१. अवस्थान्तरापन्नजीवोप–अ.

अणुश्चायं, पूर्ववदुत्क्रान्त्यादिश्रवणात् ... ... प्राणायत्त-स्थितित्वेन वैभववादोपपत्तिः इति ॥ १२ ॥

अणुश्च। श्रुत्या पूर्वपक्षोत्थितावपि परिहाराधिक्यादधिकरणान्तरत्वमिति न 'श्रेष्ठश्च' इत्येतत्तुल्यता ॥ १२ ॥

इति श्रेष्ठाणुत्वाधिकरणम्—५

---

## ६. ज्योतिराद्यधिष्ठानाधिकरणम् ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात् ॥ २-४ १३ ॥

सश्रेष्ठानां प्राणानां ब्रह्मण उत्पत्तिः .... .... प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादि ॥ १३ ॥ (१८१-१८२)

ज्योतिराद्यधिष्ठानं तु तदामननात् प्राणवता शब्दात्। सङ्गति-माह — सश्रेष्ठानाम् इति। इयत्ता — संख्या। नैरपेक्ष्यात् — तच्च जीवस्याप्याराध्यत्वात् फलदत्वाच्चेति भावः। प्राणव-दुक्तिः दृष्टान्ततया 'परात् तु तत्' इत्युक्तत्वात् ॥ १३ ॥

## तस्य च नित्यत्वात् ॥ २-४-१४ ॥

सर्वेषां परमात्माधिष्ठितत्वस्य नित्यत्वात् ... ... 'विष्टभ्या-हमिदं कृत्स्नमेकांशेन स्थितो जगत्' इति ॥ १४ ॥ (१८२)

तस्य च नित्यत्वात्। अग्न्यादेः सत्ताऽपि तदधीना, किं पुनरिन्द्रियाधिष्ठितिरित्यर्थः। विष्टभ्य इति। कृत्स्नशब्दे कटाक्षः ॥ १४ ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम्—६

---

## ७. इन्द्रियाधिकरणम् ॥

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २-४-१५ ॥

किं सर्वे प्राणशब्दनिर्दिष्टा इन्द्रियाणि ... ... चक्षुरादिषु समनस्केष्वेव इन्द्रियशब्दो व्यपदिश्यते ॥ १५ ॥ (१८६)

त इन्द्रियाणि तद्व्यपदेशादन्यत्र [1] श्रेष्ठात् । सङ्गतिः स्फुटा ॥

## भेदश्रुतेर्वैलक्षण्याच्च ॥ २-४-१६ ॥

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ... ... रूपमभवन्–शरीरमभवन्, तदधीनप्रवृत्तयोऽभवन्नित्यर्थः ॥ १६ ॥ (१८३-१८४)

भेदश्रुतेर्वैलक्षण्याच्च । मनःषष्ठानि इति । आदिशब्दात् 'इन्द्रियाणि दशैकं च' इत्यादि गृह्यते । प्राणाधीन इति । प्राणशब्द-प्रवृत्तिनिमित्तभेदश्च वैलक्षण्यम् उक्तम् ॥ १६ ॥

इति इन्द्रियाधिकरणम्—७

---

## ८. संज्ञामूर्तिक्लृप्त्यधिकरणम् ॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २-४-१७ ॥

भूतेन्द्रियादीनां समष्टिसृष्टिः ... ... अतः परस्यैव ब्रह्मणः कर्मेदं नामरूपव्याकरणम् ॥ १७ ॥

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् । पेटिकासङ्गति-माह— भूतेन्द्रियादीनाम् इति । पूर्वपादोक्तसमष्टिसृष्टिचिन्तया व्यष्टि-चिन्ता सङ्गतिः । तृतीयादितः पूर्वमप्येकपेटिका । अधिकरणान्तराणि प्रासङ्गिकानि । जीवोपकरणनिरूपणत्वात् पादसङ्गतिः । पूर्वसूत्रविषय-

---

1. श्रेष्ठात् वैलक्षण्या मन.षष्ठानि-अ.

वाक्यस्थानि [1]खादिसमष्टितत्त्वानि परमात्मकर्तृकाणीति प्रागुक्तम् । [2]व्यष्टि-सृष्टिस्तु जीवकर्तृकः प्रतीयते इत्यवान्तरसङ्गतिः ॥

व्याकरवाणि इति ब्रह्मकर्तृकत्वसिद्धिरित्यत्राह — न हि इति । कर्तृस्थक्रियः — जीवेनात्मना इति तृतीयाभिहित—कर्तृस्थक्रियः । नैवम् इत्यादि । मुख्यकोटिरित्यर्थः । स्पष्टम् ॥

राद्धान्ते — किं त्रिवृत्करणं, कथं च तदण्डसृष्ट्यर्थं, कथं च त्रिवृत्करणश्रुतौ तेजोबन्नप्रतीतिः, किं नामरूपव्याकरणमित्यत्राह — अतः सेयम् इति ॥ १७ ॥

**अथ स्यात् नामरूपव्याकरणस्य ... ...**

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २-४-१५ ॥

**यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्ट ... ... ... त्रिवृत्करण-प्रदर्शनायोगात् त्रिवृत्कृतानां कार्येषु अग्न्यादित्यादिषु क्रियते ॥ १८ ॥**

**( १८७-१८९ )**

अनन्तरसूत्रशङ्कामाह — अथ स्यात् इति । **मांसादि भौमं यथाशब्दमितरयोश्च** । अत्र त्रिवृत्कृतानामपि पृथिव्यप्तेजसां स्थूलत्वाणुत्वाणीय-स्त्वात् त्रिवृत्कृतेष्वपि तत्तद्भूतांशानां तथात्वं स्यात् । ततश्च स्थविष्ठाण्वणीयसां पुरीषमांसमनसां मध्ये मांसमनसोराप्यतैजसत्वे स्याताम् । तदयुक्तम्, 'अन्नमयं हि सोम्य मनः' इति वाक्यशेषात् । 'अन्नमशितम्' इत्युपक्रमे तयोरपि पार्थिवत्वश्रवणात् ॥

द्वितीयपर्यायेऽपि स्थविष्ठाण्वणीयस्सु मूत्रलोहितप्राणेषु मूत्रप्राणयोः पार्थिवतैजसत्वे स्याताम् । तत् 'आपः पीताः' इत्युपक्रमविरुद्धम्,

---

1. खादिसमष्टिकार्याणि—अ. 2. व्यष्टिसर्गस्तु—अ.

'आपोमयः प्राणः' इति वाक्यशेषविरुद्धं च । तथा अस्थिमज्जाशब्दु अस्थि-मज्जयोः पार्थिवाप्यत्वे स्याताम् । तद् 'तेजोऽशितम्' इत्युपक्रमविरुद्धं, 'तेजोमयी वाक्' इति वाक्यशेषविरुद्धं च इति न त्रिवृत्करणोपदेशः । किं तु त्रेधा परिणामविशेषोपदेश इत्यर्थः ॥

व्याकरणतः पश्चात् त्रिवृत्करणप्रतीतिं परिहरति — [1] **अत्रि-वृत्कृतानाम्** इति । सङ्कल्पवाक्ये पूर्वभाव उत्पत्तौ पश्चाद्भावित्वसाधकः । फले बुद्धिस्थे हि साधनसङ्कल्पः यथा 'स्वर्गकामो यजेत' इति, यथा च 'बहु स्यां प्रजायेय' इति च । 'जायते अस्ति' इति व्युत्पत्तिक्रमः । [2] अतश्चोपबृंहणवचनवशात् 'अग्निहोत्रं जुहोति' 'यवागूं पचति' [3] इतिवत् अर्थक्रमेण पाठक्रमबाध इति त्रिवृत्करणादनन्तरं व्याकरणमित्यर्थः । अग्न्यादौ त्रिवृत्करणप्रदर्शनं परिहरति— **अण्डान्तवर्तिषु** इति । **अग्न्या-दित्यादिषु** त्रिवृत्कृतभूतकार्येषु सत्सु त्रिवृत्कृतभूतकार्यत्वादेव **अग्न्यादिषु त्रिवृत्करणप्रदर्शनं हि क्रियते** इत्यन्वयः । पाठो निरूप्यः ॥ १८ ॥

**स्यादेतत् — 'अन्नमशितम्' 'आपः पीताः' ...**

## वैशेष्यात् तु तद्वादस्तद्वादः ॥ २-४-१९ ॥

**वैशेष्यं — विशेष-भावः । त्रिवृत्करणेन ... ... द्विरुक्ति-रध्यायसमाप्तिं द्योतयति ॥ १९ ॥**

इति संज्ञामूर्तिक्लृप्त्यधिकरणम् — ८

### इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये द्वितीयस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

**॥ समाप्तश्चाध्यायः ॥**

---

1. अण्डसृष्टेरित्यादि–अ.
2. अतश्चोपबृंहणवशाच्च अग्निहोत्रं–अ.
3. इतिवत् त्रिवृत्करणानन्तरम्–क.

अनन्तरसूत्रमवतारयति — स्यादेतत् इति । वैशेष्यात् तु तद्वाद-स्तद्वादः । धर्मिपरे विशेषशब्दे तद्धितकरणात् वैशेष्यम् विशेषभावः आधिक्यलक्षणः ॥

इति संज्ञामूर्तिक्लृप्त्यधिकरणम्—८

इति हरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विरचितायां श्रुतप्रदीपिकायां द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥



# तृतीयाध्याये प्रथमः पादः ॥

## १. तदन्तरप्रतिपत्त्यधिकरणम् ॥

## तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३-१-१ ॥

अतिक्रान्ताध्यायद्वयेन निखिलजगदेककारणम् ... ... अत एवं प्रश्नप्रतिवचनाभ्यां देहहेतुभूतैः भूतसूक्ष्मैः सह तत्र तत्र यातीति गम्यते ॥ १ ॥ (१९३-१९४)

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्** । उत्तरद्विकसङ्गत्यर्थं पूर्वद्विकार्थमाह — **अतिक्रान्त** इति । **अयमर्थः** इत्यन्तेन प्रथमाध्यायार्थ उक्तः । स्मृतिइत्यादिना द्वितीयस्य । द्वयोरनुगतार्थमाह — **अतः** इति । द्वितीयद्विकार्थमाह — **उत्तरेण** इति । सिद्धविषयचिन्ता वृत्ता ; साध्यविषयचिन्ता वर्तिष्यत इत्यर्थः । तृतीयस्यार्थमाह — **तत्र** इति । कथं प्रथमद्वितीययोरुपासनोक्तिरित्यत्राह — **उपासन** इति । **तत्र** इति । [1] जागरे दोषाः फलिताः स्युरिति भावः ॥

प्रश्नानन्तरं भूतसूक्ष्मपरिष्वङ्गोक्त्यदर्शनात् अर्थान्तरव्यवधानशङ्काव्युदासाय [2] अनेकप्रश्नतत्प्रतिवचनरूपतां प्रकरणस्य दर्शयति — **पञ्चाग्नि** इत्यादिना । **व्यावर्तने** — व्यावर्तकाकारौ । **श्रद्धा** — भूतसूक्ष्मावस्थाविशेषः । **सोमराजा** — अमृतमयदेवशरीरम् । **अभिलप्याः** —

---

1. जागरदोषाः-क.

2. अनेकप्रश्नक्रमप्रतिवचनरूपताम्-अ. अनेकप्रश्नतत्प्रतिवचनक्रमरूपताम् ' इति श्रुतप्रकाशिकायाम् ।

[1] समासावगतसंबन्धो वाच्यवाचकभावरूपविशेष इति भावः । ततः किं भूतसूक्ष्मान्वयसिद्धेरित्यत आह — **एवमुक्ते** इति प्रश्नप्रतिवचनवाक्ययो-र्द्वयोरपि **आहुतौ** इति निर्देशेन होतव्यद्रव्याकांक्षायां स्ववाक्यस्थतया **अपाम्** एव होतव्यत्वोपपत्तेः । पञ्चस्वाहुतिषु ताः अनुवृत्ता इति तासां पुरुषवचस्त्व-मित्यर्थः । ततः किमित्यत आह — **अतः** इति ॥ १ ॥

**ननु 'आपः पुरुषवचसः' इत्युक्ते ... ...**

## त्र्यात्मकत्वात् तु भूयस्त्वात् ॥ ३-१-२ ॥

**तुशब्दश्चोद्यं व्यावर्तयति ... ... देहे च लोहितादिभूयस्त्वे-नारंभकेषु अपां भूयस्त्वं गम्यते ॥ २ ॥** (१९५)

अनन्तरसूत्रशङ्कामाह — **ननु** इति । **त्र्यात्मकत्वात् तु भूयस्त्वात्** । ननु [2] एकैकं त्रिवृत्कृतानि सर्वाणि भूतानि देहे सन्ति । तत् कथं त्रिवृत्करणं सर्वभूतसद्भावे हेतुरुक्तः ? उच्यते — त्रिवृत्करणश्रुतेः प्रत्येकं त्रिवृत्कृतभूतसमुदायस्यैव व्यष्टिदेहारंभकताप्रतिपादनपरत्वादिति । व्यष्टिसृष्ट्यर्थमनुप्रवेष्टव्यतया श्रुतानां तासां [3] देवतानामेकैकस्य न हि त्रिवृत्करणमुच्यते **तिस्रो देवता अनुप्रविश्य तासां त्रिवृतं त्रिवृतमेकैकाम्** इति । अतः त्रिवृत्कृतसमुदाय एव देहारंभकः । [4] **अतो देहे च** इति । त्रिवृत्कृतात् भूतान्तरात् त्रिवृत्कृतानामपां देहे भूयस्त्वमित्यर्थः ॥ २ ॥

## प्राणगतेश्च ॥ ३-१-३ ॥

---

1. समासावगतः संबन्धो वाच्यवाचकरूपविशेषः—अ

2. एकैक त्रिवृत्तानि सर्वाणि-क.

3. देवतानामेकैकस्यापि त्रिवृत्करणश्रुतेः प्रत्येकं ता अनुप्रविश्य तासां त्रिवृतं त्रिवृतम्-क.

4. देहे चेति-क.

इतश्च भूतसूक्ष्मपरिष्वक्तस्य गमनमिति गम्यते । ... ... तदाश्रयभूतानां भूतसूक्ष्माणामपि गतिरभ्युपगन्तव्या ॥ ३ ॥ (१९५)

प्राणगतेश्च ।

[1] स्मर्यते च ॥

सूत्रद्वयं स्फुटम् ॥ ३ ॥

## अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३-१-४ ॥

'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति ... ... अतः चक्षुराद्यप्ययश्रुतिरधिष्ठातृदेवतापक्रमणद्वारा ॥ ४ ॥ (१९५)

अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात् । अनपियद्भिः — अप्यय-रहितैः । केशाद्यप्ययश्रुतिवत् वागाद्यप्ययश्रुतिस्तत्तद्देवतापक्रमणद्वारा [2] । वागभिमानिदेवता अग्निमप्येति — वागभिमानित्वं विहाय केवलमग्निरूपेण तिष्ठतीत्यर्थः ॥ ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३-१-५ ॥

यदुक्तम् — अद्भिः सूक्ष्माभिः भूतान्तरसंसृष्टाभिः ... .... अतो भूतान्तरसंसृष्टाभिरद्भिः संपरिष्वक्तो जीवो रंहतीत्युपपन्नम् ॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः । श्रद्धा इति । प्रश्नगतप्रकारस्य प्रतिवचनान्ते निगमनात् मध्येऽपि तत्प्रकार [3] एवोक्त इति

1. 'स्मर्यते च'—श्रीभाष्ये श्रुतप्रकाशिकायां च इदं सूत्रं नोपलभ्यते । श्रुतिप्रमाणोदाहरणानन्तरं 'मनःषष्ठानि' इति स्मृतिवचनप्रदर्शनात् पूर्वं 'स्मर्यते च' इति भाष्यकारवाक्यत्वेन दृश्यते ॥

2. अपक्रमणपरा । वागभिमानिनी देवता–अ.

3. एवेति । श्रद्धा–क.

श्रद्धा — आपः इत्यर्थः । अपामेव, न तु मनोवृत्तिविशेषस्य ॥ ५ ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३-१-६ ॥**

यत् पुनरुक्तम् — अद्भिः संपरिष्वक्तो जीवो यातीति ... ... विशेष्ये जीव एव पर्यवस्यति । अतः संपरिष्वक्तो जीवो यातीत्युपपद्यते ॥ ६ ॥　　　　(१९६-१९७)

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः । **अस्मिन्नेव वाक्ये**— महावाक्ये इत्यर्थः । **तद्भूय** इति । तद्योगी भवतीत्यर्थः । [1]स्फुटजीव-वाक्यैकार्थ्यात् [2]अस्फुटार्थस्य वाक्यस्य तत्परत्वमित्यर्थः । श्रद्धा-शब्देन [3]तद्विशिष्टकथनं लाक्षणिकमित्यत्राह — **देहस्य** इति ॥ ६ ॥

ननु च 'तं देवा भक्षयन्ति' इति .... ....

**भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति ॥ ३-१-७ ॥**

वाशब्दश्चोद्यं व्यावर्तयति । ... ... तस्मात् भूतसूक्ष्मैः संपरिष्वक्तो जीवो रंहतीति सिद्धम् ॥ ७ ॥　　　　(१९७-१९८)

अनन्तरसूत्रस्याकांक्षां चोद्यमुखेन दर्शयति — **ननु** इति । **भाक्तं वाऽनात्मवित्त्वात् तथा हि दर्शयति** । इहामुत्र चोपकरणत्वं विवृणोति— **इह** इति । **अन्नत्वेन** — भोग्यत्वेन । [4]भक्षणस्यान्नविनाशरूपव्यावृत्तिः । अधिकरणार्थमुपसंहरति — **तस्मात्** इति ॥ ७ ॥

इति तदन्तरप्रतिपत्त्यधिकरणम् — १

---

1. स्फुटम् । जीवसंबन्धवाक्यैकार्थ्यात्–अ.
2. अस्फुटार्थस्य तत्परत्वम्-क.
3. तद्विशिष्टाभिधानम्-क　　4. अन्नेन भक्षणस्यान्न-क.

## २. कृतात्ययाधिकरणम् ॥

## कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३-१-८ ॥

केवलेष्टापूर्तदत्तकारिणाम्, धूमादिना ... ... तत्राकाशावरोहणाद्यथेतम्; वाय्वादिप्राप्तेः पितृलोकाद्यप्राप्तेश्चानेवम् ॥ ८ ॥ (२०१-२०२)

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च। यावत्संसारं प्रकृत्यसंबन्धो निषिद्धः। अथ [1] तद्धेतुभूतकर्मसंबन्ध उच्यते इति सङ्गतिः। **अभ्याशः** — अभ्यागन्तारः। **अमुक** इति श्रुत्यर्थापत्तिकथनम्। [2] **यथेतम्** — यथागतम् ॥ ८ ॥

## चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३-१-९ ॥

'रमणीयचरणाः' 'कपूयचरणाः' इति ... ... सुखदुःखप्राप्त्यसंभवात्। सुखदुःखे हि पुण्यपापरूपकर्मफले ॥ ९ ॥ (२०३)

चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः। **अनवद्यानि कर्माणि** इति यज्ञादीनि; **अस्माकं सुचरितानि** इति आचार इति पूर्वपक्षिणो भावः। **पुण्य**शब्देन यज्ञादि उच्यते ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३-१-१० ॥

एवं तर्हि अफलत्वादाचारस्य ... ... कर्मोपलक्षणार्थेति कार्ष्णाजिनेरभिप्रायः ॥ १० ॥ (२०३)

---

1. तद्धेतुकर्मसंबन्धः—क. 2. यथेति—अ.

आनर्थक्यमिति चेन्न तदपेक्षत्वात् । स्फुटम् ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ३-१-११ ॥

'पुण्यं कर्माचरति' 'पापं कर्माचरति' .... .... फलमिति तु स्वीकृतम् । अतः सानुशया एव प्रत्यवरोहन्ति ॥ ११ ॥

(२०३-२०४)

सुकृतदुष्कृते एवेति बादरिः । पृथक् इति । [1]'अनवद्यानि कर्माणि' इति प्रत्यक्षश्रुतिसिद्धकर्मोक्तिः । गोबलीवर्द इति । लाक्षणिकार्थस्वीकारादपि मुख्यार्थापरित्यागेन विषयसङ्कोचो युक्त इति भावः । अधिकरणार्थमुपसंहरति—अतः इति ॥ ११ ॥

इति कृतात्ययाधिकरणम्—२

---

### ३. अनिष्टादिकार्यधिकरणम् ॥

## अनिष्टादिकारिणामपि च श्रुतम् ॥ ३-१-१२ ॥

केवलेष्टापूर्तदत्तकारिणः ... ... ते सर्वे गच्छन्ति इत्यविशेषेण सर्वेषामेव गतिश्रवणात् ॥ १२ ॥ (२०५-२०६)

अनिष्टादिकारिणामपि च श्रुतम् । कर्मसंबन्धनियम उक्तः । तत्रापि साधुकर्मसंबन्धे नियमो नेत्युच्यते इति सङ्गतिः । देहारंभः पञ्चमाहुत्यपेक्ष इति श्रुत्यर्थापत्तिश्चाभिप्रेता ॥ १२ ॥

एवं तर्हि सुकृतदुष्कृतकारिणोः ... ...

---

1. यान्यनवद्यानि इति प्रत्यक्षश्रुतिसिद्धकर्माणि—अ.

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३-१-१३ ॥

तुशब्दः शङ्कां व्यावर्तयति ... ... 'वैवस्वतं सङ्गमनं जनानां यमं राजानम्' इत्यादिषु ॥ १३ ॥ (२०६)

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् । संयमने इति निमित्तसप्तमी । अयं लोको नास्ति इति । नात्र सुखमित्यर्थः ॥ १३ ॥

## स्मरन्ति च ॥ ३-१-१४ ॥

स्मरन्ति च सर्वेषां ... ... वशं यान्ति यमस्य भगवन् किल इत्यादिषु ॥ १४ ॥ (२०६)

## अपि सप्त ॥ ३-१-१५ ॥

पापकर्मणां गन्तव्यत्वेन रौरवादीन् सप्त नरकानपिस्मरन्ति ॥ (२०६)

ननु सप्तसु लोकेषु गच्छतां ... ...

## तत्रापि तद्व्यापारादविरोधः ॥ ३-१-१६ ॥

तेष्वपि सप्तसु यमाज्ञयैव ... ... पश्चाच्चन्द्रारोहावरोहौ स्तः ॥ (२०७)

स्मरन्ति च ॥ १४ ॥

अपि सप्त ॥ १५ ॥

तत्रापि तद्व्यापारादविरोधः । त्रितयं स्फुटम् । इति पूर्वपक्षसूत्राणि ॥

## सिद्धान्तः

इति प्राप्त उच्यते—

### विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३-१-१७ ॥

तु शब्दः पक्षव्यावृत्त्यर्थः । ... ... य इष्टादिकारिणः ते सर्वे' इति परिणेयम् ॥ १७ ॥ (२०७)

विद्याकर्मणोरिति तु प्रकृतत्वात् । इतिशब्दस्य हेत्वर्थता दर्शिता **फलभोगार्थत्वात्** इति । विद्याप्रसङ्गः किमर्थः इत्यत्राह — **एतदुक्तम्** इति । **विद्याविषयत्वम्** इति । विषयशब्दः फलपरः । **परिणेयम्**—निर्वाह्यम् ॥ १७ ॥

ननु पापकर्मणां चन्द्रगमनाभावे ... ...

### न तृतीये तथोपलब्धेः ॥ ३-१-१८ ॥

तृतीयस्थानस्य शरीरारंभाय ... ... पुरुषवचस्त्वहेतुत्वमात्रं प्रतिपादयति, नान्यन्निवारयति, अवधारणाश्रवणात् ॥ १८ ॥ (२०८)

**न तृतीये तथोपलब्धेः** । **जायस्व म्रियस्व** इति । [1] जायन्ते म्रियन्ते इत्यर्थः । वेदस्वातन्त्र्यादीश्वरशासनं वा । फलानुभवाश्रयतया **स्थानत्वम्** । **पञ्चम्याम्** इति । न त्वन्ययोगव्यवच्छेद इत्यर्थः ॥ १८ ॥

### स्मर्यतेऽपि च लोके ॥ ३-१-१९ ॥

पुण्यकर्मणामपि केषाञ्चित् ... ... लोके स्मर्यते द्रौपदीधृष्टद्युम्नप्रभृतीनाम् ॥ १९ ॥ (२०८)

1. जह्वो मम्रे इत्यर्थः—क.

स्मर्यतेऽपि च लोके। स्फुटम् ॥ १९ ॥

## दर्शनाच्च ॥ ३-१-२० ॥

श्रुतावपि दृश्यते केषाञ्चित् ··· ··· भूतयोः पञ्चमाहुतिमन्तरेणोत्पत्तिर्दृश्यते ॥ २० ॥ (२०८)

दर्शनाच्च। अण्डजम् इति। कार्यत्रैविध्यात् त्रीणि [1] बीजानि इत्यर्थः ॥ २० ॥

ननु स्वेदजानामत्र सङ्कीर्तनं ··· ···

## तृतीयशब्दावरोधः संशोकजस्य ॥ ३-१-२१ ॥

संशोकजस्य—स्वेदजस्यापि ··· ··· अतः केवलपापकर्मणां चन्द्रप्राप्तिर्न संभवति ॥ २१ ॥ (२०८-२०९)

तृतीयशब्दावरोधः संशोकजस्य। [2] उद्भिज्जस्यायोनिजत्वसाम्यात् तृतीयशब्देन सङ्ग्रहः ॥ २१ ॥

इति अनिष्टादिकार्यधिकरणम्—३

---

## ४. तत्स्वाभाव्यापत्त्यधिकरणम् ॥

## तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ३-१-२२ ॥

इष्टादिकारिणो भूतसूक्ष्मपरिष्वक्ताः .... .... तदापत्तिवचनं तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम् ॥ २२ ॥ (२१२)

तत्स्वाभाव्यापत्तिरुपपत्तेः। सङ्गतिं दर्शयति— इष्टादि इति।

---

1. बीजादित्यर्थः—अ.
2. ऊष्मजत्वायोनिजत्वसाम्यात्—अ.

**आकाशादिभावः**— आकाशादिशरीरकत्वम् । **अविशेषात्** — प्रकरणस्थत्वाविशेषात् । **तत्संसर्गकृततत्सादृश्यापत्त्यभिप्रायम्** इति । तत्संसर्गकृतभेदकस्थूलाकारराहित्यमुक्तमित्यर्थः ॥ २२ ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम्—४

## ५. नातिचिराधिकरणम् ॥

## नातिचिरेण विशेषात् ॥ ३-१-२३ ॥

आकाशप्राप्तिप्रभृति यावद्व्रीह्यादिप्राप्ति ... ... दुर्निष्प्रपततरं —दुःखनिष्क्रमणतरमित्यर्थः ॥ २३ ॥ (२१३-२१४)

नातिचिरेण विशेषात् । अधिकरणान्तरम् । आकाशादौ किञ्चिद्विलम्बो व्रीह्यादावतिविलम्बश्च नातिचिरशब्दसूचितौ ॥ २३ ॥

इति नातिचिराधिकरणम्—५

## ६. अन्याधिष्ठिताधिकरणम् ॥

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३-१-२४ ॥

अवरोहन्तो जीवा व्रीह्यादिभावेन ... ... अत आकाशादिमात्रवचनवत् व्रीह्यादिभावेन जन्मवचनमौपचारिकम् ॥ २४ ॥
(२१४-२१५)

अन्याधिष्ठिते पूर्ववदभिलापात् । अधिकरणान्तरम् । **केवल**शब्दाभिप्रेतमाह— यत्र हि इति । व्रीह्यादिश्लेषेऽपि नियाम्यत्वमस्तीति देहत्वं भूतसूक्ष्माणाम् । [1]धीसङ्कोचानियमनप्रतिबन्धः ॥ २४ ॥

1. धीसङ्कोचादिनियमन-क

## अशुद्धमिति चेन्न शब्दात् ॥ ३-१-२५ ॥

नैतदस्ति—यदन्याधिष्ठिते व्रीह्यादिशरीरे ⋯ ⋯ तादात्विकालपदुःखकारिणमपि रक्षकमेव वदन्ति, पूजयन्ति च तज्ज्ञाः ॥ (२१५–२१६)

**अशुद्धमिति चेन्न शब्दात्** । भाट्टोक्तपरिहारं सांख्योऽनूद्य दूषयति—**न च** इत्यादिना । क्षीरं पित्तोपहतस्य पथ्यं, न तु प्रमेहग्रस्तस्य इतिवन्न विरोधः [1]इत्यर्थः । शङ्कते— **अथोच्येत** इति । अथ गुरूक्तं दूषयति— **नैवम्** इति । लौकिकवैदिकहिंसयोः को भेद इत्यत्राह— [2]**लौकिक्यामपि** इति । रागोत्थानकमानवैषम्यात् व्यवस्था चेत्, श्येनस्यापि अधर्मत्वं न स्यादिति भावः । संवत्सरपश्वालम्भनाद्यभिप्रायेणाह — **तथा** इति । प्रत्यवायपरिहारफलत्वेऽपि रागात् प्रवृत्तिरिति हृदयम् ॥

परिहरति — **तन्न** इति । दुःखहेतुत्वं चास्तीति हिंसात्वमित्यत्राह—**अतिशयित** इति । [3]**न वा उ त्वे** इति । न परं स्वर्गलाभादहिंसात्वक्लृप्तिः । किं तु तत्कण्ठोक्तं चेति भावः । परानर्थोदर्कतया श्येनयागस्य हिंसात्वमिति वैषम्यं फलितम् ॥ २५ ॥

## रेतस्सिग्योगोऽथ ॥ ३-१-२६ ॥

इतश्चौपचारिकं व्रीह्यादिजन्मवचनम् ⋯ ⋯ यथा तद्योगमात्रं प्रतिपादयति, तद्वत् व्रीह्यादिभावोऽपीत्यर्थः ॥ २६ ॥ (२१६-२१७)

**रेतस्सिग्योगोऽथ** । [4]औपचारिकतद्भावोक्तिप्रकरणमविच्छिन्नमिति भावः ॥ २६ ॥

---

1. इति भावः । अन्योक्तं शङ्कते–क. 2. लौकिकमिति–क.
3. न वा उक्त्वेति–अ. (न वा स एतदिति ?)
4. औपचारिकतद्भावोक्त–अ.

**योनेः शरीरम्** ॥ ३-१-२७ ॥

योनिश्वासेः पश्चादेवानुयायिनां ... .... ततः प्रागाशादि-प्राप्तिप्रभृति तद्योगमात्रमेवेत्यर्थः ॥ २७ ॥ (२१७)

**इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमः पादः ॥**

**योनेः शरीरम्** । **योनिः** — योषिद्योनिः । संसरतः शरीरं चेत् भोगार्थम् । न चेत् तन्न संसारिशरीरमित्यभिप्रायः ॥ २७ ॥

इति अन्याधिष्ठिताधिकरणम् — ६

श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचित-शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विरचितायां श्रुतप्रदीपिकायां तृतीयस्याध्यायस्य प्रथमः पादः ॥

— × —

# तृतीयाध्याये द्वितीयः पादः ॥

—×—

## १ सन्ध्याधिकरणम् ॥

### सन्ध्ये सृष्टिराह हि ॥ ३-२-१ ॥

एवं कर्मानुरूपगमनागमनजन्मादियोगेन ... ... स हि कर्ता इत्याह हि। स्वप्नदृक् जीव एव तत्र प्रतीयते ॥ १ ॥ (२१९)

सन्ध्ये सृष्टिराह हि। पादसङ्गतिमाह—एवम् इति। जन्मादि इति आदिशब्देन सुखाद्यनुभवोक्तिः। दुःखित्वं ख्यापितम् इति। स्वर्गेऽपि पातभयादिति भावः ॥ १ ॥

### निर्मातारं चैके पुत्रादयश्च ॥ ३-२-२ ॥

किञ्च एनं जीवं स्वप्ने कामानां निर्मातारम् ··· ··· अत उपकरणाद्यभावेऽपि सृष्टिः उपपद्यते ॥ २ ॥ (२१९-२२०)

निर्मातारं चैके पुत्रादयश्च। पुत्रादयश्च इति लिङ्गं दर्शितम्। कथं परिकरस्य [1] सृष्टित्वम् इत्यत्राह—जीवस्य च इति ॥ २ ॥

सिद्धान्तः

इति प्राप्तेऽभिधीयते—

### मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३-२-३ ॥

तु शब्दः पक्षं व्यावर्तयति। स्वप्ने ···· ···· तथा श्रुत्यैकार्थ्यात् परमपुरुषमेव कर्तारमाह ॥ ३ ॥ (२२०)

---

1. सृष्टत्वम्-क.

राद्धान्ते — मायामात्रं तु कात्स्न्येनानभिव्यक्तस्वरूपत्वात् । [1] मात्रचाप्यनाश्चर्यत्वव्युदासः । तुशब्दस्वार्थमाह — परमपुरुष इति । मिथ्याव्यावृत्त्यर्थं व्याचष्टे — माया इति । न भवन्ति इति मिथ्यात्वमुक्तमित्यत्राह — अत्रापि इति । सृजत्यानुगुण्यात् इति भावः ॥ ३ ॥

स्वाभाविकं चेज्जीवस्यापहतपाप्मत्वादिकं ... ...

## पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३-२-४ ॥

तुशब्दः शङ्काव्यावृत्त्यर्थः । ... ... 'एष ह्येवानन्दयाति' 'भीषाऽस्माद्वातः पवते' इत्यादिषु ॥ ४ ॥ (२२१)

पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ । ततः इति व्याख्येयम् । तत्सङ्कल्पात् इति व्याख्यानम् । बन्धस्य तादधीन्यात् तदन्तर्गतस्य तिरोधेस्तादधीन्यसिद्धिरिति भावः ॥ ४ ॥

## देहयोगाद्वा सोऽपि ॥ ३-१-५ ॥

सोऽपि तिरोभावो देहयोगद्वारेण ... ... तावन्मात्रकालावसानान् तदेकानुभाव्यानर्थानुत्पादयति ॥ ५ ॥ (२२१)

कर्म प्रकृतिश्च हि तिरोधायकमित्यत्राह — देहयोगाद्वा सोऽपि इति । शक्तिः — अपृथग्विशेषणम् । वाशब्दो व्यवस्थितविकल्पवाचीत्यभिप्रयन्नाह — [2] सृष्टिकाल इति ॥

---

1. मात्रचा त्वाप्यनाश्चर्यत्व-अ. ( स्वाप्याश्चर्य ? )

2. सृष्टि ... ... सङ्कल्पाविर्भावस्थलतिव्युदासः । स्वाप्राप्यायविदः-अ. (मध्ये ग्रन्थपातः)

अनयोः सूत्रयोरवान्तरार्थोपपादनपरत्वान्निगमयति — अतोऽनभि-
व्यक्त इति। जीववत् परस्यायोग्यत्वाकारव्युदासाय प्राक् संक्षिप्तं विस्तरे-
णाह—तस्मिन् लोकाः इति। अस्थिरत्वादिहेतुमाह—अतः इति ॥ ५॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३-२-६॥

इतश्च स्वाप्ना अर्था न जीवसङ्कल्पपूर्वकाः ... ... शुभस्य
सूचकमेव सृष्ट्वा पश्येद्। अतः स्वप्ने सृष्टिरीश्वरेणैव कृता ॥ ६॥
(२२१-२२२)

अनन्तरसूत्रं प्रथमपादार्थोपपादकम्। सूचकश्च हि श्रुतेराचक्षते च
तद्विदः। इह स्वप्नसृष्ट्युपयुक्तसत्यसङ्कल्पत्वाविर्भावकल्पितिव्युदासः। स्वाप्ना-
ध्यायविदः — स्वप्नपरवेदवाक्यविदः ॥ ६॥

इति सन्ध्याधिकरणम् — १

---

### २. तदभावाधिकरणम् ॥

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३-२-७॥

इदानीं सुषुप्तिस्थानं परीक्ष्यते .... .... ब्रह्म तु पर्यङ्क-
स्थानीयम्। अतो ब्रह्मैव साक्षात् सुषुप्तिस्थानम् ॥ ७॥
(२२४-२२५)

तदभावो नाडीषु तच्छ्रुतेरात्मनि च। सङ्गतिः [1]स्फुटा।
वृत्त्यभावः अणुत्वात्। राद्धान्ते — कथं कार्यभेद इत्यत्राह — संभवति
च इति। हृदयान्नाड्या निष्क्रम्य पुरीतति शयनम्, प्रत्यवसृप्य इति
श्रुतेः ॥ ७॥

---

1. स्फुटा। राद्धान्ते-अ

## अतः प्रबोधोऽस्मात् ॥ ३-२-८ ॥

यतो ब्रह्मैव साक्षात् सुषुप्तिस्थानम् ... ... न विदुः सत आगच्छामहे इत्यादिषु ॥ ८ ॥ (२२५)

अतः प्रबोधोऽस्मात् । अतः अस्मात् इति पदद्वयं व्याख्येयम् । यतो ब्रह्मैव, ब्रह्मणः इति व्याख्यानम ॥ ॥ ८ ॥

इति तदभावाधिकरणम्—२

---

### ३. कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३-२-९ ॥

किं सुषुप्त एव प्रबोधसमये उत्तिष्ठति ... ... परमात्मानमुपसंपद्याश्वस्तः पुनर्भोगायोत्तिष्ठति ॥ ९ ॥ (२२६-२२७)

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः** । सङ्गतिः स्फुटा । 'न कञ्चन पाप्मानं स्पृशति' इत्यस्यार्थमाह–**सकलोपाधिविनिर्मुक्तस्य** इति । [1]**न चासौ** इति । सर्वप्रवृत्तिज्ञानशून्यः सुषुप्तः । मुक्तस्तु न तथा इति वैषम्यमुक्तम् । 'न कञ्चन' इति श्रुतेरर्थमाह— **अतः** इति । **आदि** शब्दोक्तम् अनुष्ठानम् । इयं श्रुतिरनुष्ठानाद्यशक्तिपरा । अस्य सुखाद्यनुभव-[2]कर्मानुष्ठानविरह एव, न तु सर्वोपाधिनिर्मोक्षः । **सति संपत्तिः** नाम देहाद्यधिष्ठातृत्वविरहेण ब्रह्मणि स्थितिः, [3]सदा ध्येयत्वादस्य ॥ ९ ॥

इति कर्मानुस्मृतिशब्दविध्यधिकरणम्—३

---

1. न चास्यापीति–अ.
2. कर्मानुष्ठानाविरह एव–अ.
3. सदाधेयत्वात्–अ.

## ४. मुग्धाधिकरणम् ॥

### मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३-२-१० ॥

मुग्धमधिकृत्य चिन्त्यते—किमियं मूर्छा ...... मरणं हि सर्व-प्राणदेहसंबन्धोपरतिः, सूक्ष्मप्राणदेहसंबन्धावस्थितिर्मूर्छा ।१०॥ (३२८)

**मुग्धेऽर्धसंपत्तिः परिशेषात्** । सङ्गतिः स्फुटा । **प्रसिद्ध्युपपत्तेः**—ज्ञानलोपाविशेषादिति भावः । **अभिघातादि** इति आदिशब्दादनिष्टश्रवणम् । निमित्ताकारवैरूप्ये क्रमात् **सुषुप्तिमरण**व्यावर्तके । सुषुप्तौ प्राणो भूयानुप-लभ्यते; मूर्छायामल्पः ; मृतौ न कश्चित् ॥ १० ॥

इति मुग्धाधिकरणम्—४

---

## ५. उभयलिङ्गाधिकरणम् ॥

### न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ३-२-११ ॥

दोषदर्शनाद्वैराग्योदयाय जीवस्यावस्थाविशेषाः ...... इत्यादि-श्रुतिस्मृतिभ्यः उभयलक्षणं हि ब्रह्मावगतम् ॥ ११ ॥

**न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** । सङ्गतिमाह— **दोष** इति ब्रह्मणो हेयप्रत्यनीकत्वं [1]कल्याणगुणाकरत्वं च पादार्थः । [2]स्वप्नार्थ-स्रष्टृत्वसुषुप्तिस्थानत्वयोरपि कल्याणगुणरूपत्वादिह सङ्गतिः । मूर्छा तु सुषुप्तिसापेक्षत्वादिह चिन्तिता ॥

**स्थानेषु** — अवस्थासु । **तत्तदवस्थशरीरे**— जागरादिहेतुत्वावस्थ-शरीरे [3] । अनुत्थानशङ्कां परिहरति — **इत्थम्** इति । राजकोपद्वारभूत-

---

1. कल्याणगुणकत्वम्-क.
2. स्वप्नार्थ-क  3. वस्थे शरीरे-अ.

खड्गप्रहारस्येव द्वारहेतोः साक्षात्पुरुषार्थहेतुत्वात् [1] स्वेच्छाधीनत्वेऽपि तथात्वानपगमात् पूर्वं तक्षोत्थानमित्यर्थः पृथिव्यात्मादि इति । [2] 'तत्संसर्गी च पञ्चम' इति नयादात्मनि स्थिता [3] नाशुद्धिरित्यात्मोपादानम् ॥ १२ ॥

## भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३-२-१२ ॥

यथा जीवस्य प्रजापतिवाक्यावगतापहतपाप्मत्वा ··· स एव संबन्धः तत्तद्विचित्रनियमनरूपलीलारसायैव स्यात् ॥ १२ ॥

(२३०-२३१)

**भेदादिति चेन्न प्रत्येकमतद्वचनात्** । जीवस्योभयलिङ्गकत्वेऽपि तत्तद्देहयोगरूपावस्थाभेदेन ह्यपुमर्थः, तथा परस्यापीत्यर्थः । परिहरति— **तन्न** इति । आवृत्तत्वात् क्षित्यादिसंबन्धस्य जीवस्य नित्यत्वेनाशङ्कनीयस्य [4] व्यावर्त्यत्वायोगाच्च **अमृत**शब्दो न नित्यत्वपरः । किं तु तत्तद्दोषराहित्यपरः । [5] जीवस्य तिरोधानादिश्रुतिवशादुभयलिङ्गत्व [6] श्रुतिसङ्कोच , न तु परस्येत्यर्थः । **न हि** इति । वस्तुस्वभावायत्तत्वाभावान्नापुमर्थत्वमित्यर्थः । **ताद्रूप्ये**–[7] सुखदुःखहेतुत्वे । न ह्येकस्य विरुद्धमाकारद्वयं स्वभाव इति भावः । न परमुपपत्त्या कर्मनिबन्धनत्वं वक्तव्यम्, कण्ठोक्तं चेत्याह— **तथा च** इति । पुरुषभेदेन सुखदुःखकरत्वमाह — **नरकस्वर्ग** इति । कालभेदेनैकस्यैकं प्रति तद्धेतुत्वमाह — **तदेव** इति ॥ १२ ॥

## अपि चैवमेके ॥ ३-२-१३ ॥

---

1. स्वेच्छयाऽधीनत्वेऽपि तस्य तथात्व-अ.
2. तत्संसर्गं च–क. 3. नाशुद्धिर्शङ्कनीयेति–अ.
4. व्यावृत्तत्वायोगाच्च–क 5. जीवस्य तु-अ.
6. श्रुतिः सङ्कोचितः–क.
7. सुखदुःखहेतुत्वेन शोकस्य विरुद्धाकारद्वयम्–अ.

अपि च एके शाखिनः एकस्मिन्नेव देहसंयोगे ... ... तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति" इति ॥ १३ ॥ (२२९)

अपि चैवमेके । स्फुटम् ॥ १३ ॥

अथ स्यात्– "अनेन जीवेनात्मना ... ...

**अरूपवदेव हि तत्प्रधानत्वात् ॥ ३-२-१४ ॥**

देवादिशरीरानुप्रवेशे तेन तेन रूपेण ... ... ब्रह्म निरस्तनिखिल-दोषत्वकल्याणगुणाकरत्वरूपोभयलिङ्गमेव ॥ १४ ॥ (२३१-२३२)

[1] अनन्तरसूत्रशङ्कामाह— **अथ स्यात्** इति । **अरूपवदेव हि तत्प्रधानत्वात्** । केनाकारेणारूपतुल्यत्वमित्यत्राह— **जीववत्** इति । **ननु** इति । कथं कार्यानन्वयः, [2] नियमनादिकार्यान्वयात् धीशब्दपर्यवसानेन कर्मवश्यत्वान्वयाच्चेत्यर्थः । परिहरति — **इत्थम्** इति । सुखदुःखकार्य-विशेषास्पर्शो विवक्षितः, न तु नियमनाद्यस्पर्शः । [3] धीशब्दपर्यवसायिकं कर्मान्वयं परिहरति— **विधि** इति । [4] निष्कर्षकशब्दवत् ब्राह्मणादिशब्दाः जीवपर्यन्ताः स्युः । [5] परपर्यन्तत्वेऽपि 'गौरो ब्राह्मण' इति गौरत्ववत् विशेषणभूतजीवद्वारकं वा कर्मवश्यत्वं स्यादित्यर्थः ॥ १४ ॥

ननु च — '**सत्यं ज्ञानमनन्तं ब्रह्म**' ... ...

**प्रकाशवच्चावैयर्थ्यात् ॥ ३–२–१५ ॥**

1. अनन्तरस्य शङ्काम्-अ.
2. नियमनादिकार्येति-**क**
3. धीशब्दपर्यवसानाधीनै ... ... विधिनिषेधेति-**क.**
4. निष्कर्षशब्दवत्-**क**
5. ब्रह्मपर्यन्तत्वेऽपि-**क.**

यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि ... ... निरस्तनिखिलाविद्यादिदोषत्वाद्यभिधायिवाक्यावैयर्थ्यादुभयलिङ्गमेव ब्रह्म ॥ १५ ॥ (२३२)

अनन्तरसूत्रमवतारयति— ननु च इति । आर्थश्रौतनिषेधौ दर्शितौ । प्रकाशवच्चावैयर्थ्यात् । व्याप्तया चेत्, धीः कस्यचिदेव । [1] श्रुतिबलात् न चेत्, सगुणत्वमपि । न च व्याप्तिविरोधः, धर्मभूतज्ञानस्यैव ज्ञानानाश्रयत्वादिति भावः ॥ १५ ॥

## आह च तन्मात्रम् ॥ ३-२-१६ ॥

किं च 'सत्यं ज्ञानमनन्तम्' इत्यादि ... ... 'नेति नेति' इति च निषेधस्य विषयोऽनन्तरमेव वक्ष्यते ॥ १६ ॥ (२३२)

आह च तन्मात्रम् । सूत्राभ्यां विरोधाभ्युपगमेन तदभावेन चार्थगुणनिषेधः प्रत्युक्तः । अथ श्रौतं परिहरन्नार्थस्य च परिहारोपयोगि मानं दर्शयति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ ३-२-१७ ॥

दर्शयति च वेदान्तगणः ... ... ब्रह्मण उभयलिङ्गत्वात् तत्स्थानप्रयुक्ता दोषा न परं ब्रह्म स्पृशन्ति ॥ १७ ॥ (२३३)

दर्शयति चाथो अपि स्मर्यते । प्रथमे सूत्रे स्वपक्षमूलतया मानं दर्शितम् । इह तु दूषणपरिहाराय । वेदान्तगण इति । अथो शब्दः प्रमाणकार्त्स्न्यपर इति भावः । दर्शयति स्मर्यते इति सौत्रशब्दविवरणम् । निर्दोषत्वं दर्शयति— निष्कलं .... निरवद्यम् इत्यादिना । [2] सामान्यविशेषगोबलीवर्दनयावभिप्रेतौ ॥ १७ ॥

---

1. श्रुतिबलात् चेत् -अ.
2. सामान्यविशेषोत्सर्गापवादनयावभिप्रेतौ । गोबलीवर्दः अस्ति-क.

## अत एव चोपमा सूर्यकादिवत् ॥ ३-२-१८ ॥

यतो नानाविधेषु स्थानेषु स्थितस्यापि ... ... 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।' इत्यादिषु ॥ १८ ॥ (२३३-२३४)

अत एव चोपमा सूर्यकादिवत् । तथात्मैकः इति । एकस्वभाव इत्यर्थः ॥ १८ ॥

अत्र चोदयति —

## अम्बुवदग्रहणात् तु न तथात्वम् ॥ ३-२-१९ ॥

तुशब्दश्चोद्यं द्योतयति । अम्बुवदिति ... ... अतो न तथात्वम् — दार्ष्टान्तिकस्य न दृष्टान्ततुल्यत्वमित्यर्थः ॥ १९ ॥ (२३४)

अम्बुवदग्रहणात् तु न तथात्वम् । दृष्टान्तवैघट्याय दार्ष्टान्तिकस्य पृथिव्यादौ स्थितेः [1] मिथ्यात्वमुपेत्यमिति भावः ॥ १९ ॥

परिहरति —

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥ ३-२-२० ॥

पृथिव्यादिस्थानान्तर्भावात् स्थानिनः ... ... समस्तकल्याणगुणाकरस्य पृथिव्यादिस्थानतोऽपि न दोषसंभवः ॥ २० ॥

(२३४-२३५)

[2] वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च । **समञ्जसं भवति** । इत्यन्तेन भाष्येण **एवम्** इत्यन्तसूत्रांशो व्याख्यातः ।

---

1. मिथ्यात्वमभ्युपेयम्—क
2. वृद्धिह्रासेति सूत्रम् । समञ्जसंभवतीत्यन्तेन एवमित्यन्त—अ.

स्मृतिवचोऽर्थमाह— **यद** इति । दृष्टान्तद्वयं किमर्थं दोषास्पर्शस्यानुगतहेतुक इत्यत्राह— **एतदुक्तम्** इति । देशत इव [1]स्वभावतो विप्रकर्षस्यापि दोषास्पर्शहेतुताज्ञापनमुभयदृष्टान्तफलम् । सन्निकर्षत्रयसमुदायो दोषस्पर्शहेतुः ; अन्यतमविप्रकर्षोऽप्यस्पर्शहेतुरित्यर्थः । **दर्शनाच्च** इति [2]सूत्रांशः ॥ २० ॥

अथ स्यात्— 'द्वे वाव ब्रह्मणो रूपे ... ...

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३-२-२१ ॥

नैतदुपपद्यते यद्ब्रह्मणः प्रकृतविशेषणत्वं ... ... अपि तु पूर्वप्रकृतेयत्तामात्रम् । अत उभयलिङ्गमेव परं ब्रह्म ॥ २१ ॥

(२३५-२३७)

अनन्तरसूत्रशङ्कामाह— **अथ स्यात्** इति । **महारजनं**— कुसुम्भः । **प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः** । अनूद्य निषेधतीति न [3]भ्रान्तजल्पकल्पता इत्यत्राह— **न हि** इति । **नोपपद्यते** इत्यन्तेन हि-शब्दाभिप्रायो विवृतः । **साऽत्र इति** इति । [4]इतिः प्रकारार्थः । इयत्ता च प्रकार इत्यर्थः । [5]प्रकारनिषेधपरत्वे त्वानन्तर्यं न घटते इत्यर्थः ॥

**अनन्तरम्** इति ततःशब्दार्थ उक्तः । **न ह्येतस्मात्** इति निषेधः प्रतीतः, न तु गुणः ; स्वरूपमेव सत्यं प्रतीतमित्यत्राह— **अयमर्थः** इति ॥

**ब्रह्म हि प्रमाणान्तरागोचरत्वेन ... ...**

## तदव्यक्तमाह हि ॥ ३-२-२२ ॥

1. स्वभावतश्च प्रकर्षस्यापि-अ.
2. सूत्रांशः । महारजनं-अ.
3. भ्रान्तजल्पिता-क.　　4. इति-क.
5. प्रकारनिषेध-अ.

तत्—ब्रह्म प्रमाणान्तरेण न व्यज्यते ...... 'न चक्षुषा गृह्यते नापि वाचा' इत्यादि ॥ २२ ॥ (२३७)

अनन्तरसूत्रसङ्गतिमाह — ब्रह्मणः इति । प्रत्यक्षस्य सन्मात्रग्राहित्वेन ब्रह्मणः प्रमाणान्तरगोचरत्वमाशङ्क्य तन्निराकरणमुखेन तस्य [1] मानान्तरागोचरत्वं द्रढयतीत्यर्थः । एतच्च दीपसारयोः स्पष्टीकृतम् । तदव्यक्तमाह हि । स्फुटम् ॥ २२ ॥

हेत्वन्तरं चाह—

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३-२-२३ ॥

अपि च संराधने—सम्यक् प्रीणने ...... ब्रह्मणो मूर्तामूर्तरूपद्वयादिविशिष्टतां प्रागसिद्धां नानुवदितुं क्षमम् ॥ २३ ॥ (२३७-२३८)

अपि संराधने प्रत्यक्षानुमानाभ्याम् । ध्यानगम्योऽस्तु, ततः किं संराधनेन साक्षात्कारस्येत्यत्राह— भक्तिरूप इति ॥ २३ ॥

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३-२-२४ ॥

इतश्च प्रकृतैतावत्त्वमेव प्रतिषेधति ...... तेषां मूर्तामूर्तादिविशिष्टत्वमप्यविशेषेण प्रतीयते—इत्यर्थः ॥ २४ ॥ (२३८)

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् । [2] मूर्तामूर्तादिप्रपञ्चविशिष्टताया उपासनार्थमारोपितत्वशङ्काऽत्र निरस्यते । तेषामपि मूर्तामूर्तादिप्रपञ्चविशिष्टप्रतीतिः भ्रान्तिरिति शङ्कायामुत्तरखण्डं व्याचष्टे—

1. मानान्तरगोचरत्वं दूषयति—क
2. मूर्तादिप्रपञ्चविशिष्टतया—क.

[1]ब्रह्मस्वरूपभूत इति । उपासनेन साक्षात्कृतत्वात् प्रकाशानन्दादेरिव प्रपञ्चविशिष्टतायाः [2]परमार्थत्वमित्यर्थः ॥ २४ ॥

उक्तं ब्रह्मण उभयलिङ्गत्वमुपसंहरति —

**अतोऽनन्तेन तथा हि लिङ्गम्** ॥ ३-२-२५ ॥

अतः — उक्तैर्हेतुभिः ब्रह्मणः .... ... तथा हि सत्युभयलिङ्गं ब्रह्मोपपन्नं भवति ॥ २५ ॥ (२३८)

अतोऽनन्तेन तथा हि लिङ्गम् । नेति नेत्यस्यावधिनिषेधपरत्वात् निरवधिकेन कल्याणगुणजातेन विशिष्टत्वं [3]ब्रह्मणः सिद्धमित्यर्थः । उभयलिङ्गत्वं पूर्वपक्षीकुर्वतामुपसंहारसूत्रं न घटते, तत्समर्थनेनोपसंहारात् ॥

इति उभयलिङ्गाधिकरणम्—५

---

## ६. अहिकुण्डलाधिकरणम् ॥

**उभयव्यपदेशात् त्वहिकुण्डलवत्** ॥ ३-२-२६ ॥

मूर्तामूर्तात्मकस्याचित्प्रपञ्चस्य ... ... तस्यैव ब्रह्मणः संस्थानविशेषा एवाचिद्वस्तूनि ॥ २६ ॥ (२४५-२४६)

उभयव्यपदेशात् त्वहिकुण्डलवत् । सङ्गतिमाह— मूर्त इति । अचित्प्रसङ्गात् सङ्गतिः । प्रधान इति । पतित्वादिकथनात् शरीरत्वं विवृतं भवति । अहिकुण्डलन्यायेन— [4]एकद्रव्यावस्थाविशेषेण एकजाति-

---

1. अथ स्वरूपभूत–अ. 2. पारमार्थ्यम्–क.
3. ब्रह्मणि–अ.
4. एकद्रव्यावस्थाविशेषेणेत्यर्थः–क.

योगस्य खण्डादिदृष्टान्ते सत्यपि प्रमातद्‌दुपादानं गुणप्रधानभावसद्भावात्। जीवस्यैव इति। 'अंशो नाना' इत्यस्मादस्य विभागो द्योतितः। [1] तज्जीवब्रह्मैक्यविषयम्। इदं चाचिद्ब्रह्मविषयम्। पौनरुक्त्यमाशङ्क्याह — इह इति। स्फुटम्॥ २६॥

## प्रकाशाश्रयवद्वा तेजस्त्वात्॥ ३-२-२७॥

वाशब्दः पक्षव्यावृत्त्यर्थः। ब्रह्मस्वरूपस्यैव .. ... एव-मचित्प्रपञ्चस्य ब्रह्मणो रूपत्वमित्यर्थः॥ २७॥ (२४६)

प्रकाशाश्रयवद्वा तेजस्त्वात्। [2] अहिकुण्डलवत् इति अचि-द्ब्रह्मणोः कार्यकारणभावेन भेदाभेदोक्तिः। प्रकाशाश्रयवत् इति व्यक्त्या-त्मना जात्यात्मना च भेदाभेदोक्तिरिति भावः॥ २७॥

## पूर्ववद्वा॥ ३-२-२८॥

वाशब्दः पक्षद्वयव्यावृत्त्यर्थः। ... ... तथेह जीवस्याचि-द्वस्तुनश्च ब्रह्म प्रत्यंशत्वम्॥ २८॥ (२४६-२४७)

पूर्ववद्वा। [3] प्रथमपक्षपरिगृहीतव्यावृत्त्यर्थं पक्षद्वयशब्दः। उक्त-दोषात् — निर्विकारत्वनिर्दोषत्वबाधात्। सकलश्रुतिस्मृति इति। ब्रह्मत्वं जातिश्चेत् खण्डो मुण्ड इतिवदीश्वरादिशब्दैः जगच्छब्दसामानाधि-करण्यं न स्यात्। ब्रह्मैव जातिश्चेत् सार्वज्ञ्यादिगुणाश्रयत्वानुपपत्तिरिति भावः। [4] किमपृथक्सिद्धधर्मतयांऽशत्वं दृष्टमित्यत आह — तदेवम् इति॥ २८॥

## प्रतिषेधाच्च॥ ३-२-२९॥

---

1. तज्जीवब्रह्मविषयम्। पौनरुक्त्यम्-क.
2. अहिकुण्डलमिति–अ
3. प्रथमपरिगृहीत–क.
4. किमपृथग्धर्मतया–अ.

'स वा एष महानज आत्मा ... ... ब्रह्मणो निर्दोषत्वेन कल्याणगुणाकरत्वेन चोभयलिङ्गत्वमपि सिद्धम् ॥ २९ ॥ (२४७)

प्रतिषेधाच्च । कथं [1]कार्यकारणानन्यत्वादीत्यत्राह — अतः सूक्ष्म इति । इत्यादि इति आदिशब्दात् सामानाधिकरण्यं विवक्षितम् ॥ २९ ॥

इति अहिकुण्डलाधिकरणम्—६

## ७. पराधिकरणम् ॥

**परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३-२-३० ॥**

इदानीमस्मात् परस्माज्जगन्निमित्तोपादान ... ... परस्मात् ब्रह्मणः परमपि किञ्चिदस्तीति गम्यते इति ॥ ३० ॥ (२४९-२५०)

[2]**परमतस्सेतून्मानसंबन्धभेदव्यपदेशेभ्यः । परस्मात्** इति प्राप्यतालक्षणं परत्वमुक्तम् । **परब्रह्मणः** इति तु स्वकार्यापेक्षया परत्वम् । स्थेम्ने— प्राप्यत्वोपयोगिगुणैकत्ये हि नोभयलिङ्गत्वपौष्कल्यम् । पूर्वत्र निर्दोषत्वं स्थापितम् । इह तु कल्याणगुणात्मकत्वमिति सङ्गतिः । असङ्कर-कृत्स्नव्यावृत्त्यर्थमाह—**एतम्** इति । **तथा** इति । केवलः षष्ठ्यन्तसहितश्चेति भिदा ॥ ३० ॥

### सिद्धान्तः

एवं प्राप्तेऽभिधीयते —

**सामान्यात् तु ॥ ३-२-३१ ॥**

---

1. कार्यकारणानन्यत्वम्—क.
2. परमतस्सेतु । परस्मात्—ख.

तु शब्दः पक्षं व्यावर्तयति ... .... तरतिश्च प्राप्तिवचनः । यथा 'वेदान्तं तरति' इति ॥ ३१ ॥ (२५०)

सामान्यात् तु । तरतेरर्थमाह— एतम् इति ॥ ३१ ॥

## बुद्ध्यर्थः पादवत् ॥ ३-२-३२ ॥

योऽयं 'चतुष्पात् ब्रह्म' 'षोडशकलम्' ... ... ब्रह्मणो वागादिपादव्यपदेशः उपासनार्थः, एवमयमपि ॥ ३२ ॥ (२५०-२५१)

बुद्ध्यर्थः पादवत् । [1]आनन्त्यात् न कारणविषयमित्यत्राह— जगत्कारणत्वम् इति । असौ यथा इति । निखिलकारणस्य वागाद्यवच्छेदासंभवात् तस्योपासार्थत्वं [2]सिद्धमिति भावः ॥ ३२ ॥

स्वयमनुन्मितस्य कथमुपासनार्थतया ... ...

## स्थानविशेषात् प्रकाशादिवत् ॥ ३-२-३३ ॥

प्रतिपन्नवागादिस्थानविशेषरूपोपाधि ...... घटादिस्थानभेदैः परिच्छिद्यानुसन्धानसंभव इत्यर्थः ॥ ३३ ॥ (२५१)

[3]स्थानविशेषात् प्रकाशादिवत् । सूत्रमिदं दृष्टान्तविषयम् ॥ ३३ ॥

## उपपत्तेश्च ॥ ३-२-३४ ॥

यदुक्तम् 'अमृतस्यैष सेतुः' इति ... ... तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यनन्योपायत्वश्रवणात् ॥ ३४ ॥ (२५१)

---

1. अनन्यवाक्यं न कारण—अ.
2. असिद्धमिति—क.
3. स्थानमिति विशेषात्—अ.

उपपत्तेश्च । अनन्योपायत्वम्— प्राप्यस्यैवोपायत्वम् । वृणुते विवृणुते [1] इति तदुभयसिद्धिः ॥ ३४ ॥

## तथाऽन्यप्रतिषेधात् ॥ ३-२-३५ ॥

**यत् पुनरुक्तं 'ततो यदुत्तरतरम्' ...... स एवेहापि 'परात् परः' इति समष्टिपुरुषात् परत्वेनोच्यते ॥ ३५ ॥**

(२५१-२५२)

**तथाऽन्यप्रतिषेधात्** । **यस्मात् परम्** [2] इति पञ्चम्याः परशब्दान्वये समनिषेधो न सिध्येत् । ततश्च [3] तद्वेदनस्यैव मुक्त्युपायता न सिध्येत् । सा हि प्रतिज्ञाता **तमेव विदित्वा** इति । अपरशब्दवैयर्थ्यं च । 'न तत्समः' इति विरोधश्चेति भावः । न च [4] अपरशब्दसङ्कोचः, सङ्कोचान्यथासिद्धेः । 'ततो यदुत्तरतरम्' इत्यत्र **ततः**शब्दस्य हेत्वर्थता हि वक्ष्यते । अतो न गोबलीवर्दनयः अपरपर्यायस्य **अन्य**शब्दस्याव्यवहितान्वयं दर्शयति — **तथा** इति । श्रुत्यन्तराविरोधमाह — **तथा न** इति । तद्वाक्यं न कारणविषयमित्यत्राह — **तद्धि** इति ॥

हिरण्यगर्भशब्दस्य शिवशब्दवत् साधारण्याभावात्, 'शंभुः स्वयंभूर्द्रुहिणः' इति प्रसिद्ध्या शंभ्वादिशब्दोपपत्तेः वाक्यान्तरे [5] धातृशब्दाच्च चतुर्मुखः परमकारणमित्यत्राह— **अङ्गयः** इति । विद्युद्वर्णत्वार्णवशायित्वसमानवाक्योक्तलक्ष्मीपतित्वैः अवगतपरमपुरुषभावकारणप्रकरणसामर्थ्यान्नेत्यर्थः । परोक्तश्रुतेरर्थमाह— **ततः** इति । हेत्वर्थत्वे सत्यन्वयं दर्शयति— **यदुत्तरतरम्** इति । 'तेनेदं पूर्णं पुरुषेण' 'महान् प्रभुर्वै पुरुषः' इति पूर्वापरैकार्थ्यात्

1. इति उभयसिद्धिः-क  2. इति परशब्दान्वये-क.
3. तद्वेदनस्योपायता-क.
4. परशब्दसङ्कोचः, सङ्कोचकान्यथासिद्धेः-क.
5. धातृशब्दाच्चतुर्मुखः-अ.

सर्वाननशिरोग्रीवादिना पुंसूक्तनारायणानुवाकप्रत्यभिज्ञानाच्च मध्यस्थशिवशब्दः [1] शाश्वतशिवपरः । **अन्यथा** इति । 'नान्यः पन्थाः' [2] 'यस्मात् परम्' इति च विरोधौ स्यातामितित्यर्थः ॥ ३५ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३-२-३६ ॥

**अनेन — ब्रह्मणा, सर्वगतत्वं — सर्वस्य जगतो व्याप्तत्वं .... .... अतः इदं परं ब्रह्मैव सर्वस्मात् परम् ॥ ३६ ॥** (२५३)

**अनेन सर्वगतत्वमायामशब्दादिभ्यः** । इदं स्वपक्षे प्रमाणपरं सूत्रम् । **'नित्यं विभुम्'** इति श्रुतिः परमपुरुषविषया 'परात् परं पुरुषम्' इति प्रकरणस्थत्वात् । **विभुं** — प्रभुम् । **आदिशब्दात्** धारणनियमनपूर्वकव्याप्तिपरं समानाधिकरणं च वाक्यजातं गृहीतम् । पुंसूक्ताद्युक्तत्रिविधापरिच्छेदः समाधिकनिषेधः ब्रह्मशिवकर्मकसर्गसंहारा ह्यन्यथा नोपपद्यन्ते ॥

इति पराधिकरणम् — ७

---

## ८. फलाधिकरणम् ॥

## फलमत उपपत्तेः ॥ ३-२-३७ ॥

**उक्तमुपासिसिषोपजननार्थं जीवस्य ... ... न ह्यचेतनं कर्म क्षणध्वंसि कालान्तरभाविफलसाधनं भवितुमर्हति ॥ ३७ ॥** (२५७)

**फलमत उपपत्तेः** । सिद्धान्तोपक्रममिदम् । [3] फलत्वमुक्तम् ;

---

1. शिवपरः-क.
2. यस्माच्छिवपरम्-अ.
3. फलमुक्तम् । फलदं तन्निरूप्यते-अ.

फलदत्वं निरूप्यते इति सङ्गतिः । [1] तच्च कल्याणगुण इति पादान्तर्भावः । साधारणफलशब्दोक्तिफलमाह— **तुल्य** इति । पूर्वकाण्डे द्वारमात्रं चिन्तितम् । इह तु तद्विशेष इति भिदा । इतरस्यायोग्यत्वमाह— **न हि** इति ॥

**श्रुतत्वाच्च** ॥ ३-२-३८ ॥

**'स वा एप महानज आत्मा ··· ··· भोगापवर्गरूपं फलमयमेव ददातीति हि श्रूयते ॥ ३८ ॥** (२५७)

**श्रुतत्वाच्च** । **अन्नादः** — अन्नदः । न परं योग्यत्वायोग्यत्वाभ्यामस्य फलदत्वं कल्प्यम् । श्रुतं च इत्यर्थः ॥ ३८ ॥

**संप्रति पूर्वपक्षमाह —**

**धर्मं जैमिनिरत एव** ॥ ३-२-३९ ॥

**अत एव — उपपत्तेः शास्त्राच्च ... ... अपूर्वद्वारेण फलसाधनत्वमवगमयति ॥ ३९ ॥** (२५७-२५८)

**धर्मं जैमिनिरत एव** । उपपत्तिमाह — **लोके** इति । श्रुतिमाह — **तथा** इति । साधनत्वं श्रुतम् । सद्वारकत्वं कल्प्यमिति न विरोधः ॥ ३९ ॥

**पूर्वं तु बादरायणो हेतुव्यपदेशात्** ॥ ३-२-४० ॥

**तुशब्दः पक्षव्यावृत्त्यर्थः । पूर्वोक्तं ... ... परस्मात् पुरुषात् भोगापवर्गरूपं फलं च, वदन्तीति सर्वं समञ्जसम् ॥ ४० ॥**

इति फलाधिकरणम्—८

**इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य द्वितीयः पादः ॥**

---

1. ते द्वे कल्याणगुणाविति–**अ**.

सिद्धान्तमाह— **पूर्वं तु बादरायणो हेतुव्यपदेशात्** । मन्त्रार्थवादयोरन्यपरत्वमाशङ्कयाह— **कामिनः** इति । रात्रसत्रप्रतिष्ठापगोरण-[1] शतयातनासाध्यसाधनत्वशर्कराञ्जनद्रव्यपशुविशेषादिवत् मन्त्रार्थवादोक्तः स्वीकार्य इति भावः । देवता फलदाऽस्तु, अपूर्वमपि स्वीक्रियेतेत्यत्राह— **एवम्** इति । श्रुतहानाश्रुतकल्पनी अन्याय्ये इत्यर्थः । वाच्यापूर्वपक्षे न दोष इत्यत्राह— **लिङादयः** इति । लिङ्वाच्यत्वमपि कल्प्यमिति कल्पितद्वयमित्यर्थः । ततः किमित्यत्राह— **तदेवम्** इति । ततः किं भगवतः फलदत्वे इत्यत्राह— **वाय्वादि** इति । संभवं दर्शयति—**लोके च** इति । तर्कविरोधः कालात्ययापदेशहत इत्यभिप्रयन्नाह— [2] **वेदान्तास्तु** इति । उपबृंहणसिद्धत्वात् **स्तुत्यादि** उक्तम् । **सर्वं**— विध्यर्थवादमन्त्रजातमित्यर्थः ॥ ४० ॥

इति फलाधिकरणम्–

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विरचितायां श्रुतप्रदीपिकायां तृतीयस्याध्यायस्य द्वितीयः पादः ॥



1. शतयातनासाधनत्व–अ.
2. वेदास्तु–अ.

# तृतीयाध्याये तृतीयः पादः ॥

## १. सर्ववेदान्तप्रत्ययाधिकरणम् ॥

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३-३-१ ॥

**उक्तं ब्रह्मोपासिसिषोपजननाय वक्तव्यं ... ... अतः एभिः प्रत्यभिज्ञानात् शाखान्तरेऽपि विद्यैक्यम् ॥ १ ॥** (२६२-२६३)

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । पादसङ्गतिमाह — **उक्तम्** इति । अन्यत्रोक्तस्यान्यत्र स्वीकारः **उपसंहारः** । तत्रैवोपयोगः **विकल्पः** । अभेदे [1] उपसंहारः । भेदे विकल्पः । प्रथमाधिकरणकृत्यमाह— **प्रथमम्** इति । **अनेक** इति । एकरूपसंज्ञाफलकत्वेन श्रूयमाणायाः इत्यर्थः । शाखान्तराधिकरणोक्तनयोऽत्र प्रवर्तते, न वेति विचारः । नेति पूर्वः पक्षः । तत्र युक्तिमाह — **अविशेष** इति । 'अग्निहोत्रं जुहोति', 'दध्ना जुहोति' इत्येतद्व्यावृत्त्यर्थम् **अविशेष**शब्दः । **भेदकत्वात्** — 'इडो यजति' 'बर्हिर्यजति' इत्यादाविवेत्यभिप्रायः । पूर्वकाण्डोक्तसिद्धान्तयुक्त्यैवालमिति शङ्कायामधिकां युक्तिं दर्शयति — **अत एव** इति । **अत एव** — विद्याभेदादेव । कथमन्यथा नियमानुपपत्तिरित्यत्राह — **विद्यैक्ये हि** इति ॥

राद्धान्ते **कर्मकाण्डसूत्रात् एकम्** इत्यनुपक्रम । 'संयोगात' इत्यनुक्तिः चोदनाप्राधान्यात । कर्मोपास्तिसाधारण्याय [2] कर्मव्यावृत्तोपासनवाचिधात्वभिप्रायेण **धात्वर्थविशेष** इत्युक्तम । क्वचिद्विदेः क्वचिदुपासेश्च

---

1. उपसंहारः । नेति पूर्वः पक्षः । तत्र युक्तमाह— अविशेषेति । शङ्कां दर्शयति—अत एवेति-अ. ( मध्ये ग्रन्थाभावः )

2. साधारण्याय धात्वर्थ-अ

श्रवणेऽप्यैक्यसिद्ध्यर्थं **विद्पर्यायस्य** इत्युक्तम् । कर्मणो द्रव्यदेवते इव विद्याया उपास्यं रूपम्, तस्याः तन्निरूप्यत्वात् ॥ १ ॥

**यत् तूक्तम् अविशेषपुनःश्रवणात् ... ...**

## भेदान्नेति चेदेकस्यामपि ॥ ३-३-२ ॥

**अविशेषपुनःश्रुत्या प्रकरणान्तराच्च ... ... पुनःश्रुत्युपपत्तेस्तत्र न विधेयान्तरसंभवः ॥ २ ॥** (२६३)

अनन्तरसूत्रमवतारयति— **यत् तु** इति । **भेदान्नेति चेदेकस्यामपि ।** [1] पूर्वत्र सिद्धान्तसाधको हेतुः संक्षिप्तः । इह तु पूर्वपक्षपरिहारहेतुः संक्षिप्यते । **विधेयम्**– सामान्यम ; तद्विशेष उपासनम । **अन्यथानुपपत्त्या** इति । अविशेषपुनःश्रुतिप्रकरणभेदयोः [2] वैयर्थ्यरूपानुपपत्त्या इत्यर्थः ॥ २ ॥

**यच्चोक्तं शिरोव्रतवताम् ... ...**

## स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३-३-३ ॥

**नैतदस्ति — शिरोव्रतोपदेश ... ... आथर्वणिकैकाग्नि-संबन्धिनः तत्रैव भवन्ति, न त्रेताग्निषु ॥ ३ ॥** (२६३-२६४)

अनन्तरसूत्रमवतारयति— **यच्चोक्तम्** इति । **स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः** । विद्यैक्येऽपि न सर्वशाखिनां शिरोव्रतप्राप्तिः । तस्य विद्याङ्गत्वाभावादित्यर्थः । **वेदव्रतेन**— शिरोव्रतेन, **इदं** — व्रतान्तरं, **व्याख्यातम्** इत्यतिदेशः । **वेदव्रत**शब्दोक्तत्वात् वेदाध्ययनाङ्गत्वावगम इत्यर्थः । **तेषामेव** इति वाक्यस्यार्थमाह — **तेषाम्**

1. सिद्धान्तसाधकहेतौ संक्षिप्ते सतीह सूत्रे पूर्वपक्ष–**अ**.
2. वैयर्थ्यरूपान्यथानुपपत्त्या–

इति । अध्ययनाङ्गस्य कथं नियम इत्यत्राह—**सववच्च** इति । कस्यचित् कर्मविशेषस्य शाखाविशेषवतामसाधारणत्वं मुक्तमित्यर्थः । **सप्तसूर्याः**—आरोगादिसप्तसूर्यदेवत्याः ॥ ३ ॥

## दर्शयति ॥ ३-३-४ ॥

दर्शयति च श्रुतिरूपासनस्य ... ... तदुभयत्र विद्यैकत्वेन गुणोपसंहारादेवोपपद्यते ॥ ४ ॥ (२६४)

दर्शयति च । तैत्तिरीयकवाक्यस्यापूर्णोपदेशत्वात् छान्दोग्योपजीवनं विद्यैक्यद्योतकमित्यर्थः ॥ ४ ॥

तदेवं शाखान्तराधिकरणन्यायसिद्धं ... ...

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ३-३-५ ॥

एवं सर्ववेदान्तेषु समाने सत्युपासने .... .... तदुपसंहाराविशेषादुपसंहर्तव्य इत्यर्थः । चशब्दोऽवधारणे ॥ ५ ॥

अनन्तरसूत्रमवतारयति — **तदेवम्** इति । **उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च** । **उपासने** [1] एकसंज्ञाफलके **गुणशब्दः** अङ्गपरः ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम्—१

---

### २. अन्यथात्वाधिकरणम् ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३-३-६ ॥

एवं चोदनाद्यविशेषात् विद्यैकत्वम् ... ... अन्यथोपक्रमगत उद्गीथशब्दः कर्तरि लाक्षणिकः स्यात्; अतो विद्यैक्यम् ॥ ६ ॥
(२६७-२६८)

---

1. एकसंज्ञाफलत्वे-अ

अन्यथात्वं शब्दादिति चेन्नाविशेषात् । सामान्येन विद्यासु सर्वशाखाप्रत्ययनयावतार[1] उक्तः । तद्विशेषेषु भेदाभेदहेतुभावाभावौ निरूप्येते इति सङ्गतिः । **द्वयाः**— द्विविधाः । **अत्ययाम**— जयाम । **आसन्यम्**— आसन्नम्; मुख्यम् । **पराभवति** इत्यन्वयः । **संयेतिरे**— युद्धं चक्रुः । **आखणम्**— मृत्पिण्डः । **ऋत्वा**— प्राप्य । न विधिः श्रुतः इत्यत्राह— **वेदनविषय** इति । आर्थवादिके फले न तात्पर्यमित्यत्राह— **उद्गीथ** इति ॥

विषयः शोधितः । संशयमाह— **तत्र** इति । सूत्रमवतारयति— **अत्र** इति । **उदगायत**— उद्गातरि प्राणदृष्टिं कृतवन्त इत्यर्थः । **एवं वेद, एवंविदि** इति **एवंशब्दः** कर्तृकर्मणोः प्राणदृष्टिपरः । **केवल** इति । चोदनाद्यविशेषसमुदायादैक्यम् । शब्दान्तरादिष्वन्यतमेन भेद इत्यर्थः । **तत्र** इति । उपक्रमानुगुण्यात् कर्तृत्वमुपचरितमित्यर्थः ॥ ६ ॥

**सिद्धान्तः**

इति प्राप्ते प्रचक्ष्महे—

## न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् ॥ ३-३-७ ॥

**न वेति पक्षं व्यावर्तयति; न चैतदस्ति, ... .. हिरण्मयपुरुषदृष्टिविधानात् परोवरीयस्त्वादिगुणविशिष्टदृष्टिविधानमर्थान्तरभूतम् ॥**
(२६८-२६९)

राद्धान्ते— **न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्** । प्रणवस्य स्वरविशेषलाभाय **उद्गीथ**—शब्देनोक्तिः । **वाजिनः** इति । अपवादकाभावात् कृत्स्नविषय **उद्गीथशब्दः** । **विधेय** इति । **विधेयभेदे रूपभेदः** फलित इत्यर्थः । [2] **न** इत्युक्तेऽपि व्यावृत्तिसिद्धौ वाशब्दोक्तितात्पर्यमाह—

1. न्यायावतारः—क.
2. नेत्युक्तेऽपि वाशब्दोक्ति—अ.

**किं च** इति । **न च** इति । [1] उपक्रमनयो नाधिकस्वीकारविरोधी, किं त्ववगतभङ्गविरोधी । न चात्र तद्भङ्ग इत्यर्थः । **यथा** इति । उपास्यैक्ये [2] दृष्टिविशेषणैक्येऽपि दृष्टिविशेषणविशेषभेदात् [3] विद्या भिद्यन्ते, किमुतोपास्यभेदादित्यर्थः ॥ ७ ॥

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ३-३-८ ॥

**उद्गीथविद्येति संज्ञैक्यात् तत् ... ... यथा चोद्गीथविद्येति छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासु ॥ ८ ॥** (२६९-२७०)

**संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ।** स्फुटम् । उद्गीथशब्देनावयवोक्तिः प्रागेव समाप्ता । इह तु कृत्स्नोक्तिरिति शङ्का व्युदस्यते ॥ ८ ॥

## व्याप्तेश्च समञ्जसम् ॥ ३-३-९ ॥

**छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि ... ... कर्तोद्गाता प्राणदृष्ट्योपास्य इति विद्यानानात्वं सिद्धम् ॥ ९ ॥** (२७०)

**व्याप्तेश्च समञ्जसम् ।** कथमवयवे समुदायशब्दोक्तिरित्यत्राह— **अवयवे च** इति । निगमयति— **अतः** इति ॥ ९ ॥

इति अन्यथात्वाधिकरणम्—२

---

1. उपक्रमनये नाधिक—अ.
2. दृष्टिविशेषणैक्ये दृष्टि—अ.
3. विद्या भिद्यते—अ.

## ३. सर्वाभेदाधिकरणम् ॥

### सर्वाभेदादन्यत्रेमे ॥ ३-३-१० ॥

छान्दोग्यवाजसनेयकयोः प्राणविद्या ··· ··· वसिष्ठत्वादिगुणयोगात् प्राणो ज्येष्ठः प्रतिपन्न इति नास्ति विद्याभेदः ॥ १० ॥ (२७३-२७४)

**सर्वाभेदादन्यत्रेमे** । पूर्वत्र दृष्टिविशेषणतया प्राणः [1]प्रस्तुतः । इह तु तद्विषयस्वतन्त्रोपासनं निरूप्यते इति सङ्गतिः । विषयः शोध्यते— **छान्दोग्य** इति । **ज्यैष्ठ्यम्**— वृद्धत्वम् । **श्रैष्ठ्यम्**— प्रशस्यत्वम् । 'प्रशस्यस्य श्रः' 'ज्य च वृद्धस्य च' इत्यनुशासनात् । **वसिष्ठादिशब्दाः** वागादीनां स्वस्वकार्यसामर्थ्यविषयाः । **व्यूदिरे**— विवादं चक्रुः । **विवदमानाः** इति वाजिपाठः । **त्वं तद्वसिष्ठोऽसि**— मम कार्यसामर्थ्यस्य त्वदधीनत्वात् सामर्थ्यं तवैवेत्यर्थः ॥ १० ॥

इति सर्वाभेदाधिकरणम् — ३

---

## ४. आनन्दाद्यधिकरणम् ॥

प्राणविद्याङ्गविषयमन्यदपि निरूपणम् ··· ···

### आनन्दादयः प्रधानस्य ॥ ३-३-११ ॥

अत्र ब्रह्मस्वरूपगुणानां सर्वासु परविद्यासु ··· ··· सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः ॥ ११ ॥ (२७५-२७६)

मध्ये सङ्गतिवशात् प्रस्तुतमर्थान्तरमवतारयितुं प्राणविद्याङ्गविषय-

1. प्रस्तुतः । स्वतन्त्रतद्विषयमुपासनम्—अ.

चिन्तान्तरस्य करिष्यमाणत्वमाह— **प्राणविद्याङ्ग** इति । सङ्गतिमाह— **यथा** इति । **अनुक्तानाम्** 'यदहम्' इत्यादिवचनभङ्ग्या अनुक्तानाम् ॥

**आनन्दादयः प्रधानस्य । स्वरूपगुणानाम्** — स्वरूपप्रतिपत्त्यनुबन्धिगुणानाम् । **अभेदात्** इति । 'अथ शब्दानुशासनम्', 'केषां शब्दानाम्' इतिवत् समस्तैकदेशानुषङ्गः । **आनन्दादयः** —आनन्दत्वादयः । 'द्व्येकयोः' इतिवत् ॥ ११ ॥

**एवं तर्हि गुण्यपृथग्भावादेव ... ...**

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३-३-१२ ॥

**ब्रह्मस्वरूपगुणानां प्राप्तावुच्यमानायां ... ... 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि विरुध्यते ॥ १२ ॥** (२७६)

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे । उपचयापचयौ**— पीनत्वकृशत्वे । **आदिशब्दात्** 'अस्थूलमनणु' इति वाक्यं गृह्यते ॥

**नन्वेवमेव ब्रह्मसंबन्धिनामेव ... ...**

## इतरे त्वर्थसामान्यात् ॥ ३-३-१३ ॥

**तुशब्दश्चोद्यं व्यावर्तयति ... ... ये यत्र श्रुताः, ते तत्रोपसंहार्याः इति निरवद्यम् ॥ १३ ॥** (२७६-२७७)

**इतरे त्वर्थसामान्यात् । अर्थः** — धर्मी । प्रतीतिविषयत्वनियमः साम्यम् । [1] सत्यत्वादीनां तत्प्रतीत्यनुबन्धित्वं दर्शयति — **यतो वा** इति । **उपलक्षितम्** इति । विशेष्यांशे उपास्ये कारणत्वमुपलक्षणम् । ज्ञाप्यानन्त-

1. सत्यत्वादेः-अ.

भावादिति भावः । विशिष्टं कारणवाक्यावगतम् । विशेष्यांशस्तु सत्यत्वादिनिरूप्य इत्यर्थः ॥ १३ ॥

[1] यदि उपचयापचयप्रसङ्गात् प्रियशिरस्त्वादयः .... ....

## आध्यानाय प्रयोजनाभावात् ॥ ३-३-१४ ॥

**प्रयोजनान्तराभावादाध्यानायायं ... ... प्रियशिरस्त्वादीनां न सर्वदा आनन्दमयप्रतीतावनुवर्तन्ते ॥ १४ ॥ (२७७-२७८)**

अनन्तरसूत्रावतारायाह— **यदि** इति । **आध्यानाय प्रयोजनाभावात्** । **प्रतिपत्त्यर्थम्** इति । ध्यानोपयोगिशास्त्रजन्यज्ञानसिद्ध्यर्थमित्यर्थः । **न सर्वदा**— न उपास्तावपि इत्यर्थः ॥ १४ ॥

## आत्मशब्दाच्च ॥ ३-३-१५ ॥

**'अन्योऽन्तर आत्माऽऽनन्दमयः ... ... तस्य सुखप्रतिपत्त्यर्थं रूपणमात्रमिति गम्यते ॥ १५ ॥ (२७८)**

**आत्मशब्दाच्च** । स्फुटम् ॥ १५ ॥

**ननु — 'अन्योऽन्तर आत्मा प्राणमयः' ... ...**

## आत्मगृहीतिरितरवदुत्तरात् ॥ ३-३-१६ ॥

**'अन्योऽन्तर आत्माऽऽनन्दमयः' ... ... 'बहु स्यां प्रजायेय' इत्यानन्दमयविषयादुत्तरवाक्यात् ॥ १६ ॥ (२७८)**

**आत्मगृहीतिरितरवदुत्तरात्** । **उत्तरात्** आत्मगृहीतित्वनिश्चयो दृष्टान्तेऽपि तुल्यः ॥ १६ ॥

---

1. यत् तु–उपचयापचय-इत्यपि पाठः ।

## अन्वयादिति चेत् स्यादवधारणात् ॥ ३-३-१७ ॥

**पूर्वत्र प्राणमयादिष्वनात्मस्वात्मशब्दान्वय ··· ··· अपरमात्मनि परमात्मबुद्ध्या आत्मशब्दान्वय इति निरवद्यम् ॥ १७ ॥**

**अन्वयादिति चेत् स्यादवधारणात्** । **नोत्तरात्** इति । उपक्रमो हि प्रबल इति भावः । **कुतः** इति । उपक्रमस्यापि तथात्वात् न तेनोत्तरबाध इत्यर्थः । तर्हि मध्ये कथं परमात्मनि प्रयोग इत्यत्राह— **अन्नमयात्** इति । न तत्राप्यपरमात्मबुद्ध्योपचरितः प्रयोगः । किं तु पूर्वस्मादन्तरत्वमात्रेण परमात्मबुद्ध्यैव [1] प्रयोगः । ततोऽप्यन्तरदर्शनात् तत्र तद्बुद्धिर्गता । पूर्वत्र तु निवृत्ता । पूर्वत्रापि परबुद्ध्या प्रयुक्त इति नोपक्रमबाध इत्यर्थः ॥ १७ ॥

इति आनन्दाद्यधिकरणम् —४

## ५. कार्याख्यानाधिकरणम् ।

## कार्याख्यानादपूर्वम् ॥ ३-३-१८ ॥

**पूर्वप्रस्तुतप्राणविद्याशेषभूतम् ... .... अद्भिः परिदधति' इत्यद्भिः परिधानमेवोक्तम् । नाचमनम् ॥ १८ ॥** (२८१-२८२)

**कार्याख्यानादपूर्वम्** । अवान्तरसङ्गतिमाह— **पूर्व** इति । **लम्भुको ह वासो भवति**— वासो लब्धवान् भवति । **अनम्**— प्राणम् । **स्तुत्यर्थतया**— [2] न तु उपासार्थतया ॥

राद्धान्ते— **अप्राप्तं विधीयते अप्राप्ताख्यानात्** इति साध्या-

1. उत्तरस्य प्रयोगः-क.

2. न तु परमार्थतया-क.

विशिष्टत्वमित्यत्राह— **अप्राप्त** इति। [1]अप्राप्तत्वविशेषेऽपि विधिप्रत्ययात् आचमनान्तरविधिरित्यत्राह — **एतदुक्तम्** इति। [2]प्रतिपन्नस्यैवाप्राप्तत्वे सति, अर्थान्तरक्लृप्तयथोगात् उपक्रमोपसंहारात् शाखाद्वयानुगतत्वाच्च वासस्त्वधीर्विधेया। न तु आचमनान्तरम्, उक्तविपर्ययादित्यर्थः॥ १८॥

इति कार्याख्यानाधिकरणम्—५

## ६. समानाधिकरणम्॥

## समान एवं चाभेदात्॥ ३-३-१९॥

**वाजसनेयके अग्निरहस्ये शाण्डिल्यविद्या ··· ··· सत्यसङ्कल्पत्वगुणाभेदान्न रूपभेदः। अतो विद्यैक्यम्॥ १९॥** (२८४)

**समान एवं चाभेदात्।** पूर्वाधिकरणं प्राणविद्याप्रसङ्गात् कृतम्। तत्पूर्वेणास्य सङ्गतिः। स्वरूपप्रतीत्यन्तर्भूतगुणानामिव सत्यसङ्कल्पत्वान्तर्गतवशित्वादीनामुपसंहार्यत्वमिति क्वचित् अधिकस्य सत्यसङ्कल्पत्वस्य क्वचित् अधिकस्य वशित्वादेश्चार्थान्तरत्वाभावात्, न रूपभेद इत्यर्थः॥ १९॥

इति समानाधिकरणम्—६

## ७. संबन्धाधिकरणम्॥

## संबन्धादेवमन्यत्रापि॥ ३-३-२०॥

**बृहदारण्यके श्रूयते — 'सत्यं ब्रह्म' ··· ··· ब्रह्मणः सत्यस्यैकत्वेन विद्यैक्यादुभयोरुभयत्रोपसंहारः॥ २०॥** (२८५-२८६)

---

1. अप्राप्तत्वविशेषे विधि—अ.
2. प्रतिपन्नस्याप्राप्तत्वे—क.

संबन्धादेवमन्यत्रापि। एवंशब्देन सङ्गतिः स्फुटा। उपनिषत्-शब्दव्याख्यानं रहस्यनामनी इति। सूत्रार्थमाह— यथा इति ॥ २० ॥

## सिद्धान्तः

एवं प्राप्ते प्रचक्ष्महे —

### न वा विशेषात् ॥ ३-३-२१ ॥

न वैतदस्ति— यद्विधैक्यात् ··· ··· उभयत्र हृदयाधारत्वेनोपास्यत्वात्। अतो व्यवस्थिते इति ॥ २१ ॥ (२८३)

### दर्शयति च ॥ ३-३-२२ ॥

दर्शयति चाक्ष्याधारादित्याधारयोः ··· स्वतो ह्यप्राप्तावतिदेशेन प्राप्त्यपेक्षा ॥ २२ ॥ (२८६)

न वा विशेषात्। दर्शयति च। स्पष्टं सूत्रद्वयम्। [1]स्थानस्योपास्यान्तर्गत्यनन्तर्गतिकृतभेदाभेदाभ्यां नाम्नो व्यवस्थित्यव्यवस्थिती इति पूर्वपक्षराद्धान्तौ ॥ २१, २२ ॥

इति संबन्धाधिकरणम्—७

---

## ८. संभृत्यधिकरणम् ॥

### संभृतिद्युव्याप्त्यपि चातः ॥ ३-३-२३ ॥

तैत्तिरीयके [2]नारायणीयानां खिलेषु च ··· ··· मनोमयत्वापहतपाप्मत्वादिविशिष्टस्योपास्यस्य माहात्म्यप्रतिपादनपराः ॥ २३ ॥ (२८७-२८८)

---

1. स्थानस्य रूपान्तर्गत्यनन्त-क.
2. 'राणायनीयानाम्' -इति च पाठः।

**संभृतिद्युव्याप्त्यपि चातः ।** नाग्नेरिव संभृत्यादीनामपि व्यवस्थेति सङ्गतिः । **अनारभ्य** — अप्रस्तुत्य । द्विवचनेन भाष्यमित्यत्राह — **समाहार** इति । तर्हि कथमर्भकौकसो ज्यायस्त्वाद्युक्तिरित्यत्राह — **शाण्डिल्य** इति ॥

ननु एवं तर्हि सर्वासु आनन्त्यानुगमविरोधः । नैवम्, स्वाभाविकौपाधिकभेदेनाविरोधात् । औपाधिकाल्पत्ववतः तत्रैव स्थाने औपाधिकमहत्त्वं विरुद्धम् । स्वतोऽनन्तमपि अनुग्रहात् [1] अल्पस्थानस्थमिति धीरविरुद्धा । **माहात्म्यप्रतिपादनपराः** — न तु [2] तद्विद्यास्वसाधारणोपास्याकारपराः इत्यर्थः ॥ २३ ॥

इति संभृत्यधिकरणम्—८

## ९. पुरुषविद्याधिकरणम् ॥

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ ३-३-२४ ॥

**तैत्तिरीयके पुरुषविद्याऽऽम्नायते ... ... विद्याभेद इति एकत्राम्नातानां गुणानामितरत्रानुपसंहारः ॥ २४ ॥** (२८९-२९०)

**पुरुषविद्यायामपि चेतरेषामनाम्नानात् ।** द्युव्याप्तिसन्निध्युक्तसंभृत्यादेरिव ब्रह्मविद्यासन्निधिस्थपुरुषविद्यायास्तच्छेषत्वमिति सङ्गतिः । **फलसंयोगाश्रवणात्** इति । पुरुषविद्यामात्रस्य ब्रह्मविद्यात्वाभावात् उत्तरत्रोक्तं फलमतदर्हम् । पूर्वत्राहीननयादन्वेतीति भावः । **छान्दोग्ये श्रुतस्यैव** इति । विरोधिफलोक्तिरेव भेदिका । न तु फलानुक्तिरिति भावः ॥

1. अल्पस्थानत्ववदिति धीः—क.

2. तद्विद्यासाधारणोपास्य—क.

राद्धान्ते— **अफलं तदङ्गम्** इति। अफलत्वं पूर्वमुक्तम्। न चास्या अफलत्वे फलश्रुतिपौनरुक्त्यम्। पूर्वमधिकारिविशेषणतयोक्त्वा, [1]पश्चात् अङ्गमभिधाय फलस्य निगमितत्वात्॥ २४॥

इति पुरुषविद्याधिकरणम्-९

---

## १०. वेधाद्यधिकरणम्॥

## वेधाद्यर्थभेदात्॥ ३-३-२५॥

**आथर्वणिका उपनिषदारंभे 'शुक्रं प्रविध्य ... ... इह पाठो दिवाकीर्त्यत्वारण्येनुवाक्यत्वकृतः॥ २५॥** (२९१-२९३)

**वेधाद्यर्थभेदात्।** सन्निधिस्थपुरुषविद्याया इव तादृशां [2] **शं नो मित्रादि**मन्त्राणां ब्रह्मविद्याङ्गत्वमिति शङ्कया सङ्गतिः। **प्रवर्ग्यादीनि** इति। **आदिशब्दात्** महाव्रतादि॥

राद्धान्ते— **आदिशब्दात्** ऋतवदनादि। अनङ्गत्वे स्फुटेऽपि कथं वेधादेः [3]सौत्रत्वमित्यत्राह — **एतदुक्तम्** इति। **मन्त्रसामर्थ्यात्** — मन्त्रावगतवस्तुसामर्थ्यात्। तर्हि कथमुपनिषत्सु पाठः इत्यत्राह— **शुक्रम्** इति॥ २५॥

इति वेधाद्यधिकरणम्-१०

---

1. पश्चात् तदङ्गमभिधाय फलस्य निमित्ततयोक्तत्वात्-**क.**

2. शं नो मित्राणाम्-**अ.**

3. सूत्रितत्वम्-**अ.**

## ११. हान्यधिकरणम् ॥

### हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम् ॥ ३-३-२६ ॥

छन्दोगा आमनन्ति—अश्व इव रोमाणि ... ... कौषीतकिनामुभयाम्नानमविशेषपुनःश्रवणत्वेन प्रतिपत्तृभेदादविरुद्धम् ॥
(२९३-२९५)

**हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्स्तुत्युपगानवत् तदुक्तम्** । सन्निधिमतामन्यतदङ्गत्वमुक्तम् । तथा सन्निहितत्वात् हानादिचिन्ता वर्तते इति सङ्गतिः । **उपायनम्**—अन्यत्र प्रवेशः । **उपयन्ति** इति हि श्रुतिः ॥

राद्धान्ते— उपायनशब्दं प्रति अन्यस्य शेषत्वव्युदासायाह— **उपायनशब्दस्य** इति । **उपायन** शब्दः शेष इत्यर्थः । विपरीतं किं [1] न स्यादित्यत्राह— **उपायनवाक्यस्य** इति । तदुपपादयति— **विदुषा** इति । विदुषः [2] प्राधान्येनापेक्षितं हि प्रहाणम् । उपायनं तदुपयोगित्वात् तच्छेषमित्यर्थः हान्युपायनवचसोः प्रधानशेषभावे दृष्टान्तत्वव्युदासायाह— **प्रदेशान्तर** इति । **कुशाः**— पात्रविशेषाः । **तथा** इति । देवशब्दस्य अल्पाक्षरत्वेन पूर्वत्वसंभवात् क्रमो वाक्यान्तरापेक्ष इति भावः । **समया विषिते**— समया उदिते । **उपाकरोति**— प्रस्तौति । शेषत्वानुपगमेऽनिष्टमाह— **एवम्** इति । **न युज्यते**— [3] पाक्षिकबाधगर्भत्वादिति भावः ॥

**तदुक्तम्** इति [4] सूत्रखण्डः । तं पूरयति— **पूर्वं** इति । एक-

---

1. किं नेत्यत्राह–अ  2. प्राधान्येनानपेक्षितं–क
3. पाक्षिकबाधार्हत्वात्–अ.
4. सूत्रखण्डः । अन्यतरोक्तावपि–अ. (मध्ये ग्रन्थाभावः)

**वाक्यत्वात्** इति । अन्योन्यशेषशेषिभावेन अन्वयादेकवाक्यत्वम् । **केवलस्य** इति । **अभावात्**—अप्रामाणिकत्वात् । **कौषीतकिनाम्** इति । अन्यतरोक्तावप्यन्यतरस्यार्थसिद्धत्वात् सर्वत्रोभयमुक्तमिति उभयोक्तिः अविशेष-पुनःश्रुतिः इति अध्येतृभेदाददिरोध इत्यर्थः ॥ २६ ॥

इति हान्यधिकरणम्—११

## १२. सांपरायाधिकरणम् ॥

## सांपराये तर्तव्याभावात् तथा ह्यन्ये ॥ ३-३-२७ ॥

सुकृतदुष्कृतयोर्हानमुपायनं च ... ... 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति ॥ २७ ॥ (२९७ २९८)

**सांपराये तर्तव्याभावात् तथा ह्यन्ये**। सङ्गतिर्गता । **ताण्डिनः**—छन्दोगाः । राद्धान्ते—**तर्तव्य** इति । **तरतिः** प्राप्तिवाची ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ ३-३-२८ ॥

**एवमर्थस्वाभाव्यात् सुकृतदुष्कृत ... .... प्रथमश्रुतावयवात् प्रागनुगमयितव्य इत्यर्थः ॥ २८ ॥** (२९८)

**छन्दत उभयाविरोधात्**। **पदानाम्**—महावाक्यापेक्षया पदस्थानीयानां वाक्यावयवानाम् । कुत्र केषामन्वय इत्यत्राह- **कौषीतकी** इति । 'अग्निहोत्रं जुहोति' '[1]यवागूं पचति' इतिवत् ॥ २८ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते —

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ ३-३-२९ ॥

1. यवागून्–क.

**सुकृतदुष्कृतयोरेकदेशस्य .... ... अत उत्क्रान्तिसमये विदुषो निश्शेषकर्मक्षयो नोपपन्नः ॥ २९ ॥ (२९८-२९९)**

**गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः** । अणुत्वेऽपि सत्यसङ्कल्पानाविर्भावात् देहविरहाच्च गत्यशक्तिः ॥ २९ ॥

**अत्रोत्तरम्—**

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३-३-३० ॥

**उपपन्न एवोत्क्रान्तिकाले सर्वकर्मक्षयः ... ... तदेव तटाकादिक्रमशिथिलं कुर्वन्तस्तत्र पानीयपानादि कुर्वन्ति, तद्वत् ॥३०॥ (२९९)**

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्** । देहत्वाकारेण सजातीयार्थोपलब्धिः । न तु कर्मकृतैतद्देह एवेत्यभिप्रायेण **तल्लक्षण** इत्युक्तम्, न तु 'तदुपलब्धेः' इति । विद्यामाहात्म्यं विवृणोति — **विद्या हि** इति । [1] स्वफलाप्तिहेतुदेहस्थितिकरत्वं पुण्यपापयोरिव युक्तमिति भावः । **यथा** इति । अन्यहेतूत्पन्नस्य हेत्वभावेऽपि कार्यान्तरार्थस्थितौ दृष्टान्तः ॥ ३० ॥

**अथ स्यात्–ज्ञानिनां साक्षात्कृतपरतत्त्वानां ... ...**

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३-३-३१ ॥

**नास्माभिः सर्वेषां ज्ञानिनां देहपातसमये ... ... अतस्तेषां न देहपातादनन्तरमर्चिरादिगतिप्राप्तिः ॥ ३१ ॥ (२९९-३००)**

अनन्तरसूत्रमवतारयति— **अथ स्यात्** इति । **यावदधिकारमवस्थितिराधिकारिकाणाम्** । **अधिकारः** — पदम् । देहपातानन्तरप्राप्तार्चिरादिगतीनामेव तत्समकालपुण्यपापक्षय इति परिहारः ॥ ३१ ॥

इति सांपरायाधिकरणम्—१२

---

1. स्वफलाप्तिहेतुदेहस्थितित्वम्-क.

## १३. अनियमाधिकरणम् ॥

## अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ॥ ३-३-३२ ॥

उपकोसलादिषु येषूपासनेषु ... ... एवं सर्वविद्यासाधारणी इयं गतिः प्राप्तैवोपकोसलविद्यादावनूद्यते ॥ ३२ ॥　(३०३-३०४)

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्** । गतिः प्रस्तुता । अथ तन्नियमानियमचिन्तेति सङ्गतिः । सिद्धान्तबीजमाशङ्कयाह— **ये चेमे** इति । **उपासते इति** । इति वाक्यस्येत्यर्थः । **प्रमाणाभावात्**— [1] सत्य-तप शब्दयोः न ब्रह्मवाचित्वे मानमिति भावः ॥

राद्धान्ते — उपात्तवाक्ये सर्वब्रह्मविदुक्तिं दर्शयति — **इत्थं विदुः** इति । **तपःशब्दस्य** इति । 'परमं यो महत् तपः' इत्याद्यभिप्रेतम् । **अन्यत्र** इति । तयोः ब्रह्मपरत्वेऽपि इह तथात्वं न स्यादिति न वाच्यम्, 'ब्रह्म गमयति' इत्युक्तत्वात्, फलस्य यथोपासनत्वाच्च । **स्मृतिरपि** इति । **ब्रह्मविदः** इति ह्युच्यते इत्यर्थः ॥ ३२ ॥

इति अनियमाधिकरणम्—१३

---

## १४. अक्षरध्यधिकरणम् ॥

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३-३-३३ ॥

**बृहदारण्यके श्रूयते— एतद्वै तदक्षरं .... ... 'गुणमुख्य व्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इति ॥ ३३ ॥**　(३०५-३०६)

---

1, असत्यतपःशब्दयोर्हि ब्रह्मवाचित्वे मानमिति भावः—अ.

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ।** अचिरादेः सर्वविद्यासाधारण्यमुक्तम् । तथा अस्थूलत्वादेरपि तन्निरूप्यते इति सङ्गतिः । [1] **प्रपञ्चप्रत्यनीकतारूपाः** इति । **प्रपञ्चप्रत्यनीकं** ब्रह्म । **प्रपञ्चप्रत्यनीकत्वं** नाम प्रपञ्चस्वभावविरुद्ध[2]स्वभावत्वम् अस्थूलत्वादि । **अस्थूलम्** इत्यादिपदानि हि विषयत्वव्यवस्थानि । **अस्थूलम्**— स्थूलादन्यम । अनेन भिन्नाश्रयत्वलक्षणविरोधः फलित इति भावः । निर्दोषत्वविशेषरूप-मशनायाद्यतीतत्वादि तत्तद्विद्याव्यवस्थितम । सामान्येन सर्वहेयप्रत्यनीकत्वं [3]सर्वविद्याङ्गमित्यभिप्रायवान् **प्रपञ्चप्रत्यनीक** शब्दः । निरवद्यमित्यादिश्रुतेः सत्यत्वमपीहान्तर्भूतम । अस्थूलत्वादि तु निषेधरूपमिति भिदा । अतः पृथक् चिन्तनम् । **प्रमाणाभावात्** — हेत्वभावात । वस्तुसामर्थ्यं हेतुरित्यत्राह — **स्वरूप** इति ॥

राद्धान्ते— **सामान्यतद्भावौ** समुच्चित्य हेतुः । **प्रतीतौ भावात्** — [4]विषयत्वेन भावात् । धर्मान्तरनिषेधस्य धर्मिप्रतीतिपूर्वकत्वात न प्रतिषेध-रूपाणां तत्प्रतीत्यनुबन्धिगुणत्वमित्यत्राह— **एतदुक्तम्** इति । **असाधारणा-कारेण** — असाधारणस्वरूपेण । तृतीयानिर्देश औपचारिकः । असाधारण-स्वरूपग्रहणमित्यर्थः । अन्यथोत्तरग्रन्थो न घटते । **आकारः** — स्वरूपम् । प्रत्यगात्मनोऽपि हेयविरहात नासाधारण्यमित्यत्राह—[5]**प्रत्यगात्मनस्तु** इति । **विपरीतम्** असाधारणं, **रूपम्** इति तत्साजात्यशङ्का [6]व्युदासकधर्मत्वमात्रं विवक्षितम ; न तु सजातीयविजातीयेष्वविद्यमानत्वमात्रम । अविकारत्वेऽभि-हितेऽपि जडत्वशङ्का नापैति । अजडत्वोक्तावपि स्थूलत्वाणुत्वादिशङ्का नापैति ।

---

1. प्रपञ्चप्रत्यनीकतास्वरूपाः-इति भाष्ये श्रुतप्रकाशिकायां च पाठः ।
2. स्वभावः अस्थूलत्वादिः-क
3. सर्वविद्यार्हम्-अ.
4. विषयत्वे भावात्-अ.
5. प्रत्यगात्मनस्तु इति । असाधारणं रूपमिति-अ.
6. व्युदासकधर्मत्वमत्र विवक्षितम्-अ.

व्यापकजडत्वादिनिवृत्त्या स्थूलत्वादिशङ्का नेति चेत्, व्यापकजडत्वादिनिवृत्त्या व्याप्यवस्तुत्वनिवृत्तिः किं न शङ्क्येत? शास्त्रैकगम्यस्य वस्तुनो व्याप्त्यविषयत्वादिति चेत्, स्थूलत्वादिशङ्कायामपि तुल्यम्। ततश्च स्थूलस्य कस्यचिद्वस्तुविशेषस्याजडत्वादि संभवतीति [1] स्थूलत्वादि तत्तद्वस्तुसाजात्यशङ्का नापैति। अतः स्थूलत्वादिसर्वहेयप्रत्यनीकतयैव तत्तज्जातीयत्वशङ्का शाम्यतीति अस्थूलत्वादिकं तत्तत्साजात्यशङ्कानिवारकत्वादसाधारणं रूपम् ॥

**विशेषितशब्द** उपेतपरः। [2] दृष्टान्तोपजीव्यांशमाह— **गुणानाम्** इति। **जामदग्न्यम्**— जमदग्निना अनुष्ठितम्। **पुरोडाशी**— पुरोडाशद्रव्यकम्। **उपांशुत्वेन**— 'उपांशु यजुषा' इति वचनात् याजुर्वेदिकोपसदङ्गत्वात् [3] उपांशुता। [4] अन्यथा हि 'उच्चैः साम्ना' इति उच्चैर्गानं स्यात् ॥ ३३ ॥

**नन्वेवं सर्वासु ब्रह्मविद्यासु ... ...**

## इयदामननात् ॥ ३-३-३४ ॥

**आमननम्— आभिमुख्येन मननम् .... ... प्रधानानुवर्तिनोऽपि चिन्तनीयत्वेन प्रतिविद्यं व्यवस्थिताः ॥ ३४ ॥** (३०६-३०७)

[5] अनन्तरसूत्रस्य शङ्कामाह— **नन्वेवम्** इति। **इयदामननात्**। अक्षरार्थमाह— **आमननम्** इति। [6] तात्पर्यमाह— **येन** इति ॥ ३४ ॥

इति अक्षरध्यधिकरणम्—१४

---

1. स्थूलादितत्तद्वस्तुसामान्य-अ.
2. दृष्टान्तोपजीव्यमाशंक्याह-अ.
3. उपांशुकता-अ.
4. अन्यथा ह्युच्चैर्गानं-क.
5. अनन्तरसूत्रशङ्कामाह-क.
6. तात्पर्यार्थमाह-क.

१८. अन्तरत्वाधिकरणम् ॥

## अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्ति-रिति चेन्नोपदेशवत् ॥ ३-३-३५ ॥

बृहदारण्यके उषस्तप्रश्न एवमाम्नायते ... ... ब्रह्मणः कृत्स्न-प्राणिप्राणनहेतुत्वाशनायाद्यतीतत्वप्रतिपादनेन रूपैक्याद्विद्यैक्यम् ॥

**अन्तरा भूतग्रामवत् स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ।** हेयप्रत्यनीकत्वं परस्यासाधारणं चेत् अशनायाद्यतीतं [1] ब्रह्म स्यात्, प्राणितृत्वानुपेतो जीवः स्यादिति शङ्कया सङ्गतिः । **उषस्तप्रश्न** शब्देन प्रकरणं [2] लक्ष्यते । न रूपभेदः, प्रश्नैकरूप्यादित्यत्राह– **प्रतिवचन** इति । **सर्वान्तरत्वं** कथमित्यत्राह— **भूतग्रामवतश्च** इति । अस्वारस्यमाशङ्क्याह— **तथापि** इति । **तदिदम्** इत्यादि । **अन्तरा** इत्यादिना सूत्रव्याख्यानम् ॥

**अतोऽन्यदार्तम्** इत्यादि । **निरुपाधिक**शब्देन जीवव्यावृत्तिः । **दृष्टेर्द्रष्टारम्** इति 'ओदनपाकं पचति' इतिवत् । **उत्तरे अपि** प्रश्नप्रतिवचने इत्यर्थः । एवं धर्मिभेदाद्विद्याभेदः प्रत्युक्तः ॥ ३५ ॥

अथ स्यात्— यद्यप्युभे प्रश्नप्रतिवचने ... ...

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३-३-३६ ॥

नात्र विद्याभेदः, प्रश्नप्रतिवचनाभ्याम् ... ... गुणात् गुणान्तरविशिष्टतयोपास्यं प्रतिपाद्यते, तद्वत् ॥ ३६ ॥ (३११-३१२)

अनन्तरस्य शङ्कामाह — **अथ स्यात्** इति । धर्मभेदात् रूपभेद

1. ब्रह्मस्वरूपम्-क. 2. वक्ष्यते-अ.

उक्तः । प्रष्टृभेदात् विद्याभेदसंभवहेतुः । प्रष्ट्रैक्ये तदैक्यं संभवेत् । विद्यान्तरनैरपेक्ष्यादिति । **व्यतिहारो विंशिषन्ति हीतरवत्** । व्यतिहारं विवृणोति — **उषस्तस्य** इति । तत्फलमाह — **एवम्** इति । तदेव वदन् **विंशिषन्ति** इति पदं व्याचष्टे — **एनं सर्वे** इति । गुणैक्यात् रूपभेदः प्रत्युक्तः । प्रष्टृभेदो वैश्वानरविद्यादौ व्यभिचारीति भावः । **ननु** इति । सर्वप्राणयितृत्वाशनायाद्यतीतत्वयोरन्यतरेणालं [1] व्यावृत्तधियः इत्यर्थः । **तदुच्यते** इति । [2] व्यावृत्तबुद्ध्यतिशयजननार्थमिति परिहारः ॥ ३६ ॥

**तत्रापि प्रश्नप्रतिवचनभेदे ... ...**

## सैव हि सत्यादयः ॥ ३-३-३७ ॥

**सैव हि सच्छब्दाभिहिता परमकारण ... ... सत्यादयः सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते ॥** (३१३)

दृष्टान्ते विद्यैक्यस्थापनाय उत्तरसूत्रमवतारयति — **तत्रापि** इति । **सैव हि सत्यादयः** । **परमकारणत्वम्** उपास्यगुणः । तदुपयोगिसत्यत्वात्मत्वादीनां प्रतिपर्यायमावृत्तेरित्यर्थः ॥

**केचित्तु — 'व्यतिहारो विंशिषन्ति ... ... इतरेतराश्रयत्वमित्येवमादिभिः यथोक्तप्रकारमेव सूत्रद्वयम् ॥ ३७ ॥** (३१३-३१४)

मतान्तरमनूद्य व्युदस्यति — **केचित् तु** इति । सोऽपि सूत्रे वक्तव्य इत्यत्राह — **तत् तु** इति । 'सर्वत्र प्रसिद्धोपदेशात्' 'आत्मेति' [3] इति सूत्रद्वयमचिज्जीवतादात्म्यपरम । इह जीवपरयोरन्योन्यभावारोपणमित्यत्राह — **न च** इति । **तथ्यं न** इति । तार्क्ष्यध्यानवदसदारोपो न मोक्षायेति भावः ।

1. व्यावृत्तिधियः-अ.
2. व्यावृत्तिबुद्ध्यतिशय-अ
3. इत्यादि अ.

**उत्तरेण च** इत्यादि । ततः किमित्यत्राह— **न च** इति । **द्वयोः**— वाक्ययोर्मध्ये । **जहाति च**— शरीरमित्यर्थः । **द्वयोः**— [1] उत्तरवाक्योक्तयोरुपासनयोः । **गुणफलम्**— अङ्गफलम् । **प्रमाणाभावात्**— हेत्वभावात् । **उत्तरयोः**–पाप्महतिदेहहानयोः । **संयोगभेदाभावात्**–प्रधानफलैक्यादित्यर्थः । आदिशब्दात् [2] स्वमतोपपत्तयः उक्ताः ॥ ३७ ॥

इति अन्तरत्वाधिकरणम्--१५

---

## १६. कामाद्यधिकरणम् ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३-३-३८ ॥

छान्दोग्ये श्रूयते — 'अथ यदिदम् ...... आकाशस्याभिधायकत्वमवगम्यते । अतो विद्यैक्यम् ॥ ३८ ॥

**कामादीतरत्र तत्र चायतनादिभ्यः** । प्राणयितृत्वाशनायाद्यतीतत्वयोर्धर्मिभेदाभावात् विद्यैक्यमुक्तम् । अत्र तु गुणाष्टकस्य वशित्वादेश्च [3] धर्मिभेद इति शङ्कया सङ्गतिः । अत्र व्योमातीतव्युदासः फलितत्वात् । **गुणाष्टकम्, वशित्वादि** च इति धर्मभेदः । आकाशः, तत्र शयानश्चेति धर्मिभेद उक्तः ॥

राद्धान्ते— धर्ममात्रस्योपास्यत्वशङ्कां व्युदस्यन् **इतरत्र** इति पदं च व्याचष्टे– **वाजसनेयके** इति । **आकाश** इत्यादि । **स्वतः** प्राप्तमाकाशशब्दस्य भूताकाशपरत्वं छान्दोग्ये परमात्मधर्मश्रवणापोदितम् । वाजसनेयके तु नापवादः । आकाशे शयानस्य परमात्मधर्मश्रवणात् स एव परमात्मेत्यर्थः ॥

---

1. उत्तरवाक्योक्तोपासनयोः–क.
2. स्वोक्तोपपत्तयः उक्ताः–क.
3. धर्मिणश्च भेदः–अ.

**अथ स्यात्— यदुक्तं वाजसनेयके ... ...**

**आदरादलोपः** ॥ ३-३-३९ ॥

**ब्रह्मगुणत्वेन प्रमाणान्तराप्राप्तानां ... .. ब्रह्मणः प्रतिपाद्य तस्मिन् सत्यकामत्वादयो विधीयन्ते ॥ ३९ ॥**　　　(३१७-३१९)

अनन्तरसूत्रशङ्कामाह— **अथ** इति । [1] छान्दोग्यदहरविद्या सगुणविषया । इयं तु निर्गुणविषया विद्या । अतो नैक्यमित्यर्थः ॥

**आदरादलोपः** । **अप्राप्तानाम्** इति निषेधार्थानुवादशङ्का निरस्ता । अपूर्वत्वं तात्पर्यलिङ्गं चोक्तम् । विहितस्य [2] निषेधायोग उपपत्तिः । **तद्य इहात्मानम्**' इत्यादिना फलमुक्तम् । तत्रैवाभ्यासः सिद्धः । **न च** इत्यादि । गुणोक्तिर्न विप्रलिप्सामूला, नैर्गुण्योक्तावपि प्रसङ्गात् । न चार्वाचीनफलोपासनार्था, मोक्षप्रकरणस्थत्वात् सत्यश्रुतेश्चेति भावः । '**नेह नानाऽस्ति**' [3] इत्यादेरर्थमाह— **नेह** इति । गोबलीवर्दनयात् ब्रह्मप्रकारतया भेदो विहित इति अब्रह्मात्मकभेदविषयो निषेधः । **एकधा** इति तु ब्रह्मात्मकतया ऐकरूप्यमुक्तम । '**स एष न**' इति प्रपञ्चवैरूप्यम, प्रकरणानुगुण्यात् । **नास्य** इति । **अस्य**— प्रपञ्चस्य ॥ ३९ ॥

**नन्वेवमपि 'तद्य इहात्मानम् ... ...**

**उपस्थितेऽतस्तद्वचनात्** ॥ ३-३-४० ॥

**उपस्थितिः — उपस्थानम् ब्रह्मोपसंपन्ने ... ... मुमुक्षोः सत्यकामत्वादयो गुणा उपसंहार्याः ॥ ४० ॥**　　　(३१९)

1. छान्दोग्ये दहरविद्या—क.
2. निषेधायोगरूपोपपत्तिः—क.
3. इत्यादिश्रुतेरर्थम्-क

[1] अनन्तरसूत्रमवतारयंश्चोदयति—ननु इति । उपस्थितेऽतस्तद्वचनात् । अत एव इति । अनन्तरोक्त्या हेतुत्वमर्थमिति भावः । कथं ब्रह्मानुभवतोऽन्यापेक्षा इत्यत्राह— तदेतत् इति ॥ ४० ॥

इति कामाद्यधिकरणम्— १६

---

## १७. तन्निर्धारणानियमाधिकरणम् ॥

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ३-३-४१ ॥

'ओमित्येतदक्षरमुद्गीथमुपासीत' ... ... गोदोहनादिवत् कर्मस्वुद्गीथाद्युपासनानामनियमेनोपसंहारः ॥ ४१ ॥ (३२२-३२३)

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् । सत्यकामत्वादीनामुपसंहार्यत्वमुक्तम् । एवमुद्गीथादिधियां नियमेनोपसंहार इति शङ्कया सङ्गतिः । [2]शाखान्तरोक्तस्य शाखान्तराधीतकत्वङ्गद्वारा कर्मशेषत्वाय प्रोक्षणादौ सत्यपि पर्णता दृष्टान्तिता । [3]कथमफलदत्वेऽनुष्ठानं, फलदत्वे कथमङ्गत्वमित्यत्राह — कर्माङ्गत्वेन इति । [4]तच्छ्रुतमित्यत्राह— यदेव इति । फलश्रुतिरर्थवाद इत्यर्थः । न च गोदोहनवाक्य इव फलं सन्निकृष्टम्, वाक्यान्तरस्थत्वादिति चाभिप्रेतम् ॥

राद्धान्ते— आर्थवादिकफलस्य स्वीकार्यत्वाय रात्रिसत्रनय उक्तः । प्रतिष्ठा आर्थवादिकी स्वीक्रियते ॥ ४१ ॥

इति तन्निर्धारणानियमाधिकरणम्—१७

---

1. अनन्तरमवतारयन्–अ. 2. शाखान्तरोक्तासु–क.
3. कथमफलत्वे अनुष्ठानं, फलदत्वे च–अ.
4. कथं तच्छ्रुतम्–क.

## १८. प्रदानाधिकरणम् ॥

## प्रदानवदेव तदुक्तम् ॥ ३-३-४२ ॥

**दहरविद्यायां 'तद्य इहात्मानम् ... ... तदुक्तं 'नाना वा देवता पृथक्त्वात्' इति ॥ ४२ ॥** (३२४-३२५)

**प्रदानवदेव तदुक्तम्** । पूर्वं प्रासङ्गिकम् । अतस्तत्पूर्वं चिन्तित-दहरविद्याविषयचिन्तान्तरम् इति सङ्गतिः । केवलगुणिचिन्तनम्— आनन्द-त्वादिविशिष्टस्वरूपचिन्तनम् । गुणचिन्तनम् — गुणाष्टकचिन्तनम् । **सकृदेव**— तन्त्रेण ॥

राद्धान्ते— **गुणविशिष्टाकारः** — गुणसंबन्धिरूपम् , गुणगुणिरूप-समुदायः । स च स्वरूपमात्रात् भिन्नः । **अपहत** इति । अपहतपाप्मादि-शब्दानां धर्मिपर्यन्तत्वात् **सत्यान् कामान्** इत्यत्रापि तद्व्याप्तिर्विहितेत्यर्थः ॥

इति प्रदानाधिकरणम्—१८

---

## १९. लिङ्गभूयस्त्वाधिकरणम् ॥

## लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ३-३-४३ ॥

**तैत्तिरीया दहरविद्यानन्तरमधीयते ... ... इति निर्णीयमान-त्वाच्च प्रथमार्थे द्वितीयेति निश्चीयते ॥ ४३ ॥** (३२५—३२७)

**लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि** । **पूर्वप्रकृत** इति सङ्गति-र्ज्ञापिता । **परविद्या** इति दृष्टिधीव्युदासः । 'आत्मा गुहायाम्' 'आत्मा नारायणः' इति चात्मशब्दैक्यमार्थम् ॥

राद्धान्ते— **चिह्न** इति । श्रुत्यनन्तरलिङ्गव्युदासः । **पद्मकोश**

इति । 'ऐतदात्म्यमिदं सर्वम्' 'तत्त्वमसि' इतिवत् सामान्योक्तस्य विशेषनिष्ठतया उक्तिरिति भावः । **न च** इति । 'येनाऽऽवृतं खं च दिवम्' इतिवत् द्वितीयान्तानुगुणं प्रथमान्तवचो नीयतामित्यत्राह — **अन्तर्महिश्च** इति । 'विद्यात्' इत्यादिविधिपदरहितवाक्यप्रतिपन्नार्थस्वभावविरोधादित्यर्थः । पूर्वशेषत्वे विध्यध्याहारः, [1] प्रथमान्तास्वारस्यमर्थविरोधः ; इह तु द्वितीयान्तास्वारस्यमिति । 'नारायण परम्' इति न पञ्चमीलोपः । विभक्त्यर्थलक्षणानुपपत्तेः । समासेऽपि निषादस्थपतिन्यायप्राप्तेः महोपनिषदेकार्थ्यात् पूर्वापरश्रुत्यन्तरविरोधात् 'सुपां सुलुक्' विधानाच्चेति भाव । आत्मशब्दस्तु 'आत्मा वा इदम्' 'आत्मा वा अरे' इत्यादिष्वपि [2] नारायणप्रत्यभिज्ञापरः ॥ ४३ ॥

इति लिङ्गभूयस्त्वाधिकरणम्—१९

---

## २०. पूर्वविकल्पाधिकरणम् ॥

# पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ३-३-४४ ॥

**वाजसनेयकेऽग्निरहस्ये मनश्चितादयः ... ... विद्यारूपस्यापि क्रियामयक्रत्वङ्गतया क्रियारूपत्वम्, तथेहापि ॥ ४४ ॥** (३२८)

**पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्** । नारायणानुवाके इव प्रकरणस्य वाक्यादिना बाधाभावात् मनश्चितादयः क्रियामयक्रत्वनुप्रवेशिनः इति शङ्कया [3] सङ्गतिः । सौत्रनिर्देशानुरोधेन **क्रियारूपाः विद्यारूपाः** इति निर्दिष्टम् । तद्विवरणम् — **क्रियामयक्रत्वनुप्रवेशेन विद्यामय-**

---

1. प्रथमान्तास्वारस्यार्थविरोधाः-अ.
2. नारायणप्रत्यभिज्ञापकम्-अ
3. सङ्गतिः । क्रियाशब्दो लाक्षणिकः-अ. (मध्ये ग्रन्थाभावः)

**क्रत्वनुप्रवेशेन** इति च । मनश्चितादीनां स्वरूपस्य विद्यारूपत्वे न विप्रतिपत्तिः । अङ्गद्वारा विद्यारूपत्वे तु विप्रतिपत्तिः । अतः सूत्रे क्रियाशब्दो लाक्षणिकः । क्रियामयक्रत्वङ्गतया तत्संबन्धीत्यर्थः ॥

होमस्थानत्वात् **अग्नित्वम्** । नाग्निमात्रस्य क्रत्वपेक्षेति शङ्काऽयुदासाय चित्यशब्दः । **संपादितानाम्** — अनुसंहितानाम् । **सन्निधानम्** — बुद्धिस्थत्वम् । इष्टकाचितेन नैरपेक्ष्यमित्यत्राह — **विकल्प्यमानाः** इति । **अविवाक्ये** — विविधवाक्यरहिते । यद्वा, **विवाक्ये** — विगतवाक्ये । [1] स्वरूपेणासतोऽपि ग्रहस्य मानसत्वं मनोजन्योपयोगित्वात् ॥ ४४ ॥

## अतिदेशाच्च ॥ ३-३-४५ ॥

**इतश्चेष्टकचितेनाग्निना .... .... (क्रियामयक्रत्वनुप्रवेशेन) क्रियारूपा एवेति ॥ ४५ ॥** (३२९)

**अतिदेशाच्च** । **वीर्यं** — कार्यकरत्वसामर्थ्यम् । उपकारं दर्शयति— **ततश्च** इति ॥ ४५ ॥

**एवं प्राप्ते प्रचक्ष्महे—**

## विद्यैव तु निर्धारणाद्दर्शनाच्च ॥ ३-३-४६ ॥

**तुशब्दः पक्षं व्यावर्तयति । ... ... क्रतुरपि विद्यामयोऽत्र प्रतीयते ॥ ४६ ॥** (३२९)

राद्धान्ते— **विद्यैव तु निर्धारणाद्दर्शनाच्च** । **दर्शनात्** इत्यंशं व्याचष्टे— **दृश्यते च** इति । **एषु**— मनश्चितादिषु । **यत् किं च यज्ञे कर्म** इति प्रधानभूतकर्मोक्तम् । **यज्ञीयम्** इति अङ्गभूतम् ॥ ४६ ॥

---

1. स्वरूपेण सतोऽपि–अ.

ननु—अत्र विधिपदाश्रवणात् .... ....

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३-३-४७ ॥**

श्रुतिलिङ्गवाक्यानां प्रकरणात् ... ... क्रत्वनुप्रवेशसंभवम-लभमानं विद्यामयक्रत्वनुप्रवेशे लिङ्गं भवति ॥ ४७ ॥ (३२९-३३०)

अनन्तरस्य शङ्कामाह— **ननु** इति। विधिः कल्प्येतेत्यत्राह— **फलसंबन्ध** इति। **श्रुत्यादिबलीयस्त्वाच्च न बाधः**। **विद्यया** इति। प्रयोजनतया हेतुत्वम्। वाक्यप्रतिपन्नमर्थमाह— **एवंवित्** इति। लिङ्गमुप-पादयति— **सर्व** इति ॥ ४७ ॥

यच्चेदमुक्तं विधिप्रत्ययाश्रवणात् ... ...

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत्**
**दृष्टश्च तदुक्तम् ॥ ३-३-४८ ॥**

इष्टकचितान्वयिनः क्रियामयात् .. ... मनश्चितादीनामपि स्वक्रतुद्वारेण फलमित्यवगम्यते ॥ ४८ ॥ (३३०-३३१)

अनन्तरावताराय प्रागुक्तशङ्कायामपरिहृतांशमाह — **यच्चेदम्** इति। **अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम्। दृष्टश्च** इति। फलसंबन्धेऽपि श्रुतहानाप्रसङ्गाय हि विधिक्लृप्तिः। साऽपि प्राप्ता सानु-बन्धश्रुत्यादिभिः विद्यामयक्रत्ववगमादित्यर्थः। फलं च श्रुतमित्याह— **फलं च** इति ॥ ४८ ॥

यत्पुनरतिदेशेन तुल्यकार्यत्व ... ...

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि**
**लोकापत्तिः ॥ ३-३-४९ ॥**

नावश्यमतिदेशादवान्तर व्यापारस्यापि ... ... विद्यामय-क्रतुद्वारेण फलमित्यतिदेशादवगम्यते ॥ ४९ ॥ (३३१)

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः । अवान्तर-व्यापारस्य— क्रियामयक्रत्वन्वयस्य । देशरूप इति । देशः— आश्रयः । अङ्गाश्रयोऽङ्गी ॥ ४९ ॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ३-३-५० ॥

परेण च ब्राह्मणेन अस्यापि ... ... अग्न्यङ्गानां भूयस्त्वात् तत्सन्निधाविहानुबन्धः कृतः ॥ ५० ॥ (३३१-३३२)

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात् त्वनुबन्धः । न परं श्रुत्यादिभिः, प्रकरणेन च विद्यामयक्रत्वङ्गता उच्यते । [1]पृणानां — पूरयन्तीम् भुवम् । 'पॄ पालनपूरणयोः' । एतत् इति लिङ्गव्यत्ययः । 'एतमग्निं यो वेद' इत्यर्थः ॥ ५० ॥

इति पूर्वविकल्पाधिकरणम्—२०

---

## २१. शरीरे भावाधिकरणम् ॥

## एक आत्मनः शरीरे भावात् ॥ ३-३-५१ ॥

सर्वासु परविद्यास्वुपास्योपासन ... ... नैवम्, 'तं यथा यथोपासते' इत्युपास्यविषयत्वात् तस्य ॥ ५१ ॥ (३३५-३३६)

एक आत्मनः शरीरे भावात् । पूर्वं प्रासङ्गिकम् । तत्पूर्वस्मिन्

---

1. पृणानं-पूरयन्तम्-क

भगवत एव सर्वविद्योपास्यत्वमुक्तम् । तथा प्रत्यगात्मनश्चेति इममुपास्योपासकोपासनपरं दीपे व्याख्यातम् । तद्दीपोपजीव्यमुपास्यकोटिनिवेशं वक्ष्यन् तदुपयोगादाह— **वक्ष्यति च** इति । ततः किमित्यत्राह— **तावता** इति ॥

## सिद्धान्तः

**एवं प्राप्ते प्रचक्ष्महे—**

**व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्**

॥ ३-३-५२ ॥

**न त्वेतदस्ति – यत् ज्ञातृत्वाद्याकार ... ... तावन्मात्रमेव तत्रापेक्षितमिति न किञ्चिदपहीनम् ॥ ५२ ॥** (३३६-३३७)

राद्धान्ते — **व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्** । व्यतिरेकधर्ममात्रस्य [1] चिन्त्यत्वव्युदासायाह – **अस्य मोक्ष** इति । फलितमाह– **अतः** इति । **तं यथा** इति **तच्छब्दो** विशिष्टविषयः इति भावः । **अत एव**—प्राप्याकारस्यानुसन्धेयत्वादेव हि प्राप्यचिन्तनोक्तिरित्यर्थः । [2] पूर्वपक्षोक्तदृष्टान्तस्य वैषम्यमाह— **कर्मसु** इति । [3] वैधत्वावैधत्वे वैषम्यमित्यर्थः ॥ ५२ ॥

इति शरीरे भावाधिकरणम्–२१

—×—

---

1. चिन्तात्वव्युदासाय–क.
2. पूर्वपक्षोक्तं दृष्टान्तस्य–क
3. वैयर्थ्यावैयर्थ्ये–क.

## २२. अङ्गावबद्धाधिकरणम् ॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३-३-५३ ॥

**'ओमित्येतदक्षरमुद्गीथमुपासीत ... ... नैकस्य सन्निधिविशेषोऽस्तीति न व्यवस्था ॥ ५३ ॥** (३३८-३३९)

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** । यत्र यत्र ब्रह्मोपास्यं, [1]तत्र तत्र शुद्धात्मन उपास्यत्वमुक्तम् । एवं यत्र यत्र उद्गीथानुप्रवेशः तत्र तत्र तदुपास्तिरस्ति न वेति शङ्कया सङ्गतिः । **सर्व** इति । सर्वशाखाप्रत्ययनयेनोद्गीथैक्यादाक्षेपः । भेदकधर्मैः भिन्नत्वात् समाधिः । **तस्मिन्नेव** इति । 'गामानय' इत्यादौ [2]विशेषपर्यवसानदृष्टेरिति भावः ॥

राद्धान्ते—**सन्निहिता**–धीस्था धीस्थत्वं हि सन्निधिः । स च शब्दशक्त्या दर्शितः । 'गामानय' इत्यादिषु अयोग्यत्वं व्यवस्थापकम् । न त्वसन्निधिरिति भावः । अर्थतोऽपि सन्निधिमाह — **सर्वशाखा** इति । अङ्गिसन्निधेरङ्गसन्निधिरित्यर्थः ॥ ५३ ॥

## मन्त्रादिवद्वाऽविरोधः ॥ ३-३-५४ ॥

**वाशब्दश्चार्थे । आदिशब्देन ... ... ... सर्वासु शाखासु विनियोगो न विरुध्यते । तद्वदिहाप्यविरोधः ॥ ५४ ॥** (३३९)

**मन्त्रादिवद्वाऽविरोधः** । सर्वशाखासूद्गीथानुवृत्ते(तौ) दृष्टान्तः **मन्त्रादिः** । ततश्च सर्वशाखिनामुपासनेऽधिकारः ॥ ५४ ॥

इति अङ्गावबद्धाधिकरणम्—२२

---

1. तत्र शुद्धात्मनः–अ.
2. विशिष्टपर्यवसान-क.

## २३. भूमज्यायस्त्वाधिकरणम् ॥

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३-३-५५ ॥

'प्राचीनशाल औपमन्यवः' इत्यारभ्य ... ... भूमविद्या-स्तुत्यनुपपत्तेः, अतः समस्तोपासनमेव न्याय्यम् ॥ ५५ ॥
(३४०-३४२)

**भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति** । पूर्वप्रकृतसामावयव-भूतोद्गीथस्य समस्तस्य व्यस्तस्य चोपास्यत्वं श्रुतम् । [1]एवं किं वैश्वानर-विद्यायां समस्तस्य व्यस्तस्य चोभयस्य वोपास्यत्वमिति शङ्कया सङ्गतिः । **अन्ययनम्**— अन्नमत्ति । वैश्वानरोपास्तिरुपक्रान्ता, तत् कथं मूर्धमात्रो-पास्तिरित्यत्राह— **वैश्वानरत्वं चाह** इति । **वैश्वानरे उक्तस्य** — वैश्वानर-विषयतयोक्तस्य । **वाक्यभेदः**— महावाक्यभेदः । **यथा भूम** इति । प्रासङ्गिकार्थबहुत्वं प्रधानप्रतिपाद्यैक्याविरोधीत्यर्थः । व्यस्तोपासनं प्रासङ्गिक-मिति न विरोधः ॥

राद्धान्ते — **अनुवादमात्रम्**— समुदायोपासनतत्फले विवक्षिते । तदेकदेशकथनम् **अनुवाद** इत्यर्थः । स च फलविशेषाणां समस्तोपासन-फलान्तर्गतत्वज्ञापनार्थः । अन्यथा वाक्यभेदात् प्रत्यवायकथनाच्च । [2]**अत इदम्** इत्यादि । अनर्थाश्रवणं वैषम्यमुक्तम् । आधिक्यप्रतियोगित्वेनोपयोगित्वं च वैषम्यमाह — **नामादि** इति । **अतिशयितफलत्वं** श्रूयते, ततः किं महावाक्यैक्यस्येत्यत्राह — [3]**तत एव** इति । **अन्यथा** इति । अविवक्षितत्वे ॥ ५५ ॥

इति भूमज्यायस्त्वाधिकरणम्—२३

---

1. एवं वैश्वानर-अ. 2. अथ इदम्-अ.
3. तत एवेति । उप ... ... अन्यथेति-अ.

## २४. शब्दादिभेदाधिकरणम् ॥

## नाना शब्दादिभेदात् ॥ ३-३-५६ ॥

**इह ब्रह्मविद्याः सर्वाः ब्रह्मप्राप्तिरूप ... ... वेदान्तवाक्यानि अविधेयज्ञानपराणीति कुदृष्टिनिरसनाय । अतो विद्याभेद इति स्थितम् ॥ ५६ ॥** (३४४-३४५)

**नाना शब्दादिभेदात्** । पूर्वं [1] विद्याविशेषचिन्ता प्रवृत्ता; अथ सर्वविद्याविषयचिन्तेति सङ्गतिः । आदिशब्देन परमं गुह्यमभिप्रेतम् । उत्तराधिकरणे च पुनरुक्तिं परिहरति— **अत्रैव** इति । अविशेषपुनःश्रुति-प्रकरणान्तरयोः सामान्येन विद्याभेदकत्वे सिद्धे हि, विद्याविशेषाणां भेदाभेदचिन्ताप्राप्तिरित्यर्थः । रूपफलैक्ये पूर्वपक्षबीजम् ॥

राद्धान्ते— **विधेयम्** – साङ्गं [2] प्रधानं कर्म । **अनुबन्धाः** — अवयवाः । **तद्भेदहेतवः** शब्दादयः । तैः [3] अनुबन्धभेदात् विधेयभेदः । धात्वर्थभेदात् रूपभेदव्युदासायाह— **प्रत्ययावृत्ति** इति । **भिन्दन्ति** — अर्थेन हि धियां विशेषः इति भावः । **ब्रह्म** इति प्रकरणभेद उक्तः । इहोक्तेः फलमाह— **अस्मिन्** इति ॥ ५६ ॥

इति शब्दादिभेदाधिकरणम्—२४

---

## २५. विकल्पाधिकरणम् ॥

## विकल्पोऽविशिष्टफलत्वात् ॥ ३-३-५७ ॥

**ब्रह्मप्राप्तिफलानां सद्विद्यादहरविद्यादीनां ... ... ब्रह्मप्राप्ति-फला इत्यविशिष्टफलत्वात् सर्वासां विकल्प एव ॥ ५७ ॥** (३४६-३४७)

1. विद्याविशेष पुनःश्रुतिप्रकरणान्तरयोः-अ (मध्ये ग्रन्थाभावः)
2. प्रधानकर्म-अ.　3. अनुबन्धिभेदात्-क.

विकल्पोऽविशिष्टफलत्वात् । भेदे सिद्धे हि विकल्पसमुच्चयचिन्ता इति सङ्गतिः ॥

दृष्टान्ते — [1]साम्यश्रुत्युपादानात् निरवधिकानन्दब्रह्मसाम्यापन्नः स्यात् । अन्यनैरपेक्ष्यार्थं स्वस्य इति । अनवधिकातिशयानन्दम् [2] इति बहुव्रीहिः । आनन्दजननमित्यर्थः । काश्चित् अनिष्टनिवृत्त्यर्थाः, काश्चित् ब्रह्मावाप्त्यर्था इति समुच्चय इत्यत्राह— सर्वाश्च इति ॥ ५७ ॥

ब्रह्मप्राप्तिव्यतिरिक्तफलास्तु ... ....

## काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात् ॥ ३-३-५८ ॥

**अपरिमितफलत्वाभावादित्यर्थः ॥ ५८ ॥** (३४७)

उत्तरसूत्रं पूर्वेण घटयन् तदर्थमाह — **ब्रह्मप्राप्तिव्यतिरिक्त** इति । काम्यसमुच्चयविकल्पयोः इच्छा नियामिकेति **यथाकाम**शब्दार्थ इति भावः ॥

**काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्** । हेतुपदं व्याचष्टे— **अपरि** इति ॥ ५८ ॥

इति विकल्पाधिकरणम्—२५

---

### २६. यथाश्रयभावाधिकरणम् ॥

## अङ्गेषु यथाश्रयभावः ॥ ३-३-५९ ॥

**उद्गीथादिक्रत्वङ्गेष्वाश्रिताः ... ... ... उपासनास्तन्मुखेन क्रत्वङ्गभूता इति नियमेनोपादेया एव ॥ ५९ ॥** (३४८-३४९)

---

1. साम्यश्रुत्युपादानं निरवधिकानन्दब्रह्मसाम्यापन्नस्यान्यनैरपेक्ष्यार्थं स्वस्य इति ।– अ 2. इति ब्रह्म हिं-अ.

**अङ्गेषु यथाश्रयभावः** । यथाकामं काम्यानां समुच्चयविकल्पावुक्तौ । एवमुद्गीथादिविद्याश्च यथाकामम् [1] उपादेया वेति सङ्गतिः । **ननु** इति । पुनरुक्तिं परिहर्तुं पूर्वमुक्तांशमाह — **तत्र हि** इति । **न हि** इति । फलस्य स्ववाक्यस्थत्वाभावात् विलम्बः [2] गोदोहनवाक्याद्वैषम्यम् । अङ्गत्वविरोध्यभाव उक्तः । [3] अनुकूलहेतुमाह — **उद्गीथ** इति । 'व्रीहीन्' इतिवत् द्वितीयाश्रुत्या शेषत्वमिति भावः । फलस्य वाक्यान्तरस्थतां दर्शयति — **यदेव** इति । ततः किमित्यत्राह — **स्ववाक्येन** इति । [4] फलस्य स्ववाक्यस्थत्वाभावे सति अव्यभिचरितक्रतुसंबन्धिजुहूसंबन्धात् पर्णताया अङ्गत्वे सिद्धे वाक्यान्तरस्थापापश्लोकश्रवणादिफलश्रुतिरर्थवाद इत्यर्थः । ततः किमित्यत्राह — **अतः** इति । **प्रयोगविधिः** — अनुग्राहकत्वदशापन्नविधिः, न तु ज्ञापकावस्थः ॥ ५९ ॥

## शिष्टेश्च ॥ ३-३-६० ॥

**शिष्टिः — शासनम्, विधानमित्यर्थः ... ... उद्गीथाङ्गभाव एव हि विधेय इति गम्यते ॥ ६० ॥** (३४९)

**शिष्टेश्च** । युक्तिरुक्ता । लिङ्गान्युच्यन्ते । गोदोहनवैषम्यमाह — **गोदोहन** इति ॥ ६० ॥

## समाहारात् ॥ ३-३-६१ ॥

**होतृषदनाद्वैवापि दुरुद्गीथम् ... ... वेदनहानावन्येन समाधानं ब्रुवन् तस्य नियमेनोपादानं दर्शयति ॥ ६१ ॥** (३४९)

**समाहारात्** । **समाहारः** — समाधानम् ॥ ६१ ॥

---

1. उपादेया इति सङ्गतिः—क
2. गोदोहनवद्वाक्यात्-अ.
3. अनुकूललिङ्गमाह-अ.
4. फलस्य वाक्यस्थ-अ.

## गुणसाधारण्यश्रुतेश्च ॥ ३-३-६२ ॥

**उपासनगुणस्य उपासनाश्रयस्य ... ... उद्गीथाद्युपासनानामुद्गीथादिवन्नियमेनोपादानम् ॥ ६२ ॥** (३४९)

**गुणसाधारण्यश्रुतेश्च**। उपासनार्थत्वविवक्षया [1] तदाश्रयस्य **गुण**-शब्देनोक्तिः। **समाहारः** — अनुवृत्तिः। तदुपपादयति — **तेन** इति ॥

## सिद्धान्तः

**इति प्राप्त उच्यते —**

## न वा तत्सहभावाश्रुतेः ॥ ३-३-६३ ॥

**न चैतदस्ति यदुद्गीथाद्युपासनानां ... ... तत्र फलश्रुतिरर्थवादमात्रं स्यात् ॥ ६३ ॥** (३४९-३५०)

राद्धान्ते — **न वा तत्सहभावाश्रुतेः**। सहभावमात्रान्न अङ्गत्वमित्यत्राह — **अङ्गभावे हि** इति। नियमो विवक्षितः इत्यर्थः। अङ्गत्वविरोधितत्पृथक्फलसाधनत्वमभिप्रेतम्। तदुपपादयति — **यद्यपि** इति। **साधनभावः प्रतिपाद्यते** इति। गोदोहनवाक्ये साधनत्वं कल्प्यमिति एकविलम्बः। इह तु तन्न कल्प्यम्। कर्ममात्रस्य विद्यासाध्यत्वाभावात्। वीर्यवत्तरत्वविशिष्टस्यैतत्साध्यत्वम् इति साधनभावस्य शाब्दत्वात्। प्रणयनमात्रस्यैव गोदोहनसाध्यताप्रतीतिः। न तु पशुसाधनताविशिष्टस्य, [2] साधनवाचकत्वाभावात्। फलं तु वाक्यान्तरस्थमित्येको विलम्बः, इति एकविलम्बवत्त्वसाम्यमभिप्रेतम् ॥

---

1. तदाश्रयणस्य-अ.
2. साधनत्ववाचकाभावात्-अ.

[1]तेन फलसाधनतयैव विधिरित्यत्राह — **तेन** इति । ततः किमित्यत्राह — **क्रतुफलात्** इति । तर्हि कथं द्वितीयाश्रुत्या शेषत्व-मित्यत्राह — [2]**अत उपासनस्य** इति । मात्रचा [3]शेषित्वव्युदासः । गोदोहनं किंसंबन्धि पशुसाधनमितिवत् उपासनं किंविषयं फलसाधन-मित्यपेक्षायां सन्निहितोद्गीथसंबन्धित्वे सति गोदोहनं प्रति प्रणयनमात्रस्येव उपासनं प्रत्युद्गीथस्य न शेषित्वमित्यर्थः । पृथक्फलत्वे अधिकार्यन्तरेणानुष्ठेय-मित्यत्राह — **उद्गीथश्च** इति । यथा क्रत्वधिकृतस्यैव गोदोहने पशुकामना-निमित्तमधिकारान्तरं तद्वदित्यर्थः ॥

वीर्यवत्तरत्वस्य पृथक्फलतामाह — **वीर्य** इति । पर्णतावैषम्यमाह— **पर्णतादीनां तु** इति । पर्णताफलं वाक्यान्तरस्थतया साधनभावस्य कल्प्यतया च विलम्बद्वयोपहतमिति अङ्गत्वमित्यर्थः । फलस्य वाक्यान्तरस्थत्वात् विलम्बानुक्तिः स्पष्टत्वात् । 'जुह्वा जुहोति' इत्युक्ते द्रव्यविशेषाकांक्षाऽस्ति, नैवमुद्गीथस्योपासनं प्रत्याकांक्षा इति अर्थसिद्धम ॥ ६३ ॥

## दर्शनाच्च ॥ ३-३-६४ ॥

दर्शयति च श्रुतिरुपासनोपादाननियमम् .... ... समा-हारादिलिङ्गानां प्रायिकत्वमवगम्यते । अतोऽनियम एवेति स्थितम् ॥ (३५०-३५१)

इति यथाश्रयभावाधिकरणम्—२६

### इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य तृतीयः पादः ॥

---

1. एतेन - क
2. तत एवोपासनस्य.
3. शेषत्वम् क.

**दर्शनाच्च**। युक्तिः परिहृता। लिङ्गानि निरस्यन्ते। **अभिरक्षणम्** ऋतुफलाप्रतिबन्धकरणादि। **प्रायिकत्वम्** इति। समाधानं सति सङ्कल्पे स्यात्। गुणसाधारण्यमपि तथा। यद्वा **तेन** इति पदं प्रणवमात्रपरम्, न तु सोपासनतत्परम्। शिष्टिश्च उद्गीथसंबन्धितया, न तु शेषतयेति भावः।

इति यथाश्रयभावाधिकरणम्—२६

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-
नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-
शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विरचितायां
श्रुतप्रदीपिकायां तृतीयस्याध्यायस्य तृतीयः पादः॥

---

# तृतीयाध्याये चतुर्थः पादः ॥

---

## १. पुरुषार्थाधिकरणम् ।

### पुरुषार्थोऽतःशब्दादिति बादरायणः ॥ ३-४-१ ॥

गुणोपसंहारानुपसंहारफला ... ... तथा विद्वान् नामरूपाद्वि-मुक्तः परात् परं पुरुषमुपैति दिव्यम्' इत्यादि ॥ १ ॥ (३५४)

पुरुषार्थोऽतःशब्दादिति बादरायणः । अङ्गिचिन्तानन्तरमङ्ग-चिन्तेति पादसङ्गतिः । विद्यायाः अङ्गित्वे सति हि तदङ्गस्य चिन्त्यता । अतः तस्या अङ्गित्वं प्रथमं निरूप्यते ॥ १ ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते —

### शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ ३-४-२ ॥

नैतदेवं यद्विद्यातः पुरुषार्थावाप्तिः ... ... अतः विद्यायाः क्रतुशेषत्वान्नातः पुरुषार्थः ॥ २ ॥ (३५४-३५६)

द्वितीयमवतारयति— अत्र इति । शेषत्वात् पुरुषार्थवादो यथा-ऽन्येष्विति जैमिनिः । [1] कर्मसु इति । 'अधीत्य' इति ज्ञानं कर्मशेष-मिति आत्मज्ञानमपि तच्छेषम् । क्रतुशेषप्रोक्षणादिद्वारभूतव्रीह्यादेरिव ज्ञातु-र्यात्मनश्च कर्मशेषतया तत्स्वरूपोक्तिपरत्वादित्यर्थ. । 'ऐतदात्म्यमिदं सर्वम्' 'सर्वं खलु' इति अचितेव चिताऽप्यैक्यायोग इति भावः । वेदान्तवाक्ये-ष्वेव – विलक्षणपरतया त्वदुक्तेष्वेवेति भावः । लिङ्गैः – ज्ञापकैः । कर्तु-

---

1. कर्मसु इति । ज्ञानं कर्मशेष–अ.

जुह्वा इवाव्यभिचरितक्रतुसंबन्धित्वाभावात् न तद्धीः [1]पर्णतावत् क्रत्वङ्गमिति चोदयति — ननु च इति । परिहरति — नैवम् इति ॥ २ ॥

**कानि पुनस्तानि लिङ्गानि, यदुपबृंहित ... ...**

## आचारदर्शनात् ॥ ३-४-३ ॥

**ब्रह्मविदां प्राधान्येन कर्मस्वेव ... ... कर्माङ्गत्वमेवेति न विद्यातः पुरुषार्थः ॥ ३ ॥** (३५३)

अनन्तरसूत्रावतारायाह — **कानि** इति । **आचारदर्शनात्** । गुणमुख्यव्यतिक्रमे **मुख्यस्य** हि अनुरोद्धव्यता । अतः कर्मप्राधान्यमिति भावः ॥ ३ ॥

**लिङ्गमिदम्, प्राप्तिरुच्यतामित्यत्राह --**

## तच्छ्रुतेः ॥ ३-४-४ ॥

**श्रुतिरेव हि विद्यायाः कर्माङ्गत्वमाह ... ... विद्यया करोति' इति विद्यामात्रविषया हीयं श्रुतिः ॥ ४ ॥** (३५६)

**लिङ्गम्**—अनुग्राहकम् । **प्राप्तिः**— मानत सिद्धिः । **तच्छ्रुतेः** । तृतीयाश्रुत्या [2]अङ्गत्वावगमः ॥ ४ ॥

## समन्वारंभणात् ॥ ३-४-५ ॥

**तं विद्याकर्मणी समन्वारभेते' ... ... न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति ॥ ५ ॥** (३५६ ३५७)

1 वर्णतावत् क.
2. तदवगमः–अ.

समन्वारंभणात् । विपर्ययेऽपि साहित्यं संभवतीत्यत्राह — उक्तेन इति । न्यायेन — [1]आत्मनः कर्मशेषत्वादिना ॥ ५ ॥

## तद्वतो विधानात् ॥ ३-४-६ ॥

**विद्यावतः कर्मविधानात् विद्या ... ... कर्मसु विनियुक्तेति न पृथक्फलायावकल्पते ॥ ६ ॥** (३५७)

**तद्वतो विधानात्** । **अधीत्य** इति । 'स्नात्वा जुहोति' इतिवदिति भावः । ततः किमित्यत्राह — **अर्थावबोध** इति । अर्थधीपर्यन्तता कथमित्यत्राह — [2]**अर्थ** इति । श्रुतेरविवक्षितार्थत्वादिदोषपरिहारार्थमित्यर्थः ॥ ६ ॥

## नियमात् ॥ ३-४-७ ॥

**इतश्च न विद्यातः पुरुषार्थः । .... ... कर्मण एव फलमित्यवगम्यते । विद्या तु कर्माङ्गमिति ॥ ७ ॥** (३५७)

**नियमात्** । कृत्स्नायुषः क्रतुशेषत्वात्, मध्यगतं सर्वं तच्छेषमित्यर्थः ॥ ७ ॥

### सिद्धान्तः

**एवं प्राप्ते प्रचक्ष्महे —**

## अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात् ॥ ३-४-८ ॥

**तुशब्दात् पक्षो व्यावृत्तः .... .... श्रूयमाणं फलमिति विद्यातः पुरुषार्थ इति सुष्ठूक्तम् ॥ ८ ॥** (३५७-३५८)

---

1. आत्मकर्मशेषत्वादीनां—अ.
2. अर्थेति । अविवक्षितार्थत्वादिपरिहारार्थमिति भावः—अ.

राद्धान्ते — **अधिकोपदेशात् तु बादरायणस्यैवं तद्दर्शनात्** ।
लिङ्गेषु सत्सु कथं विज्ञानः फलमित्यत्राह — **लिङ्गानि** इति । [1]उपासन-वाक्यानां स्वरूपपरवाक्योक्तगुणमापेक्षत्वात् **वेदनोपदेशवाक्येषु** इत्युक्तम् । जुहूवत् कर्तुः प्रत्यभिज्ञाभावात् न तद्द्वारा [2]तद्धियः कर्माङ्गत्वमिति फलश्रुतिः नार्थवाद इत्यर्थः ॥ ८ ॥

**लिङ्गान्यपि निरस्यन्ते —**

## तुल्यं तु दर्शनम् ॥ ३-४-९ ॥

**यदुक्तं ब्रह्मविदां कर्मानुष्ठानदर्शनात् ... ... विद्यायाः कर्माङ्गत्वे कर्मत्यागः कथमपि नोपपद्यते । ९ ॥** (३५८-३५९)

**तुल्यं तु दर्शनम्** । अननुष्ठानेऽपि **दर्शनं तुल्यम्** इति शब्दार्थः । **अनैकान्तिकम्** इति फलितोक्तिः । **अनैकान्तिकम्** — अनियतम् । अनुष्ठानस्यैव [3]दर्शनमिति न नियतमित्यर्थः । अनुष्ठानाननुष्ठानव्याहति-स्तन्मत एव ब्रह्मविद्याफलानामर्थवादत्वात् [4]मोक्षार्थत्वत्रिवर्गार्थत्वविभागा-नुपपत्तेरित्यभिप्रायेणाह — **विद्यायाः** इति ॥ ९ ॥

**यदुक्तं — श्रुत्यैव विद्यायाः .... ...**

## असार्वत्रिकी ॥ ३-४-१० ॥

**न सर्वविद्याविषयेयं श्रुतिः ... ... यच्छब्देन निर्दिश्य तस्य हि वीर्यवत्तरत्वमुच्यते ॥ १० ॥** (३५९)

1. उपात्तवाक्यानाम् क.
2. तद्धीः कर्माङ्गमिति फलत्वं, नार्थवादः–अ.
3. दर्शनमिति नियतम्–क.
4. मोक्षार्थत्वत्रिवर्गार्थत्वरूपविभागानुपपत्तेरित्यभिप्रायेणाह- क.

**अमार्गिकी** । प्रकरणात् श्रुतिर्बलीयसीत्याह — **न हि** इति । **यत् करोति तद्विद्यया** इति नान्वयः, क्लिष्टत्वात् । यद्विद्यया करोति तद्वीर्यवत्तरमित्यन्वये सति विद्यया कार्यमनुवदतो वचसः प्रापकापेक्षायां, तत्प्रापकं प्रकरणं विद्याशब्दं सङ्कोचयति । अतः [1] अनुवादतयाऽन्यसापेक्षस्य विद्ययेति पदस्य स्वतो निश्चयासामर्थ्यात् एकपदसामर्थ्यरूपा श्रुतिर्नेत्यर्थः ॥

**यच्चेदमुक्तं, तं विद्याकर्मणी … …**

## विभागः शतवत् ॥ ३-४-११ ॥

**'तं विद्याकर्मणी समन्वारभेते' … … स्वार्थं शतमिति विभागः प्रतीयते ; तथेहापि ॥ ११ ॥** (३५९)

**विभागः शतवत्** । समन्वारंभणश्रुतेर्मोक्षार्थविद्याकर्मविषयत्वे अयमर्थः— प्रारब्धावसाने मोक्षं दातुं विद्याऽन्वेति ; जन्मान्तरेऽपि विद्यां जनयितुं कर्मान्वेति इति ॥ ११ ॥

## अध्ययनमात्रवतः ॥ ३-४-१२ ॥

**यदुक्तं — विद्यावतः कर्मविधानात् … … पुरुषार्थसाधनभूता विद्येति न तस्याः कर्मसंबन्धगन्धो विद्यते ॥ १२ ॥** (३६०)

**अध्ययनमात्रवतः** । **आधानवत्** इति शब्दस्वारस्यं दर्शितम् । प्रवर्तकाभावात् [2] अनारंभणीयत्वाद्यर्थानुपपत्तिं परिहरति — **गृहीतस्य** इति । अत्र वक्तव्यं सर्वं प्रथमसूत्रेऽभिहितम् । अर्थधीपर्यन्तत्वमुपगम्याह — **यद्यपि** इति । विद्याया अध्ययनशब्दवाच्यातिरिक्तत्वादित्यर्थः । **यथा** इति । [3] अनुष्ठानं प्रति स्वरूपज्ञानवत् विद्यां प्रति शास्त्रजन्यं ज्ञानं शेषमित्यर्थः ॥

1. अनुवादितया–**क**.
2. अनारंभणीयत्वादर्थानुपपत्ति–**क**.
3. अनुष्ठानं प्रति विद्यां प्रति शास्त्रजज्ञानम्–**अ**.

## नाविशेषात् ॥ ३-४-१३ ॥

यच्चोक्तं 'कुर्वन्नेवेह कर्माणि' ... ... विदुषस्त्वाप्रयाणादुपासनस्यानुवर्तमानत्वात् ॥ १३ ॥ (३६०)

नाविशेषात् । प्रधानानुवृत्त्याऽङ्गानुवृत्तिरुपपन्नेत्याह— विदुषस्तु इति ॥ १३ ॥

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य ... ...

## स्तुतयेऽनुमतिर्वा ॥ ३-४-१४ ॥

वाशब्दोऽवधारणार्थः ... ... न कर्म लिप्यते नरे' इति । अतो न कर्माङ्गं विद्या ॥ १४ ॥ (३६०-३६१)

अर्थस्वाभाव्यम् — अर्थज्ञानादन्यत्वम् ; कर्माङ्गत्वं च । स्तुतयेऽनुमतिर्वा । ईशावास्यम् इति । ईट्शब्दे तृतीया । [1] ईशेनाऽऽवास्यमिति भावः । न रमते इति नरः । निस्सङ्गे त्वयि न कर्म लिप्यते इति, इतोऽन्यथा नास्ति - इदं तत्त्वमित्यर्थः ॥ १४ ॥

## कामकारेण चैके ॥ ३-४-१५ ॥

अपि चैवमेके शाखिनः ... ... गार्हस्थ्यत्यागो न संभवति । अतो न विद्या कर्माङ्गम् ॥ १५ ॥ (३६१)

कामकारेण चैके । कामात् यथाभिमताश्रमधर्मानुष्ठानं कामकारः । गार्हस्थ्य इत्याद्यध्याहृतम् । नाङ्गावलम्बेनाङ्गिनस्त्याग इत्यर्थः ॥ १५ ॥

## उपमर्दं च ॥ ३-४-१६ ॥

---

1· ईशेनावास्यं वा—अ.

पुण्यापुण्यरूपस्य समस्त ... ... तद्विद्यायाः कर्माङ्गत्वे न सङ्गच्छते ॥ १६ ॥ (३६१)

उपमर्दं च । न ह्यङ्गेन [1] अङ्गिन उपमर्द इत्यर्थः ॥ १६ ॥

## ऊर्ध्वरेतस्सु च शब्दे हि ॥ ३-४-१७ ॥

ऊर्ध्वरेतस्स्वाश्रमेषु ब्रह्मविद्या ··· ··· यावज्जीवश्रुतिस्त्वविरक्तविषया ॥ १७ ॥ (३६१-३६२)

ऊर्ध्वरेतस्सु च शब्दे हि । स्मृतिषु प्रतीयन्ते इत्यत्राह— श्रुति इति । धर्मस्कन्धाः — धर्माश्रयाः ॥ १७ ॥

## परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥ ३-४-१८ ॥

यदिदं 'त्रयो धर्मस्कन्धाः' ... ... आश्रमा न सन्तीति जैमिनिराचार्यो मन्यते ॥ १८ ॥ (३६२)

परामर्शं जैमिनिरचोदनाच्चापवदति हि । स्फुटम् ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३-४-१९ ॥

गृहस्थाश्रमवदाश्रमान्तरमप्यनुष्ठेयं ... ... देवयानविधानस्य तत्रापि तत्प्राप्तिरङ्गीकरणीया ॥ १९ ॥ (३६२-३६३)

अनुष्ठेयं बादरायणः साम्यश्रुतेः । न साम्यं वाच्यम्, आश्रमान्तरकीर्तनस्यैवाभावादिति शङ्कते - न च इति । व्याख्यानान्तरव्यावृत्त्यर्थमाह— अतो यज्ञः इति । यौगिकः इति । प्रोक्षणीनयाच्चतुर्थाश्रमपरत्वायोगोऽभिप्रेतः । अर्थानुपपत्त्या अपि तदयोगमाह— तच्च सर्वेषाम् इति । तत्र पुण्यलोकभाजः इत्यस्यार्थमाह— ब्रह्मनिष्ठाविकलाः इति ॥ १९ ॥

1. अङ्गिरूपमर्द -अ.

परामर्शपक्षे विधानपक्षे च ... ...

**विधिर्वा धारणवत्** ॥ ३-४-२० ॥

**वाशब्दोऽवधारणार्थः । ... ... अत ऊर्ध्वरेतस्सु च ब्रह्मविद्याविधानात् विद्यातः पुरुषार्थ इति सिद्धम्** ॥ २० ॥ ( ३६३-३६४ )

**विधिर्वा धारणवत् । ऋणश्रुतिः** — [1] ' त्रिभिः ऋणवा जायते ' इत्यादिका । **अपवादश्रुतिः** — ' वीरहा ' इत्यादिः । **स्वस्वाश्रमधर्मविषयाः** इति । तत्तदाश्रमिणां तत्तद्धर्मानुवृत्तिपराः । न त्वाश्रमान्तराणां विद्याङ्गत्वविरोधिन्यः इत्यर्थः । अधिकरणार्थमुपसंहरति — **अतः** इति ॥

इति पुरुषार्थाधिकरणम्--१

---

## २. स्तुतिमात्राधिकरणम् ॥

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्** ॥ ३-४-२१ ॥

**इदमिदानीं चिन्त्यते — स एष रसानां ... ... उद्गीथादिषु रसतमादिदृष्टिविधानमेव न्याय्यम्** ॥ २१ ॥ ( ३७०-३७१ )

**स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ।** ब्रह्मसंस्थश्रुतिप्रसङ्गात् रसतमत्वादिपरवाक्यानि स्तुत्यर्थानि नेति शङ्का [2] जायेतेति प्रसङ्गात् सङ्गतिः । पूर्वोक्तपरसापेक्षया **अष्टमत्वम्** । हेतुं विवृणोति — [3] **क्रत्वङ्ग** इति । ततः किमित्यत्राह— **यथा** इति । क्रत्वङ्गोपादानपूर्वकत्वेऽपि न [4] पर्णतायाः स्तुत्यर्थता, उपादातुं शक्यत्वात् । **स्वर्लोकत्वादिकं** त्वशक्यमिति भावः ॥

---

1. त्रिभिः ऋणैः ऋणवा जायते-**क**.
2. जातेति-**अ**. 3. क्रत्वङ्गेति-**अ**.
4. पर्णतायास्स्तुत्यर्थतया उपादातुमशक्यत्ववत् स्वर्लोकत्वादिके-**अ**.

राद्धान्ते — जुह्वादेः पृथिवीत्वादिकमप्यप्राप्तमित्यत्राह — **न च** इति । न च रसतमत्वादेः पृथिवीत्वादेरिवोपादातुमशक्यत्वम्, उत्पत्तिरूपेणाशक्यत्वेऽपि ज्ञप्तिरूपेण शक्यत्वात् । पृथिवीत्वादेः ज्ञप्तिरूपेणोपादातुं शक्यत्वेऽपि एकवाक्यत्वप्रतीति[1] बलात् न दृष्टिविध्यर्थतेति भावः । **यया कया च** इति । रसतमत्वादेरप्राप्तत्वात् न तदनुवादेन स्तुतिः । अयोग्यत्वात् नाप्राप्तविधानेन स्तुतिः । क्रतुसन्निध्यभावेन एकवाक्यत्वप्रतीत्यभावात् नामुख्यगुणान्वयेन स्तुतिः । अतो दृष्टिविधिरित्यभिप्रायः ॥ २१ ॥

## भावशब्दाच्च ॥ ३-४-२२ ॥

**'उपासीत' इत्यादिभावशब्दाच्च ... ... तस्मादुपासन-विधानार्था एताः श्रुतयः ॥ २२ ॥** (३७१)

पूर्वपक्षयुक्तिः परिहृता । स्वपक्षे हेतुरुच्यते — **भावशब्दाच्च** । **भावः** — क्रिया ॥ २२ ॥

इति स्तुतिमात्राधिकरणम् — २

---

### ३. पारिप्लवार्थाधिकरणम् ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३-४-२३ ॥

**प्रतर्दनो ह वै दैवोदासिः ... ... आख्यानश्रुतयः पारिप्लव-प्रयोगार्थाः, अपि तु विद्याविध्यर्थाः ॥ २३ ॥** (३७२)

**पारिप्लवार्था इति चेन्न विशेषितत्वात्** । इदं च प्रासङ्गिकम् । रसतमत्वादेः स्तुत्यर्थत्वं पूर्वपक्षीकृतम् । एवं [2]प्रातर्दनाद्याख्यानानि किं

---

1. बलात् दृष्टिविध्यर्थता–क.
2. प्रतर्दनाख्यानानि–क.

S. 65

स्तुत्यर्थानि न वेति सङ्गतिः । **पारिप्लवाः** — आख्यानानि ; तच्छंसनार्था इत्यर्थः । **प्रतिपादनार्थानि** — स्तावकत्वेन प्रतिपादनार्थानि । **विद्याविध्यर्थाः** — स्तावकतया शेषभूताः तेषामेव । अन्यथा आख्यानानन्त्यात् अशक्यत्वमिति भावः ॥ २३ ॥

## तथा चैकवाक्योपबन्धात् ॥ ३-४-२४ ॥

'आत्मा वा अरे द्रष्टव्यः' .... ... इत्येवमादेः कर्मविध्यर्थत्वम् ; न पारिप्लवार्थत्वम् ॥ २४ ॥ (३७३)

**तथा चैकवाक्योपबन्धात्** । **उपबन्धः** — अन्वयः ॥ २४ ॥

इति पारिप्लवार्थाधिकरणम् —३

---

### ४. अग्नीन्धनाद्यधिकरणम् ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३-४-२५ ॥

स्तुतिप्रसङ्गादवान्तरसङ्गतिविशेषेण .... .... कर्मानपेक्षा तेषु विद्या । केवलस्वाश्रमविहितकर्मापेक्षेत्यर्थः ॥ २५ ॥ (३७४)

**अत एव चाग्नीन्धनाद्यनपेक्षा** । पूर्वयोः प्रासङ्गिकत्वात् प्रथमाधिकरणेन सङ्गतिमाह— **स्तुति** इत्यादिना । स्पष्टम् ॥ २५ ॥

इति अग्नीन्धनाद्यधिकरणम् —४

---

## ५. सर्वापेक्षाधिकरणम् ॥

### सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३-४-२६ ॥

**यदि विद्या यज्ञाद्यनपेक्षैव ... ... स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति ॥ २६ ॥** (२७५-२७६)

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ।** सङ्गतिः स्फुटा । **यज्ञादिश्रुतिरपि** इति । इच्छासाधनत्वमाहेति भावः ॥

राद्धान्ते— [1] **सत्येव** इति । इच्छासाधनत्वे अन्योन्याश्रयत्वादिरभिप्रेतः । न यज्ञापेक्षा, वाक्यादेव तदुत्पत्तेरित्यत्राह— **ज्ञानं च** इति । **आप्रयाणात्** इति । अङ्गिनोऽनुवृत्त्याऽङ्गानुवृत्तिरिति भावः । प्रवृत्तिरूपयज्ञादिः मनोव्याकुलयेत्यत्राह — **एवंरूपं च** इति । अदृष्टद्वारा इति परिहारः ॥ २६ ॥

इति सर्वापेक्षाधिकरणम्—५

---

## ६. शमदमाद्यधिकरणम् ॥

### शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ ३-४-२७ ॥

**गृहस्थस्य शमदमादीन्यपि ... ... अतो गृहस्थस्य शमदमादयोऽप्यनुष्ठेयाः ॥ २७ ॥** (२७७)

**शमदमाद्युपेतः** [2] **स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामप्य-**

---

1. सत्येवेति । प्रवृत्तिरूपयज्ञादिर्मनो व्याकुलयेदित्यत्राह-अ (मध्ये ग्रन्थाभावः) ।

2. स्यात् तथापि । सङ्गतिः-अ.

वश्यानुष्ठेयत्वात् । सङ्गतिः पूर्वपक्षे स्फुटा । लब्धशनादिव्यावृत्त्यर्थं प्रयोजन-शून्येषु इत्युक्तम् । काम्यं च मुमुक्षोः प्रयोजनशून्यम् । अविहितं — विहितादन्यत् ; अविहितानामतिषिद्धं निषिद्धं च ॥ २७ ॥

इति शमदमाद्यधिकरणम् — ६

## ७. सर्वान्नानुमत्यधिकरणम् ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३-४-२८ ॥

वाजिनां छन्दोगानां च प्राणविद्यायां ... .... प्राणविदः सर्वान्नीनत्वं प्राणात्ययापत्तावेवेति निश्चीयते ॥ २८ ॥ (३७८-३७९)

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । शमाद्यनुष्ठानमुक्तम् । शमविशेषरूपभोजननियतिः चिन्त्यते इति सङ्गतिः । प्राणविदोऽपि सर्वान्नानु-मतिरस्ति किमुत ब्रह्मविद इत्याद्याभिप्रायिकम् । न तु सूत्रे कण्ठोक्तम् ॥

राद्धान्ते — मटची — अश्मवृष्टिः । इभ्यम् — हस्तिनम् ॥

## अबाधाच्च ॥ ३-४-२९ ॥

"आहारशुद्धौ सत्त्वशुद्धिः ... ... प्राणविदोऽल्पशक्तेः सर्वान्नानुमतिरापद्विषयैव ॥ २९ ॥ (३७९-३८०)

अबाधाच्च । स्पष्टम् ॥ २९ ॥

## अपि स्मर्यते ॥ ३-४-३० ॥

अपि च आपद्विषयमेव सर्वान्नीनत्वं ... ... लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति ॥ ३० ॥ (३८०)

अपि स्मर्यते। न परं [1] सर्वान्नीनत्वस्य आपद्विषयत्वं [2] प्राणविदः कल्प्यम्; सर्वेषां कण्ठोक्तं चेत्यर्थः ॥ ३० ॥

## शब्दश्चातोऽकामकारे ॥ ३-४-३१ ॥

**यतो ब्रह्मविदामन्येषां च ... ... इति मत्वा ब्राह्मणः सुरां न पिबतीत्यर्थः ॥ ३१ ॥**

**शब्दश्चातोऽकामकारे।** ब्राह्मणशब्दः असङ्कोचात् ब्रह्मविदमप्याहेति भावः ॥ ३१ ॥

इति सर्वान्नानुमत्यधिकरणम्–७

---

## ८. विहितत्वाधिकरणम् ॥

## विहितत्वाच्चाश्रमकर्मापि ॥ ३-४-३२ ॥

**यज्ञादिकर्माङ्गिका ब्रह्मविद्या ... ... जीवननिमित्ततया नित्यवद्विहितत्वादित्यर्थः ॥ ३२ ॥** (३८१-३८२)

**विहितत्वाच्चाश्रमकर्मापि।** [3] परमप्रकृतेनावान्तरसङ्गतिमाह — **यज्ञादि** इति। **नित्यानित्य** इति। [4] यावज्जीवमनुष्ठानं मुमुक्षानुगुणमनुष्ठानं च विरुद्धमित्यर्थः ॥

**आश्रमि** इति पाठे **केवल** शब्दः अमुमुक्षुपरः। **अनुष्ठेयानि** इति। **कर्माणि** इत्यध्याहारः ॥ ३२ ॥

---

1. सर्वान्नत्वस्य आपद्विषयत्वं प्राणविदि–अ.
2. प्राणविदि–अ. 3. परप्रकृतेन–अ.
4. यावज्जीवमनुष्ठानविरुद्धमित्यर्थः–अ

तथा विद्याङ्गतया च, 'तमेतं ... ...

## सहकारित्वेन च ॥ ३-४-३३ ॥

विद्योत्पत्तिद्वारेण विद्यासहकारितया ... ... विनियोगपृथक्त्वेनोभयार्थत्वं न विरुध्यते इत्यर्थः ॥ ३३ ॥ (३८२)

सहकारित्वेन च। विद्योत्पत्ति इति [1]समुच्चयव्युदासः। नित्यानित्यसंयोगविरोध इत्यत्राह— अग्निहोत्र इति। विनियोगः— शेषत्वज्ञापकविधिः ॥ ३३ ॥

तद्वदेव कर्मान्तरत्वमपि नास्तीत्याह —

## सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३-४-३४ ॥

सर्वथा — विद्यार्थत्वे आश्रमार्थत्वेऽपि ... ... विनियोगात् कर्मस्वरूपभेदे प्रमाणाभावाच्च ॥ ३४ ॥ (३८२)

सर्वथाऽपि त एवोभयलिङ्गात्। [2]शब्दैक्येऽपि कुण्डपायिनामयनाग्निहोत्रे भेदो दृश्यते इत्यत्राह— कर्मस्वरूप इति। आवृत्तेरङ्गान्तरस्य च नैरपेक्ष्यं त एव इति निर्णयफलम् ॥ ३४ ॥

## अनभिभवं च दर्शयति ॥ ३-४-३५ ॥

'धर्मेण पापमपनुदति' इत्यादिभिश्च ... ... प्रत्यहं प्रकृष्यमाणा विद्योत्पत्तये। अतस्त एव उभयत्र यज्ञादयः ॥ ३५ ॥ (३८२)

अनभिभवं च दर्शयति। आदिशब्दो यज्ञादिवाक्यपरः।

---

1. समसमुच्चय-अ.

2. शब्दे सत्यपि-क.

अङ्गत्वं तत्कृतकिञ्चित्कारं च वदद्वाक्यम् [1] यज्ञादिशब्देन तत्तुल्यशब्देन वा निर्दिशतीत्यर्थः ॥ ३५ ॥

इति विहितत्वाधिकरणम्—८

## ९. विधुराधिकरणम् ॥

### अन्तरा चापि तु तद्दृष्टेः ॥ ३-४-३६ ॥

चतुर्णामाश्रमिणां ब्रह्मविद्यायाम् ... ... देवताराधनादिभिः विद्यानुग्रहः शक्यते कर्तुम् ॥ ३६ ॥ (३८४)

**अन्तरा चापि तु तद्दृष्टेः** । सङ्गतिमाह— **चतुर्णाम्** इति । **आदि**शब्दात् अकृतदारः । वर्णधर्मैः **अनुग्रहः** इत्यर्थः । **अनैकान्तिकानाम्**— अनियतानाम् ॥ ३६ ॥

### अपि स्मर्यते ॥ ३-४-३७ ॥

अपि च अनाश्रमिणामपि ... ... जपाद्यनुगृहीतया विद्यया सिद्धो भवतीत्यर्थः ॥ ३७ ॥ (३८५)

**अपि स्मर्यते** । **ब्राह्मणः**— तदधीते, तद्वेद इत्यर्थः । कथं जपादिभिरनुग्रहोपगम इत्यत्राह— **जपादि** इति ॥ ३७ ॥

### विशेषानुग्रहश्च ॥ ३-४-३८ ॥

न केवलं न्यायस्मृतिभ्यामयमर्थः ... ... विद्ययाऽऽत्मानमन्विष्येत्' इति ॥ ३८ ॥ (३८५)

1. यज्ञादिशब्देन ... चाहेत्यर्थः । आपदं शिक्षयति— निवृत्तेति—अ. (मध्ये सू. ३९ पर्यन्तं ग्रन्थाभावः) ।

विशेषानुग्रहश्च । स्फुटम् ॥ ३८ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३-४-३९ ॥

तुशब्दोऽवधारणे । अतः -- अनाश्रमित्वात् ··· ··· मृतभार्यस्य चावैराग्ये सति दारालाभ आपत् ॥ ३९ ॥ (३८५)

तर्हि शक्तैरप्याश्रमा उपेक्ष्या इत्यत्राह — **अतस्त्वितरज्ज्यायो लिङ्गाच्च** । **अतुल्यकार्यत्वात्** – शक्तं प्रति इत्यर्थः । **आपदं** शिक्षयति— **निवृत्त** इति । ब्रह्मनिष्ठेष्वनुगतं वैराग्यं कालान्तरादिभोग्यनैरपेक्ष्यं गार्हस्थ्यधर्मलिप्सा चेत्यविरोधः ॥ ३९ ॥

इति विधुराधिकरणम् — ९

---

### १०. तद्भूताधिकरणम् ॥

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः ॥ ३-४-४० ॥

नैष्ठिकवैखानसपरिव्राजकाश्रमेभ्यः ··· ··· जैमिनेरपि – इत्यविगानं दर्शयन्नुक्तं स्वाभिमतं द्रढयति ॥ ४० ॥ (३८६-३८७)

[1]**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात् तद्रूपाभावेभ्यः** । विधुरादेरिव अनाश्रमित्वसाम्यात् प्रच्युतानामपि विद्याधिकारोऽस्ति नेति शङ्कया सङ्गतिः । **वैखानसः**– वानप्रस्थः । **ब्रह्मचारी** इत्यादिश्रुतिः नैष्ठिकविषया ॥ ४० ॥

---

1. तद्भूतस्य तु । विधुरादेरिवानाश्रमित्वसाम्याद्भ्रष्टानामपि विद्याधिकारोऽपि न चेति सङ्गतिः–अ.

अथ स्यात् नैष्ठिकादीनां ... ...

**न चाधिकारिकमपि पतनानुमानात् तद्योगात्** ॥ ३-४-४१ ॥

अधिकारलक्षणोक्तमपि प्रायश्चित्तं ... ... अतोऽधिकारलक्षणोक्तं प्रायश्चित्तमितरब्रह्मचारिविषयम् ॥ ४१ ॥ (३८७-३८८)

अनन्तरस्य शङ्कामाह — **अथ स्यात्** इति । **अधिकारलक्षणम्** षष्ठम् । **अवकीर्णिपशुः** — गर्दभः । उपकुर्वाणब्रह्मचारी भ्रष्टः [1] **अवकीर्णी** । **न चाधिकारिकमपि पतनानुमानात् तद्योगात्** । तर्हि तत्प्रायश्चित्तं किंविषयमित्यत्राह — **अतः** इति ॥ ४१ ॥

**उपपूर्वमपीत्येके भावमशनवत् तदुक्तम्** ॥ ३-४-४२ ॥

नैष्ठिकादीनां ब्रह्मचर्यप्रच्यवनं ... ... प्रायश्चित्तसंभवात् ब्रह्मविद्यायोग्यताऽप्यस्ति ॥ ४२ ॥ (३८८)

**उपपूर्वमपीत्येके भावमशनवत् तदुक्तम्** । उपकुर्वाणस्य ब्रह्मचर्यभ्रंशस्य उपपातकस्य प्रायश्चित्तं नैष्ठिकादिष्वतिदिष्टमिति विद्यायोग्यता इत्यर्थः । स्त्रीसंसर्गादिप्रायश्चित्तादेः [2] गृहस्थादावप्रसङ्गात् स्वाश्रमाविरोधिशब्दः ॥ ४२ ॥

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च** ॥ ३-४-४३ ॥

तुशब्दो मतान्तरव्यावृत्त्यर्थः । ... ... अतस्तेषां नास्ति ब्रह्मविद्यायामधिकारः ॥ ४३ ॥ (३८८)

1. अवकीर्णः-अ.
2. गृहस्थादावप्रसंगार्थम्-अ.

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च ।** **यद्यपि** इति । पतन-तत्प्रायश्चित्तवचनविरोधे सति पतनस्मृतिः पापकर्मणो वैदिककर्मानधिकारा-पादकशक्तिनाशकप्रायश्चित्ताभावविषया । प्रायश्चित्तवचनं प्रत्यवायसजातीय-रुचिजननशक्तिविनाशकविषयमिति व्यवस्था कार्येत्यर्थः । वर्जनफलमाह — **नोपदिशन्ति** इति ॥ ४३ ॥

इति तद्भूताधिकरणम् — १०

---

## ११. स्वाम्यधिकरणम् ॥

### स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३-४-४४ ॥

**कर्माङ्गाश्रयाण्युद्गीथाद्युपासनानि ··· ··· रसतमत्वानुसन्धानं यजमानेनैव कर्तुं शक्यते ॥ ४४ ॥** (३९०-३९१)

**स्वामिनः फलश्रुतेरित्यात्रेयः ।** उपासनानुष्ठातृविभागचिन्तानन्तरम् उद्गीथाद्युपासनस्यापि तच्चिन्तनं क्रियते इति प्रसङ्गात् सङ्गतिः । स्फुटम् ॥

### सिद्धान्तः

**इति प्राप्तेऽभिधीयते —**

### आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ३-४-४५ ॥

**आर्त्विज्यं – ऋत्विजः कर्म ··· ···· 'शास्त्रफलं प्रयोक्तरि' इति न्यायाच्च फलिकर्तृकत्वमेव ॥ ४५ ॥** (३९१)

राद्धान्ते — **आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ।** तच्छब्दार्थः **फलसाधन** इति व्याख्यातः । **प्रयोजनाय** इति चतुर्थ्यर्थं

उक्तः । [1] **परिक्रीयते** इत्यस्यार्थमाह — **कर्मविधिषु** इति । ततः किमित्यत्राह — **तदन्तर्गतानि** इति । अङ्गत्वे सति हि ऋत्विक्कर्तृकत्व-मित्यत्राह— **यद्यपि** इत्यादि । **ऋत्व्यधिकृत** इति । अप्रयप्रायनय उक्तः । ऋत्विक्कर्तृककर्मणो वीर्यवत्तरत्वसाधनविद्यायास्तत्कर्तृकत्वम् [2] अन्तरङ्गनयाच्च स्यात् । तदनुगृहीतं **विद्यया करोति** इति वाक्यस्वारस्यं च । दहरादि-धियां [3] मतथात्वे किं वैषम्यमित्यत्राह— **दहरादिषु** इति ॥ ४५ ॥

इति स्वाम्यधिकरणम्—११

## १२. सहकार्यन्तरविध्यधिकरणम् ॥

# सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् । ३-४-४६ ॥

'**तस्माद्ब्राह्मणः पाण्डित्यं** ··· ··· **पाण्डित्यादिकं मौनतृतीयं विद्यायाः सहकार्यन्तरं विधीयते** ॥ ४६ ॥ (१९२-१९४)

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** । **पूर्वं** यज्ञादिः [4] शमादिश्च सहकारी निरूपितः । तद्वत् [5] सहकार्यन्तरं निरूप्यते इति सङ्गतिः । **मौन**शब्दो हि मननार्थः । अत उक्तम् [6] **ज्ञानार्थत्वात्** इति । **विधीयते** इति । पदार्था उक्ताः । वाक्यार्थमाह — **एतदुक्तम्** इति । ज्ञानार्थत्वात् अनुवाद इत्यत्राह— **मौनं च** इति । **पक्षेण** इति व्याख्येयम् । अनुवादस्य नैरर्थ्यात् पाक्षिकोऽप्यर्थो विधित्वानुगुणः स्वीकार्य इत्यर्थः ॥

1. परिक्रियते अ
2. अन्तरङ्गतया च-क
3. तथात्वे-अ.
4. शमादिभ्यश्च-अ.
5. सहकार्यन्तरं हि अ.
6. ज्ञानार्थत्वात् इति । पदार्था उक्ताः-अ.

पाण्डित्यबाल्यमौनब्राह्मणशब्दार्थः कः? 'तस्मात् ब्राह्मणः', 'अथ ब्राह्मणः' इत्यत्र ब्राह्मणस्य पाण्डित्यादिकं, पाण्डित्यादिकेन च ब्राह्मण्यम इति व्याहतिरित्यत्राह— तदेवम् इति । प्रथमब्राह्मणशब्दो विद्वन्मात्रविषयः । द्वितीयस्तु विद्याकाष्ठाप्राप्तिविषयः । परिपूर्तिः कल्याण-गुणैः । उभयलिङ्गत्वमुक्तं पदाभ्याम । अप्राप्तं वेदनम् इति निर्दोषत्व-कल्याणगुणयोः काष्ठाज्ञानम । तदुपदेशैकलभ्यम् । [1]तत् पाण्डित्यम् । अमौनं पाण्डित्यबाल्ययज्ञादिकम ॥ ४६ ॥

अथ स्यात् — यदि सर्वेष्वाश्रमेषु … …

## कृत्स्नभावात् तु गृहिणोपसंहारः ॥ ३-४-४७ ॥

तुशब्दश्चोद्यं व्यावर्तयति । … … सर्वाश्रमधर्मप्रदर्शनार्थो गृहिणोपसंहार इत्यभिप्रायः ॥ ४७ ॥ (३९४)

अनन्तरमवतारयति— अथ स्यात् इति । कृत्स्नभावात् तु गृहिणोपसंहारः । छान्दोग्ये ब्रह्मविदो गार्हस्थ्येन स्थितिवचनं प्रदर्शनार्थम् । बृहदारण्यकविरोधादित्यर्थः ॥ ४७ ॥

तथा एतस्मिन्नपि वाक्ये … …

## मौनवदितरेषामप्युपदेशात् ॥ ३-४-४८ ॥

सर्वैषणाविनिर्मुक्तस्य भिक्षाचरण … … मौनतृतीयः पाण्डित्यादिः विद्यासहकारित्वेन विधीयते इति ॥ ४८ ॥ (३९४ ३९५)

[2]सङ्गत्यर्थमिममर्थं संक्षिपन् [3]अनन्तरसूत्रमवतारयति— तथा इति ।

---

1. तत्पाण्डित्यमौनम् पाण्डित्यबाल्ययज्ञादिकम् ।-क.
2. सङ्गत्यर्थमर्थं–अ. 3. अनन्तरमवतारयति–अ

मौनवदितरेषामप्युपदेशात् । एवंविध शब्दः [1] ईषणात्यागादिपूर्वकत्व-परः । अधिकरणार्थं निगमयति— अतः इति ॥ ४८ ॥

इति सहकार्यन्तरविध्यधिकरणम्-१२

---

## १३. अनाविष्काराधिकरणम् ॥

### अनाविष्कुर्वन्नन्वयात् ॥ ३-४-४९ ॥

'तस्मात् ब्राह्मणः पाण्डित्यं ... ... 'आहारशुद्धौ सत्त्वशुद्धिः' इत्यादिषु ॥ ४९ ॥ (३९६-३९७)

अनाविष्कुर्वन्नन्वयात् । सङ्गतिः स्फुटा । बाध्यन्ते— अब्रह्म-विद्विषयाणीत्यर्थः ॥

राद्धान्ते—नियमशास्त्रविषयविभागः नियमविरोधीत्यर्थः ॥ ४९ ॥

इति अनाविष्काराधिकरणम्—१३

---

## १४. ऐहिकाधिकरणम् ॥

### ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३-४-५० ॥

द्विविधा विद्या— अभ्युदयफला ... ... उद्गीथविद्यायुक्तस्य कर्मणः फलाप्रतिबन्धश्रवणात् ॥ ५० ॥ (३९८)

ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् । अङ्गचिन्ता कृता । अङ्गि-निष्ठासिद्धिसमयश्चिन्त्यते इति सङ्गतिः । उद्गीथादिविधुरकर्माङ्गकविद्यासिद्धौ

1. एषणा त्याग-अ.

विचारः इह उत्तरसूत्रे च क्रियते। विद्यायाः सुकृतसाध्यत्वे सति ह्ययं विचार इत्यत्राह— यथोक्तम् इति ॥ ५० ॥

इति ऐहिकाधिकरणम्— १४

## १५. मुक्तिफलाधिकरणम् ॥

## एवं मुक्तिफलानियमस्तदवस्थावधृतेः तदवस्थावधृतेः ॥ ३-४-५१ ॥

मुक्तिफलस्याप्युपगमनस्य ··· ··· द्विरुक्तिरध्यायपरिसमाप्तिं द्योतयति ॥ ५१ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेः तदवस्थावधृतेः।** अधिकरणान्तरम्। संगतिः स्फुटा। **तस्य**—पूर्वसूत्रोक्तस्य। **सर्वेभ्यः** इत्यादि। **प्रबलत्वम्** भगवत्प्रीत्यतिशयावहत्वकृतम्। अप्रीत्यतिशयाधायको ब्रह्मविदपचारः प्रतिबन्धकः इति परिहारः ॥ ५१ ॥

इति मुक्तिफलाधिकरणम् —१५

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीवरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचितशारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विरचितायां श्रुतप्रदीपिकायां तृतीयस्याध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

# चतुर्थाध्याये प्रथमः पादः ॥

## १. आवृत्त्यधिकरणम् ॥

### आवृत्तिरसकृदुपदेशात् ॥ ४-१-१ ॥

**तृतीयेऽध्याये साधनैः सह विद्या ··· ··· वेदनादिशब्दैरभिधीयते इति निश्चीयते ॥ १ ॥** (४०१-४८२)

**आवृत्तिरसकृदुपदेशात्** । अध्यायसङ्गतिमाह — **तृतीये** इति । स्वोपयोग्यैः सह विद्या चिन्तिता । अथ फलचिन्तेति सङ्गतिः । विद्याविषये प्रागनिरूपितांशः प्रथमं निरूप्यते साध्यसाधनभावसंबन्धज्ञापनार्थं प्रीतिरूपत्वात् फलरूपताज्ञापनार्थं च । अश्रुताऽप्यावृत्तिः क्वचित् क्रियते इत्यत्राह — **न च** इति ॥

राद्धान्ते — एकैकोपनिषदि प्रयोगो दर्शितः **पर्यायत्वं च** इत्यादिना । बहूपनिषत्सु [1]प्रयोगं दर्शयति — [2]**तथा** इति । अत्र छागपशुनयोऽभिप्रेतः । ततः किमित्यत्राह — **ध्यानं च** इति ॥ १ ॥

### लिङ्गाच्च ॥ ४-१-२ ॥

**लिङ्गं-स्मृतिः । स्मृतेश्चायमर्थो ··· ··· तस्मादसकृदावृत्तमेव वेदनं शास्त्रार्थः ॥ २ ॥** ( ४८२ )

**लिङ्गाच्च** । स्पष्टम् ॥ २ ॥

इति आवृत्त्यधिकरणम्-१

---

1. प्रकरणभेदेन प्रयोग-अ.
2. तथेति । छागपशु-क.

## २. आत्मत्वोपासनाधिकरणम् ॥

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४-१-३ ॥

इदमिदानीं चिन्त्यते-किमुपास्यं ··· ··· अत उपासितुरात्मत्वेन ब्रह्मोपास्यमिति स्थितम् ॥ ३ ॥ (४०४-४०५)

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च।** उक्तोपासनकर्मभूतं ब्रह्म किमप्रुतसिद्धिरूपसंबन्धविरहेण उपास्यम्, उत उपासितृशरीरकत्वेन इति शङ्कया सङ्गतिः। यथा 'पुरुषार्थोऽत' इत्यधिकरणस्य श्रुत्यर्थाक्षेपेणोत्थानं, तथाऽस्याप्यभेदश्रुत्यर्थाक्षेपेणोत्थानम्। अन्यशब्दः शरीरात्मभावरूपसंबन्धरहितवाची। 'नायमस्मदीयः, अपि त्वन्यः' इति संबन्धविशेषरहिते प्रयोगात्। उपासितुरात्मत्वे उपासितारं प्रति शरीरित्वेन उपास्योपासकभावेन जीवेश्वरयोः भृत्यराजतुल्यत्वावगमात्, [1] पृथक्त्वधियो मोक्षोपायत्वाच्च भेदस्तात्त्विक इति उपायपरवाक्यबलात् अभेदश्रुत्याक्षेपोऽभिप्रेतः ॥

**अयथाभूता स्यात्** इति [2] संसारित्वप्राप्तिरित्यर्थः ॥

राद्धान्ते— **आत्मशब्दं** विवृणोति— **उपासिता** इति। **उपगच्छन्ति**— गत्यर्थाः बुद्ध्यर्थाः। उपासते इत्यर्थः। उपासनविधिष्वेवाभेददर्शनात् [3] उपासितृशरीरकत्वेनोपास्यमित्यर्थः। तर्हि भेदोपासनविधिविरोध इत्यभिप्रायतयोक्तम्— **कथमभ्युपगच्छन्ति** इति। **सन्मूलाः** इत्यादिभिरुपेतस्य **य आत्मनि** इत्यस्यार्थमाह— **सर्वस्य** इति। **युक्तमिति उपपादयन्ति** इत्यन्वयः ॥

एकत्वपृथक्त्वश्रुत्योरविरोधमाह— **एवं च** इति। तद्विशदयति— **अहम्** इति। तदुपपादयति— **अधिकस्य** इति। **एषः** इति पदं जीवपरम्,

1. पृथक्त्वविधेः-क. 2. सांसारिकत्व-क.
3. उपासितृशरीरत्वेन-क.

पुल्लिङ्गत्वात्; परस्य च देवताशब्दोक्तत्वात् । विशेषणमात्रमपूर्णम्; विशिष्ट एव पूर्ण इत्यर्थः ॥ ३ ॥

इति आत्मत्वोपासनाधिकरणम्—२

३. प्रतीकाधिकरणम् ॥

**न प्रतीके न हि सः** ॥ ४-१-४ ॥

**'मनो ब्रह्मेत्युपासीत' ... ... प्रतीकस्योपासितुरात्मत्वाभावान्न तथाऽनुसन्धेयम् ॥ ४ ॥** (४०७)

**न प्रतीके न हि सः** । उक्तमात्मतया उपासनम् । प्रतीकेष्वपि तथा कार्यं न वेति सङ्गतिः । **ब्रह्मशब्द**निर्देशात् तदेवोपास्यम् । [1] **मनः**-आदि तु दृष्टिविशेषणमिति [2] पूर्वपक्षः ॥

राद्धान्ते — [3] उपास्यं हि ब्रह्मेत्यत्राह— **प्रतीकोपासनेषु** इति । ब्रह्मशब्दः कथमित्यत्राह— **ब्रह्म तु** इति ॥ ४ ॥

**ननु अत्रापि ब्रह्मैवोपास्यम् ... ...**

**ब्रह्मदृष्टिरुत्कर्षात्** ॥ ४-१-५ ॥

**मनआदिषु ब्रह्मदृष्टिरेव युक्ता ... ... भृत्ये तु राजदृष्टिरभ्युदयाय ॥ ५ ॥** (४०७)

अनन्तरस्यावतारायाह — **ननु** इति । **ब्रह्मदृष्टिरुत्कर्षात्** । न मनआद्यचिन्मात्रमुपास्यं, किं तु अभिमानिदेवतेति न विरोधः ॥ ५ ॥

इति प्रतीकाधिकरणम्–३

1. मनआदिदृष्टि–**क** 2. पूर्वः–**अ**.
3. उपास्यं ब्रह्म–**क**

## ४. आदित्यादिमत्यधिकरणम् ।

## आदित्यादिमतयश्चांग उपपत्तेः ॥ ४-१-६ ॥

'य एवासौ तपति तमुद्गीथम् ... ... कर्मणामपि फलसाधनत्वम्; अतः तद्दृष्टिरुद्गीथाद्यङ्गे ॥ ६ ॥ (४०८–४०९)

**आदित्यादिमतयश्चाङ्ग उपपत्तेः ।** इहापि दृष्टिविशेषचिन्ता इति सङ्गतिः । उद्गीथस्य ब्रह्मवत् चारम्यं च [1] पूर्वपक्षयुक्तिरार्थम् । **अफलेभ्यः**— अफलसाधनेभ्यः ॥

राद्धान्ते — मन आदौ ब्रह्मणो दृष्टिविशेषणत्वम् इतिकरणात्, न तु चारम्यात् । इह तु उपासिशब्देन अव्यवहितमुद्गीथपदं प्रथमाकांक्षितोपास्यपरम् । व्यवहितं तु आदित्यादिपदम् पाश्चात्यविशेषणाकांक्षा[2] पूरकम् ॥

इति आदित्यादिमत्यधिकरणम् — ४

---

## ५. आसीनाधिकरणम् ॥

## आसीनः संभवात् ॥ ४-१-७ ॥

**मोक्षसाधनतया वेदान्तशास्त्रैः ... .. प्रयत्ननिवृत्तये सापाश्रये आसीनः कुर्यात् ॥ ७ ॥** (४०९-४१०)

**आसीनः संभवात् ।** [3] अनन्तरयोः प्रासङ्गिकत्वात् ततः पूर्वेण सङ्गतिमाह — **मोक्ष** इति । आसिकावचनं मनोनुकूलताभिप्रायमिति [4] पूर्वपक्षः । तदवश्यंभावात् तत्परिहारः ॥ ७ ॥

---

1. आर्थः—अ. 2. पूर्वकम्—अ.
3. अनन्तरसूत्रयोः-अ. 4 पूर्वः—अ.

## ध्यानाच्च ॥ ४-१-८ ॥

'निदिध्यासितव्यः' इति ध्यान ... ... विजातीयप्रत्ययान्तराव्यवहितमेकचिन्तनमित्युक्तम् ॥ ८ ॥ (४१०)

ध्यानाच्च। ध्यानशब्दो भावप्रधानः ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ४-१-९ ॥

निश्चलत्वं चापेक्ष्य पृथिव्यन्तरिक्ष ... ... निश्चलत्वमुपासकस्य आसीनस्यैव संभवेत् ॥ ९ ॥ (४१०)

अचलत्वं चापेक्ष्य। आपः— तटाकादिजलम्। ऐकाग्र्यकार्यनिश्चलतया साम्यम् ॥ ९ ॥

## स्मरन्ति च ॥ ४-१-१० ॥

स्मरन्ति चासीनस्यैव ध्यानं ... ... उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इति ॥ १० ॥ (४१०)

स्मरन्ति च। [1]स्पष्टम् ॥ १० ॥

## यत्रैकाग्रता तत्राविशेषात् ॥ ४-१-११ ॥

एकाग्रतातिरिक्तदेशकाल ... ... 'मनोऽनुकूले' इति वाक्यशेषात् ॥ ११ ॥ (४१०-४११)

यत्रैकाग्रता तत्राविशेषात्। कालः इति। तिथ्यादिनियमो नेत्यर्थः ॥ ११ ॥

इति आसीनाधिकरणम्—५

---

1. स्फुटम्-अ.

## ६. आप्रयाणाधिकरणम् ॥

### आप्रयाणात् तत्रापि हि दृष्टम् ॥ ४-१-१२ ॥

तदिदमपवर्गसाधनमुक्तलक्षणम् ... ... यावदायुषं ब्रह्मलोकमभिसंपद्यते' इति ॥ १२ ॥ (४१२)

**आप्रयाणात् तत्रापि हि दृष्टम्** । सङ्गत्यादि स्फुटम् ॥ १२ ॥

इति आप्रयाणाधिकरणम्—६

---

## ७. तदधिगमाधिकरणम् ॥

### तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४-१-१३ ॥

एवं विद्यास्वरूपं विशोध्य ... ... विद्यायाः दुश्चरितविरतिनिष्पाद्यत्वावगमात् ॥ १३ ॥ (४१३-४१५)

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** । **विद्याप्राप्तौ** इति । 'उपासनप्रारम्भ' इत्यनुक्तिः अतद्रूपविद्यानिष्पत्तेरपि सौत्रत्वाभिप्रायनिबन्धना । **अश्लेषविनाशयोः** [1] **उत्तरपूर्वाघ**विषयत्वं योग्यताधीनम् । [2] न हि संश्लिष्टस्य अश्लेषो युक्तः । अतस्तस्य नाश एव । उत्तरस्याश्लेषः । अननुभवेऽपि नाशो दृष्ट इत्यत्राह— **न च** इति ॥

राद्धान्ते— विषयभेदादविरोधं निदर्शयति — **यथा** इति । **अश्लेषविनाशौ** विवृणोति— **अघस्य** इति । उक्तस्योपपन्नत्वमाह— **तदेवम्**

---

1. उत्तरपूर्वविषयत्वम्—अ
2. न हि श्लिष्टस्य—अ.

इति । स्वर्गादिस्वरूपेण साध्यमिति न तद्धेतुकर्मणः [1] पापनिवर्तकत्वम् । अत्र तु प्रतिबन्धनिवृत्तिरेव साध्येति विद्या प्रायश्चित्ततुल्या । प्रारब्धोपासनस्य [2] तत्प्राप्तौ 'सर्वमहं क्षमिष्यामि' इति सङ्कल्पः । अतो न सांपरायाधिकरणविरोधः । 'क्षान्तम्' इति हि तदा सङ्कल्पः ॥ १३ ॥

इति तदधिगमाधिकरणम्—७

## ८. इतराधिकरणम्

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४-१-१४ ॥

**उत्तरपूर्वाघयोर्विद्यया अश्लेषविनाशौ .. ... विद्यानुगुणदृष्टफलानि सुकृतानि नश्यन्तीत्यर्थः ॥ १४ ॥** (४१५-४१६)

**इतरस्याप्येवमसंश्लेषः पाते तु** । सङ्गत्यादि स्पष्टम् । अधिकशङ्कामाह— **सुकृतस्य** इति । सौत्रखण्डान्तरमवतारयति— **ननु** इति । **नश्यन्ति** इति । प्रतिबन्धफलानि चेत् **नश्यन्ति** इत्यर्थः ॥ १४ ॥

इति इतराधिकरणम्—८

## ९. अनारब्धकार्याधिकरणम् ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४-१-१५ ॥

**ब्रह्मविद्योत्पत्तेः पूर्वोत्तरभाविनोः ... ... शरीरस्थितिहेतुभूतसंस्कारसद्भावे प्रमाणमस्ति ॥ १५ ॥** (४१६-४१७)

**अनारब्धकार्ये एव तु पूर्वे तदवधेः** । सङ्गतिमाह— **ब्रह्म** इति । **ततः**— ब्रह्मविद्योत्पत्तेः ॥

1. पापापहता—अ. 2. तत्प्राप्तौ—क.

राद्धान्ते — संस्कारवशात् देहस्थितिं प्रतिवक्ति — न च इति ॥ १५॥

इति अनारब्धकार्याधिकरणम् — ९

## १०. अग्निहोत्राद्यधिकरणम् ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** ॥ ४-१-१६ ॥

**'इतरस्याप्येवमसंश्लेषः' इति ... ... दूषितान्तःकरणस्य विद्योत्पत्तिरेव न स्यात् ॥ १६ ॥** (४१८)

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्** । सङ्गतिमाह— **इतरस्य** इति । पूर्वत्र ऊर्ध्वरेतस्स्वदर्शनात् नित्यानित्यसंयोगविरोधात्, इह सुकृतफलाश्लेषाच्च अननुष्ठेयत्वं परिहृतमिति न पुनरुक्तिः ॥

राद्धान्ते — तर्हि सकृदनुष्ठेयमित्यत्राह— **विद्यायाश्च** इति ॥ १६ ॥

**यदि अग्निहोत्रादिसाधुकृत्या ... ...**

**अतोऽन्यापि ह्येकेषामुभयोः** ॥ ४-१-१७ ॥

**अतः– अग्निहोत्रादिसाधुकृत्यायाः ... ... विद्यया अश्लेषविनाशश्रुतिश्च तद्विषया ॥ १७ ॥** (४१८-४१९)

अनन्तरस्य शङ्कामाह— [1]**यद्यग्निहोत्रादि** इति । 'द्विषन्तः' इत्यादेर्विषयो मृग्यः । उत्तरावस्थाभुक्तत्वात् अनारब्धफलत्वाच्च विषयत्वोपपत्तेः । अतः **सुहृदः** [2] इत्युपात्तम् ॥

**अतोऽन्यापि ह्येकेषामुभयोः** । प्राक्कृतं वृष्ट्यन्नादिहेतोः पश्चात्कृतं च प्रतिबद्धफलं पुण्यं विषय इत्यर्थः ॥ १७ ॥

---

1. अग्निहोत्रादीदि-अ 2. इत्याद्युपात्तम्-अ.

अनुष्ठितस्यापि कर्मणः फलप्रतिबन्ध ....

**यदेव विद्ययेति हि** ॥ ४-१-१८ ॥

'यदेव विद्यया करोति तदेव .... .... 'सुहृदः साधुकृत्याम्' इति शाट्यायनकम् ॥ १८ ॥ (४१९)

अनन्तरसूत्रसङ्गतिमाह— अनुष्ठितस्यापि इति । पूर्वोक्तम् — 'पृथग्घयप्रतिबन्धः फलम्' इत्युक्तम् ॥

यदेव [1] विद्ययेति हि । स्फुटम् ॥ १८ ॥

इति अग्निहोत्राद्यधिकरणम्—१०

---

११. इतरक्षपणाधिकरणम् ॥

**भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते** ॥ ४-१-१९ ॥

ययोः पुण्यपापयोः अश्लेषविनाशावुक्तौ ... ... सुहृदो गृह्णन्ति, पापं च द्विषन्त इति निरवद्यम् ॥ १९ ॥

इति इतरक्षपणाधिकरणम्—११

---

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य प्रथमः पादः ॥

भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते । सङ्गतिः स्फुटा । राद्धान्ते— पूर्वपक्षबीजं परिहरति— तस्य तावत् इति । अत्र देहतदवधी न श्रुतौ । 'धूत्वा' इत्यत्र देहः श्रुतः, न त्ववधिः । एकवचनं

1. विद्ययैव हि-अ.

ज्ञात्यभिप्रायम् यथा 'विधूय पापम्' इत्यभिप्रेत्य अविधिनियमाश्रवणात् इत्युक्तम् ॥

[1] पूर्वाधिकरणेषूक्तमर्थं सुग्रहत्वाय संक्षिपति— तदेवम् इति ॥ १९ ॥

इति इतरक्षपणाधिकरणम्—११

---

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-
नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-
शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां
श्रुतप्रदीपिकायां चतुर्थस्याध्यायस्य प्रथमः पादः ॥



1. पूर्वाधिकः चिन्त्यते इति पादसङ्गतिः—अ. (मध्ये ग्रन्थाभावः)।

# चतुर्थाध्याये द्वितीयः पादः

## १ वागधिकरणम् ।

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४-२-१ ॥

इदानीं विदुषो गतिप्रकारं चिन्तयितुम् ... ... मनसा वाक् संयुज्यते, न तु तत्र लीयते, इति परिहर्तव्यम् ॥ १ ॥
(४२३-४२४)

वाङ्मनसि दर्शनाच्छब्दाच्च । देहस्थितौ विद्याफलमुक्तम् । अथ गत्युपक्रमरूपोत्क्रान्तिश्चिन्त्यते इति [1] पादसङ्गतिः । कथञ्चित्— वाक्प्रवृत्तिहेतुस्वरूपावस्थालक्षणयेति भावः ॥

राद्धान्ते— दृश्यते हि इति । प्रवृत्तस्वकार्ये दारुणि निवृत्तस्वकार्यस्याग्नेरिव वाचो मनस्यन्तर्भाव इति भावः । यदुक्तम् इति । वाक्संपत्तिशब्दयोर्द्वयोरप्यमुख्यत्वात् [2] परमसंपत्तिशब्दास्वारस्यमित्यर्थः । न च तत्राप्यत्यन्तास्वारस्यम् । दर्शनशब्दौ [3] समुच्चित्यहेतू ॥ १ ॥

### अत एव सर्वाण्यनु ॥ ४-२-२ ॥

यतो वाचो मनसा संयोगमात्रं ... .... अपुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' इति ॥ २ ॥ (४२४)

अत एव सर्वाण्यनु । अनु— पश्चात् ॥ २ ॥

इति वागधिकरणम्— १

1. पादसङ्गतिः । वाङ्मनसि । कथंचित्—अ.
2. परं संपत्तिशब्दस्वारस्यमान्द्यम्—अ.
3. समुच्चयहेतू—क

## २. मनोऽधिकरणम् ।

### तन्मनः प्राण उत्तरात् ॥ ४-२-३ ॥

तत्–सर्वेन्द्रियसंयुक्तं, मनः ... ... प्राणशब्देनापां लक्षणा च स्यात्–इति ॥ ३ ॥ (४२५)

तन्मनः प्राण उत्तरात् । परंपरया— स्वकारणपृथिवीद्वारा इत्यर्थः ॥ ३ ॥

इति मनोऽधिकरणम्—२

---

## ३. अध्यक्षाधिकरणम् ॥

### सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४-२-४ ॥

यथा 'वाङ्मनसि संपद्यते .... ... 'यमुना सागरं गच्छति' इति वचो न विरुध्यते, तद्वत् ॥ ४ ॥ (४२६-४२७)

सोऽध्यक्षे तदुपगमादिभ्यः । सङ्गतिः स्फुटा । आदि शब्दः उत्क्रान्तिप्रतिष्ठापरः । अर्थान्तरेण संयुज्य अर्थान्तरगमनेऽपि अन्यतरवाचि-शब्देन निर्देशे दृष्टान्तमाह— यथा इति ॥ ४ ॥

इति अध्यक्षाधिकरणम्—३

---

## ४. भूताधिकरणम् ॥

### भूतेषु तच्छ्रुतेः ॥ ४-२-५ ॥

'प्राणस्तेजसि' इति जीवसंयुक्तस्य ... .... जीवस्य सञ्चरतः सर्वभूतमयत्वश्रुतेः ॥ ५ ॥ (४२७-४२८)

भूतेषु तच्छ्रुतेः । स्पष्टा सङ्गतिः ॥ ५ ॥

**ननु तेजःप्रभृतिषु एकैकस्मिन् … …**

## नैकस्मिन् दर्शयतो हि ॥ ४-२-६ ॥

**नैकस्मिन्, एकैकस्य … … तेजोऽभिधीयते । अतो भूतेष्वेव संपत्तिः ॥ ६ ॥** (४२८)

अनन्तरमवतारयति— **ननु** इति । **नैकस्मिन् दर्शयतो हि ।** 'तिस्रो देवता अनुप्रविश्य तासां त्रिवृतं त्रिवृतमेकैकाम्' इति सृष्ट्यर्थमनुप्रवेष्टव्यतत्त्वेषु एकैकस्य त्रिवृत्करणोपदेशात् प्रत्येकं त्रिवृत्कृतभूतत्रयस्य कार्यकरत्वं प्रतीयते इति, अत्रिवृत्कृतेष्वेकेन देहारंभायोगात् भूतसूक्ष्मसंहतिः स्वीकार्या इति भावः ॥ ६ ॥

इति भूताधिकरणम्—४

---

### ५. आसृत्युपक्रमाधिकरणम् ॥

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४-२-७ ॥

**इयमुत्क्रान्तिः किं विद्वदविदुषोः … … यो ब्रह्मानुभवः तद्विषयमित्यभिप्रायः ॥ ७ ॥** (४२९-४३०)

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ।** [1] भाव्यधिकरणार्थद्वयस्य विद्वदविदुषोः समानत्वे सत्यपि, अस्याधिकरणस्य तदूर्ध्वभावित्वाभावः तदर्थस्य विद्वत्त्वविगीतत्वात् । अतो विगीतांशस्य समानत्वमुपपाद्यते इति सङ्गतिः ॥

---

1. भाव्यधिकरणद्वयस्य च विद्वदविदुषोः समानत्वेऽपि-अ.

राद्धान्ते— उत्क्रान्तौ सत्यां हि समानत्वमित्यत्राह— विदुषोऽपि हि इति । अथ समानत्वमुपपादयति — सा च इति ॥ ७ ॥

## तदापीतेः संसारव्यपदेशात् ॥ ४-२-८ ॥

अवश्यं च तत्-अमृतत्वम् ... ... अकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि ' इति च ॥ ८ ॥ (४३०)

तदापीतेः संसारव्यपदेशात् । चरमदेहावधि विलम्बश्रुत्या जीवन्मुक्त्ययोग उक्तः ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४-२-९ ॥

इतश्च विदुषोऽपि बन्धः ... ... सूक्ष्मशरीरमनुवर्तते । अतश्च बन्धो न दग्धः ॥ ९ ॥ (४३०)

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः । इह सूक्ष्म देहस्थित्या तदयोग उक्तः ॥ ९ ॥

## नोपमर्देनातः ॥ ४-२-१० ॥

अतः ' यदा सर्वे प्रमुच्यन्ते ··· ··· वचनं न बन्धोपमर्देनामृतत्वं वदति ॥ १० ॥ (४३१)

नोपमर्देनातः । अत्र उपासनध्रुवानुस्मृतित्व[1] दर्शनरूपत्वप्रीतिरूपत्वाप्रयाणानुवृत्तिसुदुष्कर्म धूननानाडीविशेषनिष्क्रमणमार्गविशेष सूक्ष्मदेहस्थित्यादिविषयबहुश्रुतिभिः तदयोगोऽभिप्रेतः । प्रधानयुक्त्यनन्तरं पूर्वसूत्रेण निगमनं कृतम् । [2] तथाऽभ्युच्चययुक्तिरुच्यते ॥ १० ॥

---

1. दर्शनरूपत्वाप्रयाणानुवृत्तत्वाप्रयाणानुवृत्तसुकृतदुष्कृतकर्मधूननानाडीप्रवेशनिष्क्रमण–क.

2. अथाभ्युच्चय-क.

**अस्यैव चोपपत्तेरूष्मा ॥ ४-२-११ ॥**

**अस्य — सूक्ष्मशरीरस्य क्वचित् ... ... आमृत्युपक्रमात् समानोत्क्रान्तिरिति सुष्ठूक्तम् ॥ ११ ॥** (४३९)

**अस्यैव चोपपत्तेरूष्मा।** 'सन्तापयति' इत्याद्युक्तस्य ऊष्मणः सार्वत्रिकत्वात्, इह क्वाचित्कोष्मोपलम्भः सूक्ष्मदेहस्य क्वाचित्कस्योत्क्रान्ति-मत्त्वादित्यर्थः। परमप्रकृतं निगमयति— **तस्मात्** इति ॥ ११ ॥

**पुनरपि विदुष उत्क्रान्तिः न ... ...**

**प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम् ॥ ४-२-१२ ॥**

**यदुक्तं—विदुषोऽप्युत्क्रान्तिः ...... भूतसूक्ष्मवज्जीवं परिष्वज्य गच्छन्ति—इति प्रतिपादयतीति निरवद्यम् ॥ १२ ॥** (४३१-४३३)

**प्रतिषेधादिति चेन्न शारीरात् स्पष्टो ह्येकेषाम्। तेजोमात्राः—** भूतसूक्ष्मांशान्। **हृदयम् —** [1] हृदयादपक्रामतीत्यर्थः। **अकामयमानादि** पदत्रयम् एषणात्रयराहित्यपरम् ॥

राद्धान्ते— [2] **तस्य** इत्यादि। षष्ठ्यन्ततच्छब्दनिर्दिष्टः शारीरोऽस्तु, तत्संबन्धिनां प्राणानामुत्क्रान्त्यपादानं शरीरमेवेत्यर्थः। षष्ठ्याः करणतद्वत्ता-लक्षणसंबन्धपरत्वमभ्युपगम्य परिहरति— **न** इति। अप्रस्तुतधर्मिणोऽपा-दानत्वस्य च क्लृप्तेः वरं [3] प्रस्तुतस्यैवापादानताक्लृप्तिरित्यर्थः। षष्ठ्या एवापादानतापरत्वं वैयर्थ्यशक्तिभ्यामुपपादयति— **किं च** इति। प्रसक्तस्या-

1. हृदयादपक्रान्तम्-अ.
2. तस्येतीत्यादिना षष्ठ्याः करण-अ.
3. प्रस्तुतापादान-क.

निष्टत्वे सति हि [1] निषेध्यत्वमित्यत्राह— ततश्च इति । ग्रहः— रज्जुः । मृत्युम्— [2] अग्निमपजयतीत्यर्थः । तर्हि कथं प्राणानुत्क्रान्तिरित्यत्राह — अविदुषस्तु इति ॥ १२ ॥

## स्मर्यते च ॥ ४-२-१३ ॥

स्मर्यते च विदुषोऽपि मूर्धन्यनाड्या ··· ··· ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्' इति ॥ १३ ॥ (४३३)

स्मर्यते च । [3] स्पष्टम् ॥ १३ ॥

इति आसृत्युपक्रमाधिकरणम्—५

---

## ६. परसंपत्त्यधिकरणम् ॥

## तानि परे तथा ह्याह ॥ ४-२-१४ ॥

सकरणग्रामः सप्राणः करणाध्यक्षः ··· ··· परमात्मसंपत्त्या सुखदुःखोपभोगायासविश्रमः, तद्वदिहापि ॥ १४ ॥ (४३६)

तानि परे तथा ह्याह । सैषा इति । इयत्यंशे विमतिरिति सा परिहृतेत्यर्थः इति सङ्गतिरुक्ता । अन्यत् [4] स्पष्टम ॥ १४ ॥

इति परसंपत्त्यधिकरणम्—६

---

1. निषेद्धव्यम्–क.
2. अग्निं जयति–क.
3. स्फुटम्–क.
4. स्फुटं–क.

## ७. अविभागाधिकरणम् ॥

## अविभागो वचनात् ॥ ४-२-१५ ॥

सेयं परमात्मनि संपत्तिः ··· ··· पुनस्तत्राव्यक्तादिसृष्टयवचनाच्च ॥ १५ ॥ (४३७)

अविभागो वचनात् । सङ्गतिः [1] स्पष्टा । तेजःशब्दस्य जीवमात्रपरत्वे लक्षणा, संपत्तिशब्दार्थवैरूप्यं च । अतः सुषुप्ताविव न विशेष्यांशस्य लयः । नापि विशिष्टस्य, सूक्ष्मदेहशैथिल्येन विशेषणभूतभूतसूक्ष्माणां तत्समष्टौ लयायोगात्, तत एव तमसि लयायोगात् । सूक्ष्मदेहारंभाय पुनः अव्यक्तादिसृष्टयवचनात्, तदनारंभे गत्यनुपपत्तेश्च संपत्तिः संसर्गमात्रमित्यर्थः । अव्यक्तादिसृष्टयवचनाच्च इति कल्पकाभावश्चोक्तः ॥

इति अविभागाधिकरणम् —७

---

## ८. तदोकोधिकरणम् ॥

## तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४-२-१६ ॥

एवं गत्युपक्रमावधि विद्वदविदुषोः ... ... विद्वान् तां नाडीं विजानातीति तथा विदुषो गतिरुपपद्यते ॥ १६ ॥ (४३८-४३९)

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥

सङ्गतिमाह— **एवम्** इति । स्पष्टम् ॥ १६ ॥

इति तदोकोऽधिकरणम् —८

---

1. स्फुटा-क.

## ९. रश्म्यनुसाराधिकरणम् ॥

## रश्म्यनुसारी ॥ ४-२-१७ ॥

विदुषो हृदयाच्छताधिकया .... .... विदुषां रश्म्यनुसारेणैव ब्रह्मप्राप्तिरस्त्येव ॥ १७ ॥ (४४०-४४१)

रश्म्यनुसारी । स्फुटं [1]सङ्गत्यादिकम् ॥ १७ ॥

इति रश्म्यनुसाराधिकरणम् —९

---

## १०. निशाधिकरणम् ॥

## निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ ४-२-१८ ॥

इदमिदानीं चिन्त्यते — विदुषो ... ... 'दिवा च शुक्लपक्षश्च' इत्यादिवचनमविद्वद्विषयम् ॥ १८ ॥ (४४१-४४२)

निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वात् दर्शयति च । सङ्गतिर्गता । राद्धान्ते — अनेकदेहभोग्यस्य प्रारब्धस्य कथं यावद्देहभावित्वम्? तथाऽपि अयुक्तं कर्मान्तरं संभवति । कथं निन्दोक्तिः परिहृता स्यात्? तस्याश्चावैयर्थ्यं कथमित्यत्राह — एतदुक्तम् इति ॥ १८ ॥

इति निशाधिकरणम्—१०

---

1. गत्यादिकम्—अ.

## ११. दक्षिणायनाधिकरणम् ॥

## अतश्चायनेऽपि दक्षिणे ॥ ४-२-१९ ॥

**निशि मृतस्यापि विदुषो ब्रह्मप्राप्तौ .... ... धर्मप्रवर्तनाय उत्तरायणप्राशस्त्यप्रदर्शनार्थः तथाविधाचारः ॥ १९ ॥**

**अतश्चायनेऽपि दक्षिणे** । सङ्गत्यादि [1] स्पष्टम् । निशि दक्षिणायने च मृतस्य देहस्य चरमत्वं न स्यात् । तथा सति हि बन्धककर्माभाव इति चेन्न – [2] दक्षिणायने मृतस्यापि वाक्यशेषे 'ब्रह्मणो महिमानमाप्नोति' इति ब्रह्मप्राप्तिश्रवणादिति भावः ॥

न च 'अथ यो दक्षिणे' इत्यधिकार्यन्तरविषयम्, [3] अप्रस्तुतत्वात्; 'महिमानावभिजयति' [4] इत्यैक्यप्रतीतेश्च । न च 'महिमानौ विद्वान्' इत्यन्वयः; विद्वच्छब्दस्य 'तस्यैवं विदुषः' इति [5] प्रकृताधिकारिपरत्वात् जयतेः सकर्मकत्वस्य स्वतः प्राप्तत्वात् 'लोकमभिजयति' इत्यादिश्रौतप्रयोगाच्च ॥ १९ ॥

**ननु च विदुषो मुमूर्षून् प्रति ... ...**

## योगिनः प्रति स्मर्येते स्मार्ते चैते ॥ ४-२-२० ॥

**नात्र मुमूर्षून् प्रति ... ... विद्यानिष्ठान् प्रति विधीयते, न मुमूर्षून् प्रति मरणकालविशेषः ॥ २० ॥**

इति दक्षिणायनाधिकरणम् – ११

---

1. स्फुटम्–क.
2. दक्षिणायनमृतस्यापि–अ.
3. अप्रस्तावात्–अ.
4. इत्येकत्वप्रतीतेश्च ।
5. प्रकृताधिकारिविषयत्वात्–क.

इति श्रीभगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये
चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

अनन्तरसूत्रमवतारयति — ननु च इति । योगिनः प्रति स्मर्येते स्मार्ते चैते । स्मार्तपदार्थमाह — स्मृति इति । स्मर्तव्यतयेत्यर्थः । स्मर्तुम् इति तत् स्फुटीकृतम् । [1] उपक्रमाख्यावयवात् महावाक्यस्वारस्यप्राबल्यमभिप्रयता अन्ते मध्ये च मार्गपरत्वं दर्शितम् ॥ २० ॥

इति दक्षिणायनाधिकरणम् — ११

इति श्रीहरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-
नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-
शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विरचितायां
श्रुतप्रदीपिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥



1. उपक्रमात्-क

## चतुर्थाध्याये तृतीयः पादः ॥

### १. अर्चिराद्यधिकरणम् ॥

### अर्चिरादिना तत्प्रथितेः ॥ ४-३-१ ॥

विदुष उत्क्रान्तस्य नाडीविशेषेण ... ... अन्यत्रापि सर्वत्राग्न्यादित्यादयः प्रत्यभिज्ञायन्ते ॥ १ ॥ (४४७-४४९)

अर्चिरादिना तत्प्रथितेः। पादसङ्गतिमाह — **विदुषः** इति। ब्रह्मवित्संबन्धज्ञापनाय **यथा** इत्याद्युपात्तम्। **शब्यम्** — — शवार्हम्। **अनेकरूपत्वात्** — क्रमभेदात् क्रमिभेदाच्चेति भावः ॥

राद्धान्ते — **अल्पान्तरम्** — संवत्सरस्थाने **देवलोक**श्रुतेरिति भावः। '**य एवमेतद्विदुः, ये चेमे अरण्ये श्रद्धां सत्यमुपासते** इति श्रुतिर्मार्गैक्ये प्रमाणम्। **प्रत्यभिज्ञानम्** अनुग्राहकम् ॥

नेयं श्रुतिरनुपदिष्टमार्गविशेषोपासनविषया। मार्गभेदे सङ्कोचः, सङ्कोचान्मार्गभेदः इत्यन्योन्याश्रयणात्। ऐक्यं तु [1]प्रत्यभिज्ञासिद्धम्। 'अथैतयोः पथोः' इति [2]देवयानपितृयानमार्गद्वित्वश्रुतिस्वारस्याच्च मार्गैकत्वं सिद्धम्। एषां भाष्येऽनुक्तिः भाष्यान्तरोक्तत्वात्। सर्वपरविद्यासु ब्रह्मतत्प्राप्ति-[3]रूपफले प्रत्यभिज्ञातेऽपि गुणानन्त्यादुपसंहाराशक्तेः विद्यैक्यानुपगमः; मार्गे तु [4]द्वादशपदार्थानतिरेकेण चिन्तायोग्यत्वात् [5]प्रत्यभिज्ञया ऐक्योपगमो युक्तः ॥

इति अर्चिराद्यधिकरणम्—१

---

1. प्रत्यभिज्ञानसिद्धम्–अ. 2. देवयानपितृयाण–अ.
3. रूपफलप्रत्यभिज्ञानेऽपि–अ.
4. द्वादशपदार्थानतिरेकेण–अ.
5. प्रत्यभिज्ञानैक्येनोपगमो–अ.

२. वाय्वधिकरणम् ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४-३-२ ॥

अर्चिरादिनैव गच्छन्ति विद्वांसः ... ... 'योऽयं पवत एष देवानां गृहाः' इति ॥ २ ॥ (४५०-४५१)

**वायुमब्दादविशेषविशेषाभ्याम्** । सङ्गतिः स्फुटा । संशयं वक्तुं स्थलं शोधयति — **तत्र** इत्यादिना । मासानन्तरं संवत्सरदेवलोकयोः क्रमं निश्चित्य देवलोकशब्दयोः संशयः । **विशेषाभावाच्च** इति । अब्ददेवलोकयोः पञ्चम्युक्तक्रमसाम्येऽपि, अब्दस्य मासानन्तरत्वे न्यूनकालानन्तरमधिककाल-निवेशरूपो विशेषः प्रागुक्तः । इह तु न तथेत्यर्थः ॥

राद्धान्ते — [1]**देवलोकशब्दः** सामान्यशब्दः । लोकपरत्वव्या-वृत्त्यर्थमाह — **वायुश्चासौ** इति ॥ २ ॥

इति वाय्वधिकरणम् — २

---

३. वरुणाधिकरणम् ॥

## तटितोऽधि वरुणः संबन्धात् ॥ ४-३-३ ॥

कौषीतकिनां, 'स एतं देवयानं ... ... वरुणादुपरीन्द्रादि-र्निवेशयितव्य इति ॥ ३ ॥ (४५२-४५३)

**तटितोऽधि वरुणः संबन्धात्** । निरूपितनिरूपणीयांश[2]ज्ञापनार्थं पूर्वोक्तक्रमेषु कौषीतकिवाक्याविगानम्, विगीतांशे तस्य दौर्बल्यं चाह — **कौषीतकिनाम्** इत्यादिना । **उपदेशावैयर्थ्याय** इति । क्रमिबाधात्

1. देवलोकः सामान्य -ख. 2. ज्ञानार्थम्--क.

क्रमबाधो न्याय्य इति भावः। **इन्द्रप्रजापती अपि** इति। क्रमद्वयभङ्गात् एकक्रमभङ्गो वरमिति भावः॥

राद्धान्ते—सलिलादधो विद्युत्, तस्याः स्फुटदृश्यत्वात्। तयोरिव तदभिमानिदेवतयोः [1] संबन्ध इत्यर्थः। मेघोदरे तटिदन्वयोऽस्तु; कथं तेन पाठक्रमं बाधित्वा [2] तटिदुपरि वरुणनिवेशः? [3]कथं वा इन्द्रप्रजापत्योस्तत्रा-वकाश इत्यत्राह—**एतदुक्तम्** इति। अर्थक्रमस्य पाठक्रमाद्बलीयस्तया तटिदुपरि वरुणः। कौषीतकिपाठानुरोधात् आगन्तूनामन्ते [4] निवेशनयात् तदुपरि इन्द्रप्रजापती इत्यर्थः॥ ३॥

इति वरुणाधिकरणम्—३

## ४. आतिवाहिकाधिकरणम्॥

## आतिवाहिकास्तल्लिङ्गात्॥ ४-३-४॥

**इदमिदानीं चिन्त्यते—किमर्चिरादयः ... ... अर्चिराद्यात्म-भूतान् अभिमानिदेवताविशेषान्। 'तं पृथिव्यब्रवीत्' इतिवत्॥ ४॥**
(४५४-४५५)

**आतिवाहिकास्तल्लिङ्गात्**। [5] भोगभूमेरप्यवाचकाः इत्यत्राह—**एते एव** इति। लोका अहरादिसंज्ञा इति पूर्वपक्षिणो हृदयम्। विपरीतं कस्मान्नेत्यत्राह— **अत एव** इति। [6] **विजिहीते** इत्यपि लोकलिङ्गमिति भावः॥

---

1. इति संबन्धः-अ.
2. तदुपरि-अ.
3. कथं च इन्द्र-अ.
4. निवेशयितव्याच्च-क.
5. भोगभूमेरवाचकाः-अ.
6. विजिहीर्षते-क.

राद्धान्ते — अर्चिरादिशब्दाः कथं देवतावाचिनः इत्यत्राह — वदन्ति च इति ॥ ४ ॥

यद्येवं 'तत्पुरुषोऽमानवः स' ... ...

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४-३-५ ॥

ततः — विद्युतः उपरि, वैद्युनेन ... ... तेषामप्यातिवाहिकत्वेनान्वयो विद्यते एव ॥ ५ ॥ (४५५)

अनन्तरमवतारयति — यद्येवम् इति । वैद्युतेनैव ततस्तच्छ्रुतेः ॥ स्पष्टम् ॥ ५ ॥

इति आतिवाहिकाधिकरणम् — ४

---

## ५. कार्याधिकरणम् ॥

## कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४-३-६ ॥

अर्चिरादिनैव गच्छति विद्वान् ... .... अतोऽर्चिरादिरातिवाहिकगणस्तमेव नयति ॥ ६ ॥ (४५६-४५७)

कार्यं बादरिरस्य गत्युपपत्तेः । सङ्गतिमाह — अर्चिरादिनैव इति । उपास्तिनयत्योः कर्म चतुर्मुखः । [1] सर्वगतत्वात् सार्वज्ञ्यादिगुणपूर्तेः [2] संबन्धस्य च क्वाचित्कत्वाभावात् न गत्यपेक्षा इति परिपूर्णादिपदाभिप्रायः उपास्तिवैयर्थ्यं परिहरति — नित्यप्राप्त इति ॥ ६ ॥

## विशेषितत्वाच्च ॥ ४-३-७ ॥

---

1. सर्वगत्वात्-अ.
2. संबन्धस्य क्वाचित्क-क.

'पुरुषोऽमानव एत्य ब्रह्मलोकान् ... ... हिरण्यगर्भस्य समीपगमनमर्चिरादिना गतः प्रत्यभिसन्धत्ते ॥ ७ ॥ (४५७)

विशेषितत्वाच्च । [1] 'एतं ब्रह्मलोकम्' इत्यत्र स्वीकृतकर्मधारय-व्यावृत्यर्थमाह— बहुवचनेन च इति ॥ ७ ॥

नन्वेवं 'तत्पुरुषोऽमानवः' 'स एनान् ... ...

## सामीप्यात् तु तद्व्यपदेशः ॥ ४-३-८ ॥

'यो ब्रह्माणं विदधाति' इति हिरण्यगर्भस्य .... .... गत्यनु-पपत्तिविशेषणादिभिः उक्तैर्हेतुभिः निश्चीयते इत्यर्थः ॥ ८ ॥ (४५७)

सामीप्यात् तु तद्व्यपदेशः । विशेषणादिभिः इति । आदि-शब्देन गत्युपपत्तिः ॥ ८ ॥

अथ स्यात् — अर्चिरादिना हिरण्यगर्भप्राप्तौ ... ...

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४-३-९ ॥

कार्यस्य — ब्रह्मलोकस्य अत्यये ... .... परामृतात् परि-मुच्यन्ति सर्वे' इति वचनाच्चावगम्यते ॥ ९ ॥ (४५७-४५८)

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् । अयमर्थः किंमानक इत्यत्राह- ते ब्रह्म इति । परामृतात्—परामृतं प्राप्य । ल्यब्लोपे पञ्चमी ॥ ९ ॥

## स्मृतेश्च ॥ ४-३-१० ॥

---

1. 'एतं ब्रह्मलोकम्' इतिवदित्यत्राह- बहुवचनेन च—अ.

स्मृतेश्चायमर्थोऽवगम्यते ... ... कार्यमुपासीनमेवार्चिरादिको गणो नयतीति बादरेर्मतम् ॥ १० ॥ (४५८)

स्मृतेश्च । परस्य — ब्रह्मायुषः ॥ १० ॥

अत्र जैमिनिः पक्षान्तरपरिग्रहेण प्रत्यवतिष्ठते—

## परं जैमिनिर्मुख्यत्वात् ॥ ४-३-११ ॥

परं ब्रह्मोपासीनानर्चिरादिर्नयति ... ... अप्राकृताश्च लोका नात्यन्ताय न सन्ति, श्रुतिस्मृतीतिहासपुराणप्रामाण्यात् ॥ ११ ॥ (४५८-४५९)

[1] पक्षान्तरपरिग्रहेण — पूर्वपक्षादन्येन, न तु कृत्स्नसिद्धान्तेनेत्यर्थः । परं जैमिनिर्मुख्यत्वात् । निश्शेष इति । विद्यानिष्पत्तिः — विद्यायाः [2] कार्यकरत्वदशापत्तिः । नितरां विकासो वा । नित्यत्वेऽपि कालविशेषापेक्षावत् [3] सर्वगतत्वेऽपि देशविशेषापेक्षा युक्तेति भावः । उत्क्रान्त्यनुपपत्त्या न [4] गतिरित्यत्राह— विदुषः इति । स्वेच्छापरिकल्पिताः — नित्येच्छापरिकल्पिताः । नात्यन्ताय इति । [5] न न सन्ति — न सन्ति इति न; [6] सन्त्येव । अत्यन्तं सन्त्येवेत्यर्थः । 'तदक्षरे परमे व्योमन्' इत्यादिमानदार्ढ्यं विवक्षितम् ॥ ११ ॥

## दर्शनाच्च ॥ ४-३-१२ ॥

दर्शयति श्रुतिः मूर्धन्यनाड्या ... ... परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति ॥ १२ ॥ (४५९)

1. पक्षान्तरेण–पक्षादन्येन, न तु सूत्रकृत्सिद्धान्तेनेत्यर्थः–अ.
2. कार्यकरत्वनिष्पत्तिः ।–क.
3. सर्वगत्वेऽपि–अ.
4. तद्गतिः–क.
5. न न सन्तीति–अ.
6. सन्त्येवेत्यर्थः–अ.

दर्शनाच्च । उत्थाय इति । देवयानेन गतिसिद्धिः ॥ १२ ॥

यदुक्तं 'प्रजापतेः सभां वेश्म प्रपद्ये' ... ...

**न च कार्ये प्रत्यभिसन्धिः ॥ ४-३-१३ ॥**

न चायं प्रत्यभिसन्धिः कार्ये ... ... परमेव ब्रह्मोपासीनमर्चिरादिरातिवाहिको गणो नयतीति जैमिनेर्मतम् ॥ १३ ॥
(४५९-४६०)

न च कार्ये प्रत्यभिसन्धिः । स्फुटम् ॥ १३ ॥

इदानीं बादरायणस्तु भगवान् स्वमतेन सिद्धान्तमाह —

**अप्रतीकालम्बनान् नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च ॥ ४-३-१४ ॥**

अप्रतीकालम्बनान् — प्रतीकालम्बनव्यतिरिक्तान् ... ... अचिन्मिश्रोपासने तत्क्रतुन्यायाच्चार्चिरादिना गतिर्ब्रह्मप्राप्तिश्च न विद्यते ॥ १४ ॥  (४६०-४६१)

अप्रतीकालम्बनान् नयतीति बादरायणः उभयथा च दोषात् तत्क्रतुश्च । जैमिनिमतात् को भेद इत्यत्राह— **एतदुक्तम्** इति । **न च** इत्यत्र **प्रतीकालम्बन**शब्दो गोबलीवर्दन्यायात् दृष्ट्युपासकपरः, **कार्यमुपासीनान्** इति पृथगुक्तेः । **तदेतदाह** इति । कार्यमुपासीनस्य कार्यमेव प्राप्यम्, न परं ब्रह्म; [1] **तत्क्रतु**न्यायात् । अतः परप्रापकोऽर्चिरादिर्न तस्येत्यर्थः ॥

1. तत्क्रतुन्यायात् । अतः परप्रापकार्चिरादि.—क.

**अप्रतीकालम्बनान् नयति** इति प्रतिज्ञा व्याहन्येत । 'तद्य इत्थम्' इत्यस्य प्रतीकालम्बनविषयत्वात् इत्यत्राह — **पञ्चाग्नि** इति । 'य इत्थम्' 'ये च' इत्युक्तयोर्द्वयोरपि अप्रतीकालम्बनत्वसाधनाय **तत्क्रतुश्च** इति सूत्रखण्डः । फलस्य यथोपासनत्वात् [1] ब्रह्मप्राप्तिफलोपास्तिनिष्ठः पञ्चाग्निविदपि ब्रह्मोपासननिष्ठः । अतो ब्रह्मप्राप्त्यानुगुण्यात् पृथङ्निर्देशावैयर्थ्याच्च यथोक्त एव तयोर्विभागः । के पुनः प्रतीकालम्बना इत्यत्राह — **नामादि** इति ॥ १४ ॥

**तमिमं विशेषं श्रुतिरेव दर्शयतीत्याह —**

## विशेषं च दर्शयति ॥ ४-३-१५ ॥

**'यावन्नाम्नो गतं तत्रास्य यथाकामचारः ... ... प्रकृतिवियुक्तं ब्रह्मात्मकमुपासीनानातिवाहिको गणो नयतीति सिद्धम् ॥१५॥**

इति कार्याधिकरणम्—५

---

**इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये चतुर्थस्याध्यायस्य तृतीयः पादः ॥**

**विशेषं च दर्शयति । नाम्नो गतम्** — देवादिनामगोचरः । उपसंहरति— **तस्मात्** इति ॥

'ब्रह्मणा सह' इति स्मृतिः न अर्चिरादिगतपुरुषविषया । किं तु चतुर्मुखलोकस्थयोगिविषया । 'ते ब्रह्म' इत्यस्य च निषादस्थपतिनयात्

---

1. ब्रह्मप्राप्तिफलोपास्तिरिति—अ.

ब्रह्माख्यलोके वर्तमानाः चरमदेहान्ते परामृतात् प्रसन्नात् ब्रह्मण एव हेतोः परिमुच्यन्ते इत्यर्थः। कर्मधारयस्य हेतौ पञ्चम्याश्च स्वारस्यात् ॥ १५ ॥

इति कार्याधिकरणम्—५

---

इति हरितकुलतिलकवाग्विजयिसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापर-
नामधेयेन श्रीमद्वरदाचार्यपादसेवासमधिगत श्रीभगवद्रामानुजविरचित-
शारीरकमीमांसाभाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां
श्रुतप्रदीपिकायां चतुर्थाध्यायस्य तृतीयः पादः ॥



# चतुर्थाध्याये चतुर्थः पादः ॥

## १. संपद्याविर्भावाधिकरणम् ॥

### संपद्याविर्भावः स्वेन शब्दात् ॥ ४-४-१ ॥

**परं ब्रह्मोपासीनानामात्मानं च प्रकृतिवियुक्तं ...... 'स्वेन रूपेण' इति विशेषणमनर्थकं स्यात्, अविशेषणेऽपि तस्य स्वकीयरूपत्वसिद्धेः ॥ १ ॥** (४६७-४६८)

**संपद्याविर्भावः स्वेन शब्दात्** । पादसङ्गतिमाह — **परम्** इति । **रूपेण** — आकारेण । **न च दुःख** इति । दुःखनिवृत्तिरिष्टा सुखनिवृत्तिरनिष्टा इति तदुभयान्वयात् मोक्षस्य पुमर्थापुमर्थमिश्रत्वप्रसङ्गः इति भावः । **अनर्थकं स्यात्** इति । [1] अभिनिष्पत्तिशब्दानर्थक्यम् [2] इत्यर्थः ॥

**स्वेन** शब्दः कथमित्यत्राह — **स्वेन** इति । स्व शब्दोऽसाधारणपरः; न स्वनाधपरत्वपरः, अभिनिष्पत्तिवचनात् । **रूपेण अभिनिष्पद्यते** — रूपविशिष्टतया साध्यते; रूपं साध्यमित्यर्थः ॥

राद्धान्ते — **अनर्थकं स्यात्** इति । न ह्यन्यस्य रूपेणान्योऽभिनिष्पद्यते इति असाधारण्यस्यार्थसिद्धत्वात् **स्वेन**शब्दानर्थक्यमित्यर्थः ॥ १ ॥

**यत् तु उक्तं स्वरूपस्य नित्यप्राप्तत्वात् ... ....**

### मुक्तः प्रतिज्ञानात् ॥ ४-४-२ ॥

**कर्मसंबन्धतत्कृतदेहादिविनिर्मुक्तः ... ... 'युक्त्याऽयमर्थो निष्पद्यते' इत्यादिषु ॥ २ ॥** (४६८-४६९)

---

1. अभिनिष्पन्नशब्द-क.
2. इत्यर्थः । राद्धान्ते अनर्थकं-अ. (मध्ये ग्रन्थाभावः)

अनन्तरसूत्रमवतारयति – [1] यत् तु उक्तम् इति । मुक्तः प्रतिज्ञानात् । मुक्त इति प्रतिज्ञापदं व्याचष्टे — कर्म इति । ततः किमित्यत्राह — अतः इति । प्रागसिद्धतिरोधिनिवृत्तिवाचित्वात् नाभिनिष्पत्तिशब्दवैयर्थ्यमित्यर्थः । सा हि इति । सा – तिरोधिनिवृत्तिः । प्रतिज्ञाता — निवृत्ततिरोधानं स्वरूपं प्रतिज्ञातमित्यर्थः । [2] तद्विवरीतुमाह— कुत इति । य आत्मा इत्यादि । एतम् इति पदस्य गुणाष्टकविशिष्टप्रकृतपरत्वात्, गुणाष्टकस्य जागरादौ तिरोहितत्वात्, प्रतिपर्यायम एतम् इत्युक्तिः अकर्मतिरोहितस्वाभाविकरूपाभिप्राया । श्रोतुराशयपरीक्षार्थं जागरादिकथनमित्यर्थः । ततः किमित्यत्राह — अतः इति । शब्दस्य वाचकत्वमाह — स्वरूपाविर्भावेऽपि इति । 'इदमेकं सुनिष्पन्नम्' इत्यादि द्रष्टव्यम् ॥

**यच्चोक्तम् – आत्मस्वरूपस्य सुषुप्तौ . ...**

## आत्मा प्रकरणात् ॥ ४-४-३ ॥

**स्वरूपेणैवायमात्माऽपहतपाप्मत्वादि ... .... विकासरूपाविर्भावो नानुपपन्न इति सुष्ठूक्तं — संपद्याविर्भावः इति ॥ ३ ॥** (४६९-४७०)

अनन्तरमवतारयति— यच्चोक्तम् इति । आत्मा प्रकरणात् । परविषयत्व[3] शङ्कायामाह— इदं च इति । आनन्दस्य हेत्वपेक्षा न [4] आनन्दत्वकृता ; किं तु स्वाभाविकानन्दस्य तिरोहितत्वात् संसारदशायां तदपेक्षा । मुक्तौ स्वतः सिद्धस्य आविर्भाव एवेति न तस्योपाध्यपेक्षा । अतो न मोक्षशास्त्रस्यापुमर्थपर्यवसायित्वमित्यर्थः ॥ ३ ॥

इति संपद्याविर्भावाधिकरणम्—१

---

1. यदुक्तमिति–अ.
2. तद्विवरीतुमाह—य आत्मा इत्यादिना-क.
3. शङ्कामाह–अ.
4. आनन्दित्व–अ.

## २. अविभागेन दृष्टत्वाधिकरणम् ॥

## अविभागेन दृष्टत्वात् ॥ ४-४-४ ॥

**किमयं परं ज्योतिरुपसन्नः सर्वबन्धविनिर्मुक्तः ... ... 'अधिकं तु भेदनिर्देशात्' 'अधिकोपदेशात्' इत्यादि च ॥ ४ ॥**
(४७२-४७३)

**अविभागेन दृष्टत्वात्** । सङ्गतिः [1] स्पष्टा । **साम्यसाधर्म्य-शब्दौ** वचनस्थत्वादुपात्तौ, नार्थभेदात् । **सहश्रुत्या साम्यसाधर्म्योक्त्या** च [2] क्षीरोदनयोरिव रक्तयोरिव च मुक्तौ स्वनिष्ठत्वावगमात् मुक्तदशावस्थित-रूपस्य तात्त्विकत्वात् उपायपरवाक्यादीनां तद्विरुद्धार्थपरत्वायोगात् स्वात्मकत्वेन ब्रह्मानुभवो न युक्त इति [3] अभेदश्रुत्यर्थाक्षेपेण उत्थानम् ॥

राद्धान्ते — दृष्टत्वमस्तु ; ततः किमित्यत्राह — **स्वात्मनः** इति । **सह** इति । [4] ब्रह्मपर्यन्तत्वेनानुभवः सहश्रुतेः भोग्यसाहित्यपरत्वादुपपद्यते इत्यर्थः । मुक्तिविषयवाक्येष्वेव अभेददर्शनात् तस्य घटकश्रुतिनिर्वाहित-भेदश्रुत्यविरोधित्वात् स्वात्मशरीरकब्रह्मानुभव **इति** सिद्धान्तः । व्याख्या-न्तरमते पूर्वापरवैघटयमाह — **ब्रह्मप्रकारतया** इति ॥ ४ ॥

इति अविभागेन दृष्टत्वाधिकरणम्—२

---

1. स्फुटा—क.
2. क्षीरोदनयोरिव च मुक्तौ—क
3. अभेदश्रुत्याक्षेपेण—क.
4. ब्रह्मपर्यन्तत्वेनानुभवात्—क.

३ ब्राह्माधिकरणम् ।

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४-४-५ ॥**

प्रत्यगात्मनः परं ज्योतिरुपसंपद्य ... ... विज्ञानमात्र-स्वरूपत्वं न संभवतीति जैमिनेर्मतम् ॥ ५ ॥ (४७४)

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । प्रथमाधिकरणेनास्य सङ्गतिमाह– **प्रत्यगात्मनः** इति । ब्राह्मत्वं कथमित्यत्राह – **अपहतपाप्मत्वादयो हि** इति । ज्ञानत्वे ज्ञानाद्याश्रयत्वायोगात् स्वरूपं जडमिति [1]जैमिनेर्मतम् ॥ ५ ॥

**चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ४-४-६ ॥**

चैतन्यमात्रमेवास्य स्वरूपमिति ... ... चिति तन्मात्र-रूपेणाविर्भाव इत्यौडुलोमेर्मतम् ॥ ६ ॥ (४७५)

चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः । तृतीयानिर्देश औपचारिकः । **विकारसुख** इति । **आदिशब्दात्** उपेक्षा । **सत्यकामत्वम्**– कादाचित्कसुखराहित्यम् । **सत्यसङ्कल्पत्वम्** — उपेक्षाराहित्यम् । न ह्युपेक्षकः सत्यसङ्कल्पः इति पूर्वपक्षिणो भावः ॥ ६ ॥

**संप्रति भगवान् बादरायणः स्वमतेन सिद्धान्तमाह —**

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ४-४-७ ॥**

एवमपि – विज्ञानमात्रस्वरूपत्वप्रतिपादने सत्यपि .... .... सर्वत्र विज्ञानस्वरूपत्वम्; स्वप्रकाशस्वरूपत्वमित्यर्थः ॥ ७ ॥ (४७६-४७७)

---

1. जैमिनिमतम्-क.

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः** । गुणाष्टकवाक्ये सत्यपि हि तत्पूर्वोक्तिरिति शङ्कायां तात्पर्यमाह — **तुल्य** इति । एवकारो वाक्यशेषः, न स्वतन्त्रः ; अवधारणस्य अवधारणीयविशेषसाकांक्षत्वात् । तेन बहूनां शेषिणां वाक्यानां न भङ्गो न्याय्यः । अतः एवकारभङ्गेन वाक्यद्वयार्थाविरोधो नेय इत्यर्थः । **वस्तुविरोधः** — ज्ञानस्य ज्ञानाद्याश्रयत्वायोगः । सः पूर्वमेव परिहृतः । **अशक्यस्य** — बाधितुमशक्यस्य ॥

**एवमपि** इत्यादिवाक्यादेव सुव्यक्तत्वं तदेकदेशदृष्टान्तवाक्येनोपपादयति — **स यथा** इति । तेन दार्ष्टान्तिकेऽप्यविरोधमाह — **न चैवम्** इति । दृष्टान्तवाक्येऽप्यविरोधः कथमित्यत्राह — **यथा** इति । [1] दृष्टान्तवाक्यगतावधारणस्य कोऽर्थः, कस्तत्रोपजीव्यांश इत्यत्राह — **इदमत्र वाक्य** इति । विज्ञानस्वरूपत्वं विवृणोति — **स्वप्रकाश** इति ॥ ७ ॥

इति ब्राह्माधिकरणम्-३

## ४. सङ्कल्पाधिकरणम् ॥

## सङ्कल्पादेव तच्छ्रुतेः ॥ ४-४-८ ॥

**मुक्तः परं ब्रह्मोपसंपद्य ... ... 'विज्ञानघन एव' इतिवत् व्यवस्थापनं क्रियते ॥ ८ ॥** (४७८)

**सङ्कल्पादेव तच्छ्रुतेः** । सङ्गतिमाह — **मुक्त** इति । प्रयत्नशब्दः सङ्कल्पव्यतिरिक्तव्यापारपरः । [2] एवकारः अयोगव्यवच्छेदकः इति पूर्वपक्षः ।

राद्धान्ते —सङ्कोचकाभावात् अन्ययोगमपि व्यवच्छिनत्ति इत्यभिप्रायः ॥

1. दृष्टान्तवाक्यस्थावधारण-अ. 2. एवकारो गुणयोगः-अ.

**अत एव चानन्याधिपतिः ॥ ४-४-९ ॥**

यतो मुक्तः सत्यसङ्कल्पः, अत एव ... .... अत एव 'स स्वराट् भवति' इत्युच्यते ॥ ९ ॥ (४७८)

अत एव चानन्याधिपतिः । [1]सत्यसङ्कल्पहेतुकं गुणान्तरमिहोक्तम् । अनन्याधिपतिः — परमात्मव्यतिरिक्तं प्रति न परतन्त्र इति भावः, अन्यथा अनन्यशब्दवैयर्थ्यात् । अर्थमाह — अत एव इति ॥

इति सङ्कल्पाधिकरणम—४

## ५. अभावाधिकरणम् ॥

**अभावं बादरिराह ह्येवम् ॥ ४-४-१० ॥**

किं मुक्तस्य देहेन्द्रियाणि न सन्ति ... ... इति मुक्तस्याशरीरत्वं ह्याह श्रुतिः ॥ १० ॥ (४८०)

अभावं बादरिराह ह्येवम् । सङ्गतिर्विचारेण स्फुटा ॥ १० ॥

**भावं जैमिनिर्विकल्पामननात् ॥ ४-४-११ ॥**

मुक्तस्य शरीरेन्द्रियभावं जैमिनिः ... ... तदेव हि शरीरं प्रियाप्रियहेतुः ॥ ११ ॥ (४८०)

भावं जैमिनिर्विकल्पामननात् । अशरीरत्वेऽपि प्रियाप्रिययोः कर्ममूलत्वात् कर्मारब्धदेहनिषेध इत्यर्थः ॥ ११ ॥

भगवांस्तु बादरायणः स्वमतेन सिद्धान्तमाह —

1. सत्यसङ्कल्पहेतुत्वगुणान्तरम्–अ

**द्वादशाहवदुभयविधं बादरायणोऽतः** ॥ ४-४-१२ ॥

'सङ्कल्पादेव' इत्येतदतःशब्देन ... ... उपैतियजतिचोदनाभ्यां सङ्कल्पभेदेन सत्रमहीनं च भवति ॥ १२ ॥ (४८०-४८१)

द्वादशाहवदुभयविधं बादरायणोऽतः । उपैतियजतिचोदनाभ्याम् । यजमानबहुत्वैकत्वाभ्यां च सत्रमहीनं च [1] द्वादशाहं तद्वदित्यर्थः ॥ १२ ॥

यदा शरीराद्युपकरणवत्त्वम् ··· ···

**तन्वभावे सन्ध्यवदुपपत्तेः** ॥ ४-४-१३ ॥

स्वेनैव सृष्टतनुप्रभृत्युपकरणाभावे ··· ··· लीलाप्रवृत्तेनेश्वरेण सृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते ॥ १३ ॥ (४८१)

अनन्तरसूत्रं सङ्गमयति — यदा इति । तन्वभावे सन्ध्यवदुपपत्तेः । परमपुरुषसृष्टैः — अद्वारकसृष्टैः ॥ १३ ॥

**भावे जाग्रद्वत्** ॥ ४-४-१४ ॥

स्वसङ्कल्पादेव सृष्टतनुप्रभृति ··· ··· स्वपितृलोकादिकं स्वयमेव सृजन्तीति सर्वमुपपन्नम् ॥ १४ ॥ (४८१)

भावे जाग्रद्वत् । मुक्तस्य पित्रादिसर्गेण, ब्रह्मणि भोग्यतावैकल्यम्, अस्यान्यपरत्वं, पित्रादीच्छायाः कर्महेतुकत्वं च परिहरन् सद्वारकाद्वारकपित्रादिसृष्टेः [2] तल्लीलान्तर्गतत्वमाह— परमपुरुषोऽपि इति ॥ १४ ॥

ननु — आत्मा अणुपरिमाण इत्युक्तम् ··· ···

**प्रदीपवदावेशस्तथा हि दर्शयति** ॥ ४-४-१५ ॥

1. द्वादशाहः-क. 2. तल्लीलान्तर्भावम्-क

**यथा प्रदीपस्यैकस्यैकस्मिन् देशे ... ... अमुक्तस्य कर्म नियामकम् । मुक्तस्य तु स्वेच्छेति विशेषः ॥ १५ ॥** (४८१-४८२)

अनन्तरसूत्रशङ्कामाह— **ननु** इति । **प्रदीपवदावेशस्तथा हि दर्शयति** । तर्हि ज्ञानेन वस्त्वन्तराण्यप्यधितिष्ठेदित्यत्राह— **इयान्** इति । **आत्माभिमानानुगुण्यम्** — प्रवर्तकत्वशक्तिवैशिष्ट्यम् । शरीरं हि प्रेर्यम् । **इदमिति ग्रहणानुगुणत्वम्**— प्रकाशकत्वशक्तिमात्रान्वितत्वम् । यद्येण [1]अनेकत्र व्याप्तिविषया श्रुतिः । सौभर्यादिभ्यो मुक्तस्य को भेदः? अनेकदेहाधिष्ठानक्षमश्चेत् पूर्वावस्थायामपि करोतु [2] इत्यत्राह— **अमुक्तस्य** इति ॥ १५ ॥

**ननु — परं ब्रह्म प्राप्तस्यान्तरबाह्यज्ञानलोपं ... ...**

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि** । ४-४-१६ ॥

**नेदं वचनं मुक्तविषयम् ... ... वचनं स्वाप्ययसंपत्त्योरन्यतरापेक्षम् ॥ १६ ॥** (४८२-४८३)

अनन्तरस्य शङ्कामाह— **ननु** इति । **स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि** । 'सता सोम्य' इति स्वापे ब्रह्मसंपत्तेः प्रसिद्धत्वात्, उत्क्रान्तौ ब्रह्मसंपत्तिवाक्यं दर्शितम्— **तेजः परस्याम्** इति । [3] अस्य मृतिविषयत्वं '**वाङ्मनसि**' इत्यादिना ज्ञापितम् । इति **वचनात् विद्येते** इत्यन्वयः ॥

सूत्रखण्डान्तरं व्याचष्टे— **सुषुप्ति** इति । 'सता सोम्य' '**तेजः परस्याम्**' इत्युभयमिहानुसन्धेयम् ॥ १६ ॥

इति अभावाधिकरणम्—५

---

1. अनेकव्याप्ति-क. 2. इत्यत आह-क. 3. अस्या मुक्तिविषयत्वं-क

## ६. जगद्व्यापारवर्जाधिकरणम् ॥

### जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥ ४-४-१७ ॥

किं मुक्तस्यैश्वर्यं जगत्सृष्ट्यादि परमपुरुषासाधारणं ... ... मुक्तस्य सन्निधानमस्ति, येन जगद्व्यापारस्तस्यापि स्यात् ॥ १७ ॥ (४८६-४८७)

जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च । जगत्सृष्ट्यादि सर्वेश्वरत्वम् इति । ईश्वरत्वप्रकारो हि सृष्ट्यादिः । अत एवमुक्तम् । सत्यसङ्कल्पताविचाररूपत्वात् सङ्गतिः ॥

राद्धान्ते — निर्व्याजशब्दो यथावस्थितपरः । कन्या मनः, प्रकाशकत्वात् । कनतिर्हि दीप्त्यर्थः । सौवहेतुद्वयेन ब्रह्मलक्षणस्य कारणत्वस्य अव्याप्त्यतिव्याप्तिव्युदासः ॥ १७ ॥

### प्रत्यक्षोपदेशान्नेति चेन्नाऽऽधिकारिक-मण्डलस्थोक्तेः ॥ ४-४-१८ ॥

'स स्वराड् भवति तस्य सर्वेषु लोकेषु ... ... ... अनुभवतीत्यनेन वाक्येनोच्यते ; न जगद्व्यापारः ॥ १८ ॥ (४८७)

परप्रकरणे जगद्व्यापारोक्तिर्मुक्तस्य मा भूत्, स्वप्रकरणे त्वस्तीत्यत्राह— प्रत्यक्षोपदेशान्नेति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः । अकर्मवश्यस्य कथं ब्रह्मानुभवव्यतिरिक्तापेक्षेत्यत्राह— अकर्मप्रतिहत इति । सूत्रार्थं निगमयति— तदेवम् इति ॥ १८ ॥

यदि संसारिवत् मुक्तोऽपि ... ...

### विकारावर्ति च तथा हि स्थितिमाह ॥ ४-४-१९ ॥

